University of Mysore

Oriental Library Publications

SANSKRIT SERIES No. 37 64.

# कौटिलीयं अर्थशास्त्रम्

# ARTHASASTRA OF KAUTILYA

REVISED AND EDITED



BY

DR. R. SHAMA SASTRY, B.A., PH.D., M.R.A.S.,

*Curator, Government Oriental Library, Mysore; Director of Archæological Researches in Mysore, Periodical Lecturer to the Post-Graduates' Classes of the Calcutta University, and B.B.R.A.S. Campbell Memorial Medalist*





MYSORE

PRINTED AT THE GOVERNMENT BRANCH PRESS

1924

# प्रथममुद्रणस्य उपोद्घातः.

इह तावद्विष्णुगुप्तश्चाणक्य इति च विख्यातोऽर्थशास्त्रप्रवीणः कौटिल्यो नाम ब्राह्मणः क्रिस्ताब्दारम्भात्पूर्वं वत्सराणां चतुर्थे शतके नन्दवंशमुन्मूल्य चन्द्रगुप्तमभिषेषेचेति विष्णुपुराणात् ज्ञायते:—

"महापद्मः; तत्पुत्राश्चैकं वर्षशकमवनीपतयो भविष्यन्ति नवैव। तान्नन्दान्कौटिल्यो ब्राह्मणस्समुद्धरिष्यति. तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति. कौटिल्य एव चन्द्रगुप्तं राज्योऽभिषेक्ष्यति तस्यापि पुत्रो बिन्दुसारो भविष्यति. तस्याप्यशोकवर्धनः" इति विष्णुपुराणे चतुर्थांशे चतुर्विंशाध्याये स्पष्टमभिहितं दृश्यते.

क्रिस्ताब्दारम्भात्पूर्वं द्वासप्तत्यधिकशतद्वयपरिमिते वर्षे समारूढराज्यसिंहासनेन चन्द्रगुप्तपौत्रेणाङ्गीकृतबौद्धविज्ञानिनाशोकवर्धनेन भरतखण्डचक्रवर्तिना ये प्रत्युप्तबौद्धधर्माश्शिलास्तम्भा न्यखानिषत तेऽद्यापि दरीदृश्यन्ते. अशोकपितामहश्चन्द्रगुप्तोऽपि क्रिस्ताब्दारम्भात्पूर्वं सप्तविंशत्यधिकशतत्रयपरिमितेषु वर्षेषु राज्यं चकारेति पाश्चात्यराजचरित्रादपि बाढं ज्ञायते. तस्यैतस्य चन्द्रगुप्तस्य सचिवः कौटिल्यः प्राचीनाचार्यविरचितार्थशास्त्राणि संक्षिप्यैकमिदं षट्सहस्रग्रन्थपरिमितमर्थशास्त्रं[1] प्रणिनायेत्येतस्मादेवार्थशास्त्रादिव दण्डिविरचितादशकुमारचरितादपि स्पष्टमाकलयते—

"अधीष्व तावद्दण्डनीतिम्. इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैस्सङ्क्षिप्ता. सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्त कर्मक्षमेति" इति दशकुमारचरितेऽष्टम उच्छ्वासे चन्द्रगुप्तोपदेशायैवेदमर्थशास्त्रं कृतमिति दण्डिना विशदीकृतम्. एवं च—

---

1 प. ६ अर्थशास्त्रम्.

“ सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च ।
कौटिल्येन नरेंद्रार्थे शासनस्य विधिः कृतः ” ॥

इत्यध्यक्षप्रचारे दशमेऽध्याये प्रयुक्तो नरेंद्रशब्दो मौर्यचन्द्रगुप्तमेवाभिदधातीति भाति

ये चार्थशास्त्रविषया दण्डिना “इयत ओदनस्य पाकायैतावदिन्धनम्” इत्यारभ्य “प्राहसीत्प्रफुल्ललोचनः प्रमदाजनः[1]” इत्यन्तेन ग्रन्थजालेन प्रमदाजनहास्यास्पदतां नीतास्तेऽप्येतदर्थशास्त्रगता एवेत्यधस्ताद्दर्शितटिप्पण्यां बाढमाकलयितुं शक्यते—

| | |
|---|---|
| (1) “इयत ओदनस्य पाकायैतावदिन्धनम्” | (1) “काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम्” अधि. II. अध्या. 19. |
| (2) “कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे भागे श्रोतव्यम्.” | (2) “दिवसस्याष्टमे भागे रक्षाविधानमायव्ययौ च शृणुयात्” अधि. I, अध्या. 19. |
| (3) “चत्वारिंशच्चाणक्योपदिष्टानाहरणोपायान्सहस्रधाऽऽत्मबुद्ध्यैव विकल्पयितारः.” | (3) “तेषां हरणोपायाश्चत्वारिंशत्........--” अधि. II, अध्या. 8. |
| (4) “द्वितीयेऽन्योन्यं विवदमानानां तृतीये स्नातुं भोक्तुं च चतुर्थे हिरण्यप्रतिग्रहाय.” | (4) “द्वितीये पौरजनपदानां कार्याणि पश्येत्. तृतीये स्नानभोजनं सेवेत. स्वाध्यायं च कुर्वीत. चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत.” अधि I, अध्या. 19. |
| (5) “भुक्तस्य च यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव.” | (5) “अग्नेर्ज्वालाधूमनीलता: . . . इति विषयुक्तलिङ्गानि.” अधि I, अध्या. 20. |

अपि च "किं वा तेषां साम्प्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणं, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसन्धानपरा मन्त्रिणः उपदेष्टारः, नरपतिसहस्रोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः"[1] इति कादम्बर्यां बाणेनापि कौटिलीयार्थशास्त्रे कण्टकशोधनाद्यधिकरणेषु प्रतिपादिता दूष्यवधाद्युपायास्स्पष्टं निन्दिता दृश्यन्ते. पुरातनप्रसिद्धश्रीहर्षादिराजास्थानेषु माननीयपदवीमारूढैः बाणादिभिः विद्वद्भिः कृतैषैव निन्दाऽर्थशास्त्रोपदेशाधिकाराय कारणमभूदिति स्पष्टमवगम्यते. अतश्च बान्यर्थशास्त्राणि "मानवाः," "औशनसाः," "बार्हस्पत्याः," "विशालाक्षः," "पिशुनः," "वातव्याधिः" इति कौटिल्येन तत्तद्ग्रन्थकृन्नाम्नाऽनूदितानि तान्युत्तरकालिकविद्वद्भिर्धिक्कृतानि खिलान्यासन्निति बाढं सुवचम्.

किं च—क्रिस्ताब्दारम्भात्पूर्वमुत्तरं वा भरतखण्डमपहाय बलिद्वीपमाश्रितवद्भिरार्यजनैः यः कामन्दकीयनीतिसारो नाम राजनीतिग्रन्थः सङ्गृहीतोऽद्यापि बलिद्वीपे दृश्यते इति श्रूयते तस्मिन्नीतिसारे ग्रन्थादौ—

"नीतिशास्त्रामृतं धीमानर्थशास्त्रमहोदधेः ।
समुद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे" ॥

इति वदता कामन्दकेनापि कौटिलीयार्थशास्त्रमेतदेव बाढं परिज्ञातपूर्वमासीदिति न कोऽपि सन्देहः.

किंच—"ततो धर्मशास्त्राणि मन्वादीन्यर्थशास्त्राणि चाणक्यादीनि कामशास्त्राणि वात्स्यायनादीनि" इति पञ्चतन्त्रे कथामुखे वदन् पञ्चतन्त्रकर्ताऽपि कौटिलीयार्थशास्त्रे कृतपरिचयोऽभूदिति स्पष्टमवगम्यते.

---

[1] P. 109. Kadambari, Bombay Education Society's Press.

यच्च नन्दिसूत्रनामके जैनग्रन्थे—

"खमए अमच्चपुत्ते चाणक्के चेव थूलवद्दय"।[1]

(क्षपकः अमात्यपुत्रः चाणक्यश्चैव स्थूलभद्रश्च) इति क्षपकामात्यपुत्रचाणक्यस्थूलभद्राणां पारिणामिकीं बुद्धिं दृष्टान्तद्वारेण विशदीकृत्य "भारहं रामायणं भीमासुरक्कं कौडिल्लियम्"[2] इति भारतरामायणभीमासुरीयककौटिलीयकानि मिथ्याशास्त्रत्वेन निर्दिष्टानि, तत्र कौटिलीयशब्देनैतदेव चाणक्यकृतमर्थशास्त्रमभिप्रेतमिति बाढं सुवचम्.

यच्च यशोधरमहाराजसमकालेन सोमदेवसूरिणा नीतिवाक्यामृतं नाम नीतिशास्त्रं विरचितं तदपि कामन्दकीयमिव कौटिलीयार्थशास्त्रादेव सङ्क्षिप्य सङ्गृहीतामिति तद्ग्रन्थपदवाक्यशैलीपरीक्षायां निस्संशयं ज्ञायते.

मल्लिनाथसूरिणाऽपि रघुवंशे सप्तदशसर्गे एकोनपञ्चाशश्लोकव्याख्याने षट्सप्ततितमश्लोकव्याख्याने च, तथाऽष्टादशसर्गे पञ्चाशश्लोकव्याख्याने चार्थशास्त्रीयपारिभाषिकशब्दाभिधेयप्रमाणतया कौटिलीयार्थशास्त्रपङ्क्तिरुदाहृता दृश्यते.

अतश्च क्रिस्ताब्दारम्भादा च क्रिस्ताब्दानां पञ्चदशशतकादर्थशास्त्रमिदं विद्वद्भिः कृतपरिचयं प्रथितमासीदिति स्पष्टम्.

यच्चैतदर्थशास्त्रस्य याज्ञवल्क्यस्मृतिव्यवहारकाण्डस्य चेतरस्मृत्यसाधारणमानुपूर्वीसाम्यं तत्र तत्राधस्तनटिप्पण्यामत्र ग्रन्थे प्रदर्शितं तत्रेयमाशङ्का प्रसरति—किमिदमर्थशास्त्रं याज्ञवल्क्यस्मृत्युत्तरकालिकमथवा सैव स्मृतिरेतदर्थशास्त्रोत्तरकालिका, आहोस्विदेतद्ग्रन्थद्वयमप्युभयसाधारणग्रन्थान्तरानुरोधि ? इति.

तत्र "युक्तकर्मणि चायुक्तस्य"[3] इति राज्यकार्येऽनाधिकृतस्य

[1] प. 133 नान्दिसूत्रम्. [2] प. 391 नान्दिसूत्रम्. [3] प. 199 अर्थशास्त्रम्.

राज्याधिकृतकार्यकरणे दण्डविधानपरमर्थशास्त्रवाक्यं, "अयोग्यो योग्यकर्मकृत्" इत्ययोग्यस्य शूद्रादेर्योग्यब्राह्मणादिकर्मकरणे दण्डः इत्यर्थान्तरे प्रयुञ्जानस्स्मृतिकर्ता प्रायेण चाणक्योत्तरकालिक एव स्यादिति भाति. किं च "शापथवाक्याभियोगमनिसृष्टं कुर्वतः"[1] इति राजाननुज्ञातस्य प्रमाणपूर्वकं चोरादिवाक्यकर्मपरीक्षायां दण्डविधायकमर्थशास्त्रवाक्यं, "अयुक्तं शपथं कुर्वन्" इत्यनुचितशपथकरणे दण्डविधानपरत्वेन स्मृतौ व्यत्यस्तं दृश्यते. तथा "पाणिपाददन्तभङ्गे कर्णनासाच्छेदने प्राणविदारणे चान्यत्र दुष्टव्रणेभ्यः"[2] इति दुष्टव्रणोद्भेदनिमित्तान्यनिमित्तकरादिच्छेदने प्राणविदारणे च दण्डविधायकमर्थशास्त्रवाक्यं "करपाददतो भङ्गे छेदने कर्णनासयोः। मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा।" इति व्रणोद्भेदेऽपि दण्डविधायकपरत्वेन स्मृतौ व्यत्यस्तं दृश्यते. एते चान्येऽपि व्यत्यस्तविषयाः यथावदर्थज्ञानमूलका वा स्वोत्प्रेक्षामूलका वेति याज्ञवल्क्यत्वेनाधुनोपलभ्यमानास्स्मृतेरुत्तरकालिकत्वं स्पष्टयन्ति.

अथापि चाणक्यात्पूर्वं न धर्मशास्त्राण्यासन्निति वक्तुं न शक्यते। यतः "शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्। न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति[3] ॥" इति न्यायविरुद्धस्य धर्मशास्त्रवचनस्य स्वमूलश्रुतिपाठाज्ञानमूलकत्वेन त्याज्यतां वदता कौटिल्येन स्वकालेऽपि धर्मशास्त्रसत्ता स्पष्टमभ्युपगता दृश्यते. याज्ञवल्क्यस्मृतावपि "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इति चाणक्योक्तिविपरीतमेवोक्तं दृश्यते. अतश्च याज्ञवल्क्यस्मृतिकर्तुः कालेऽर्थशास्त्रमासीदिति चाणक्यस्य काले च धर्मशास्त्रमासीदिति च सिद्धम्, परं तु चाणक्यस्य कालेऽधुनोपलभ्यमानं याज्ञवल्क्यधर्मशास्त्रं नासीदिति भाति. न ह्येककाल एव व्रणोद्भेदोऽपराधोऽनपराध

---

[1] प. 199 अर्थशास्त्रम्. [2] प. 195 अर्थशास्त्रम्. [3] प. 150 अर्थशास्त्रम्.

इति च गृह्यते. नाप्येककाल एव युक्तायुक्तशब्दौ राज्याधिकृतानधिकृतपरत्वेन योग्यायोग्यपरत्वेन च प्रयुज्येते. अतश्च चाणक्यकालिकं धर्मशास्त्रमधुनातनायाज्ञवल्क्यधर्मशास्त्रादन्यदेवासीदिति भाति. एवमेव ये पुनर्मानवबार्हस्पत्यौशनसा भिन्नाभिप्रायास्तत्रतत्र कौटिल्येन परामृष्टाः न तेऽधुनोपलभ्यमानेषु तत्तद्धर्मशास्त्रेषु दृश्यन्त इति कौटिल्यपरामृष्टानि तानि शास्त्राण्यन्यान्येवेति बाढं सुवचम्.

यत्तु न कोऽपि ग्रन्थकर्ता स्वनामनिर्देशपूर्वकं स्वाभिप्रायं व्यनक्तीत्यधुनातनसम्प्रदायमुररीकृत्य केचित्पाश्चात्याविद्वांसः "इति बादरायणः", "इत्याह बोधायनः", "नेति कौटिल्यः", इति निर्दिष्टबादरायणबोधायनादिनामानो ग्रन्था न बादरायणबोधायनादिकृता इति मन्यन्ते तत्प्राचीनार्यविद्वत्संप्रदायानवबोधमूलकमेव । पराभिप्रायनिराकरणपूर्वकं स्वाभिप्रायप्रकटनं हि ग्रन्थकृतामस्मच्छब्दप्रयोगेण वा स्वनामनिर्देशेन वा कर्तुं शक्यते अहन्ताबोधकास्मच्छब्दप्रयोगोऽहन्तात्यागे बद्धमानसेभ्यो भरतखण्डीयविद्वद्भ्यो नाद्यापि रोचते, अतश्च स्वनामनिर्देशेनैव स्वाभिप्रायप्रकटनमनुलङ्घनीयमासीत्. तथा च "इति कौटिल्यः" इत्यनेकशोऽत्रार्थशास्त्रे प्रयोगे दृश्यमानेऽपि नेदमर्थशास्त्रं कौटिल्यकृतमपि तु तच्छिष्यकोटौ केनचिद्विरचितमिति न युक्तं वक्तुम् । अतश्च—

"येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्"[1] ॥

इतीदंशब्दप्रयोगोऽस्य ग्रन्थस्य चाणक्यकृतत्व एव युज्यते.

किञ्च मन्वादिस्मृतीनां भिन्नकर्तृतायां न केवलम् मन्वादिबोधितत्वेन चाणक्येन परामृष्टानामभिप्रायाणामधुनोपलभ्यमानासु तासु स्मृतिष्वभाव एव कारणमपितु "एतद्वोऽयं भृगुश्शास्त्रं श्रावयि-

[1] अधि. XV, अध्या I.

ष्यत्यशेषतः'' इति मानवीयं वचनं, याज्ञवल्क्यस्मृतेस्तु ''याज्ञवल्क्यशिष्यः कश्चन प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं सङ्क्षिप्य कथयामास यथा मनुप्रोक्तं भृगुः'' इति विज्ञानेश्वरवचनं च कारणं दरीदृश्यते. कौटिलीयार्थशास्त्रविषये तु न तादृशं कारणं दृश्यत इतीदमर्थशास्त्रं कौटिल्यकृतमेवेति सुवचम्.

अर्थशास्त्रापेक्षया धर्मशास्त्रस्य प्राबल्याभ्युपगमे त्र कारणानि न दुरूहाणि. गूढचारमुखाद्दूष्यज्ञानं, दूष्यवधोपायाः, परस्परद्वेषनिमित्तं, विवाहबन्धमोचनं, प्रोषितभर्तृकाणां मृतभर्तृकाणां च स्त्रीणां पुनर्विवाहः, ऋतुमत्यास्स्वयंवरणं, दुर्भिक्षोपद्रवनिवारणाय धनिकानां वमनं कर्शनं वा, औपनिषदिकाधिकरणोक्ताः काणकुष्ठादियोगाः, इत्यादयोऽर्थशास्त्रोपदिष्टाः निखिलजनद्विष्टा उपायाः धर्मशास्त्रकारैर्दूरीकृता इति भाति.

यथा ग्रीक्जनाः भरतखण्डीयराज्यनीतिमवर्णयन् तथैवात्रार्थशास्त्रे प्रतिपादिता राजनीतिरिति 'विन्सेंट् स्मित्' नाम्ना पाश्चात्यविदुषा स्वीयभरतखण्डचारित्रे समुल्लिखितं दृश्यते. अतश्चास्यार्थशास्त्रस्य प्राचीनता बाढं परिदृश्यते.

कोशान्तरानुपलम्भात्तालपत्रेषु ग्रन्थाक्षरैर्लिखितामेकामेव मूलमातृकां, द्वितीयाधिकरणाष्टमाध्यायादारभ्य अधिकरणसमाप्तिपर्यन्तमुपलब्धां भट्टस्वामिकृतां प्रतिपदपञ्चिकानाम्नीं व्याख्यां च परीक्ष्यैतद्ग्रन्थमुद्रणं साधितम्.

MYSORE,
*5th November 1908.*

R. SHAMA SASTRY.

# द्वितीयमुद्रणस्य उपोद्धातः

इह खलु 1909 तमे क्रिस्ताब्दे प्रकाशितादर्थशास्त्रस्य प्रथममुद्रणादा चाद्यतने 1919 तमे क्रिस्ताब्दे प्रकाश्यमानाद्वितीयमुद्रणाद्गतेषु दशसु वत्सरेषु नीतिशास्त्रमिदमहमहमिकयाऽधीयानेषु पाश्चात्येषु विद्वत्सु संस्कृतविद्याकोविद. कीत्नामा विद्वान् 'अर्थशास्त्रप्रणेता विष्णुगुप्तः कामशास्त्रप्रणेतुर्वात्स्यायनात्प्रायेण नान्य इति संभावयामास. संभावनायाश्चास्या हेमचन्द्ररचिता अभिधानाचिन्तामणिर्यादवप्रकाशप्रणीता वैजयन्ती च मूलमित्यवगम्यते. तत्र हि

> वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः ।
> द्रामिलः पक्षिलस्स्वामी विष्णुगुप्तोऽङ्गुलश्च सः ॥

इति हेमचन्द्रेण,

> वात्स्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः ।
> द्रामिलः पक्षिलस्स्वामी मल्लनागोऽङ्गुलोऽपि च ॥

इति यादवप्रकाशेन च कौटिल्यस्य वात्स्यायन इत्यपरं नामधेयं दत्तं दृश्यते.

भोजराजरचितायां नाममालिकायां तु वात्स्यायनशब्दस्थले कात्यायनशब्दः पठितो दृश्यते. यथा—

> कात्यायनो वररुचिर्मेधजिच्च पुनर्वसुः ।
> कात्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः ।
> द्राविलः पक्षिलस्स्वामी मल्लनागोऽङ्गलोपि च ॥ इति ।

किमत्र कात्यायनशब्दो भोजेनैव पठितः अथवा लेखकेन वात्स्यायनः कात्यायनः इति लिखितेऽप्यन्यत्र वात्स्यायनशब्दं दृष्ट्वा प्रमाणान्तर

मवलम्ब्य वा भोजोत्तरकालिकाभ्यां हेमचन्द्रयादवप्रकाशाभ्यां कौटिल्यो वात्स्यायनापरनामधेयः कृतो वा? इति बहवः प्रश्नास्स्वयमेव प्रसरन्ति। यदि कात्यायनशब्द एव भोजानुमतः पाठस्स्यात्तदा वात्स्यायनशब्द-पाठः प्रमाद एवेति कौटिल्यस्य वात्स्यायनभिन्नता दूरापास्ता भवेत्। यदि तु वात्स्यायनशब्दपाठ एवानुमतस्स्यात्, तदा नन्द-समकालिकः कौटिल्य इति विष्णवादिपुराणवाक्यानि दण्डिवाक्यं च दत्तजलाञ्जलीनि स्युः। तथाहि—

नन्दान् हत्वा कौटिल्यो नन्दराज्ये चन्द्रगुप्तमभिषिषेचेति विष्णवा-दिपुराणवाक्येभ्यः मौर्यचन्द्रगुप्तार्थं चाणक्योऽर्थशास्त्रं विरचयामासेति दण्डिवाक्याच्च कौटिल्यः क्रिस्तात्प्रागब्दानां चतुर्थे शतकेऽजीवदिति ज्ञायते। "कर्तर्या कुन्तलश्शातकर्णिश्शातवाहनो महादेवीं मलयवतीं जघान" इति कामसूत्रे (II. 7) अभिदधानो वात्स्यायनस्तु क्रि-स्ताब्दानां 137 तमाद्वत्सराद्वा च 209 तमाद्वत्सराद्भरतखण्डस्य पश्चि-मप्रान्तेषु कृतराज्यानुशासनानां शातवाहनानां वंश्येन शातकर्णिना समकालिको वा आहोस्वित्तदुत्तरकालिको वाऽभवादिति बाढं ज्ञायते। तादित्थं पुराणादिप्रमाणबलेन कामसूत्रन्यायसूत्रभाष्ययोः प्रणेतुः वा-त्स्यायनाद्बाढं प्राचीनः कौटिल्यः कथं वा स्वोत्तरकालिकात्तस्माद-भिन्नस्स्यात्?

अपि च स्वीये ग्रन्थेऽनूद्यमानस्य स्वीयग्रन्थान्तरस्य स्वीयता-प्रदर्शनरूपं ग्रन्थकृतां सम्प्रदायमुररीकृत्य न्यायसूत्रभाष्येऽर्थशास्त्रवा-क्यान्यनुवदन्नपि वात्स्यायनो न कुत्राप्यर्थशास्त्रस्य स्वीयतां प्रदर्श-यामास। तथाहि—

(1) 'प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम्।
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥

इति प्रथमाध्याये प्रथमाह्निके प्रथमसूत्रस्य भाष्ये,

(2) परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः ।

इति प्रथमाध्याये प्रथमाह्निके चतुर्थसूत्रभाष्ये,

(3) पदसमूहो वाक्यमर्थपरिसमाप्तौ ।

इति प्रथमाध्याये द्वितीयाह्निके ५५ तमसूत्रभाष्ये च अर्थशास्त्रवाक्यान्यनूदितानि वर्तन्ते । एषु अनुवादेषु 'शश्वदान्वीक्षिकी मता" इति अर्थशास्त्रस्य प्रथमाधिकरणे द्वितीयाध्याये पठ्यमानं चतुर्थं पादं प्रहाय "विद्योद्देशे प्रकीर्तिता" इति विद्योद्देशनामकमनूदितप्रकरणं प्रदर्शयन् वात्स्यायनः प्रकीर्तनकर्तारं निगूहयामास। तथैव द्वितीयानुवादे तन्त्रयुक्तिनामकं पञ्चदशमधिकरणमनुवादस्थलमभिदधानोऽपि तत्रापि स्वीयतां परकीयतां वा सन्दिग्धां चकार. तृतीयानुवादे त्वनुवादप्रदेशमपि (अर्थ. II. 10) न द्योतयामास. यद्यर्थशास्त्रं स्वीयमेव स्यात्तद्देशं गूहनाश्रमं परिहाय तस्य ग्रन्थस्यापि स्वीयतां स प्रकाशयेदेव.

किंच "यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश ।........ रावणश्च सीतामपरे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टा इत्यर्थचिन्तकाः" इति कामसूत्रे (I. 2) अर्थशास्त्रस्य प्रथमाधिकरणीयषष्ठाध्यायाद्वाक्यान्यनुवदन्वात्स्यायनः "अर्थचिन्तकाः" इति गौरवप्रदर्शकं बहुवचनान्तं पदं प्रयुज्य अर्थशास्त्रप्रणेतुस्स्वान्यतां स्पष्टीचकारेति सुवचम्.

अपि चार्थशास्त्रे प्रयुक्तानि पारिभाषिकपदानि प्रयुज्य कामसूत्रं रचयन्वात्स्यायनस्तस्य ग्रन्थस्यार्थशास्त्रोत्तरकालकृतां बाढं प्रकटयमास । तथाहि :—

| | |
|---|---|
| कामसूत्रमिदं प्रणीतम् । | इदमर्थशास्त्रं कृतम् । |
| तस्यायं प्रकरणाधिकरण- | तस्यायं प्रकरणाधिकरण- |

| | | |
|---|---|---|
| 1. | समुद्देशः।.......विद्यासमुद्देशः औपनिषदिकम्। I. 1. | समुद्देशः। विद्यासमुद्देशः .......औपनिषदिकम्। I. 1. |
| 2. | पितृपैतामहं वश्यं इति मित्रसंपत्। I. 5. | पितृपैतामहं वश्यं इति मित्रसंपत् VI. 1. |
| 3. | कामोपधाशुद्धान्रक्षिणोऽन्तःपुरे स्थापयेदित्याचार्याः V. 6. | कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु। I. 10. |
| 4. | इतस्ततश्च स्वयमेवापसृत्योपजपति चेदुभयोर्गुणानपेक्षी चलबुधिरसन्धेयः VI. 4. | स्वदोषेण गतागतो गुणमुभयाः परित्यज्याकारणाद्गतागतश्चलबुद्धिरसन्धेयः। VII. 6. |
| 5. | अर्थो धर्मः कामः इत्यर्थत्रिवर्गः। अनर्थोऽधर्मो द्वेष इत्यनर्थत्रिवर्गः VI. 6. | अर्थो धर्मः काम इत्यर्थत्रिवर्गः। अनर्थोऽधर्मश्शोक इत्यनर्थत्रिवर्गः। IX. 7. |
| 6. | अर्थोऽर्थानुबन्धः | अर्थोऽर्थानुबन्धः |
| | अर्थो निरनुबन्धः | अर्थो निरनुबन्धः |
| | अर्थोऽनर्थानुबन्धः | अर्थोऽनर्थानुबन्धः |
| | अनर्थोऽर्थानुबन्धः | अनर्थोऽर्थानुबन्धः |
| | अनर्थो निरनुबन्धः | अनर्थो निरनुबन्धः |
| | अनर्थोऽनर्थानुबन्धः | अनर्थोऽनर्थानुबन्धः |
| | अर्थोऽनर्थ इति संशयः | अर्थोऽनर्थ इति संशयः |
| | धर्मोऽधर्म इति संशयः | धर्मोऽधर्म इति संशयः |
| | कामो द्वेष इति संशयः VI.6. | कामश्शोक इति संशयत्रिवर्गः IX. 7, |

गवाध्यक्ष— सूत्राध्यक्ष— पण्याध्यक्ष— आयुक्ताद्यर्थशास्त्रपारिभाषिकपदानि च तत्र तत्रोपयुक्तानि दृश्यन्ते।

पाणिनिप्रयुक्तानि व्याकरणपारिभाषिकपदानि न्यायसूत्रभाष्ये प्रयुञ्जानो वात्स्यायनोऽज्ञातपाणिनेः कौटिल्यादुत्तरकालिक इत्यपरं कारणं चात्र दरीदृश्यते। तथाहि—

| | | |
|---|---|---|
| 1. वृक्षस्तिष्ठतीति स्वास्थितौ स्वातन्त्र्यात् कर्ता। | स्वतन्त्रः कर्ता | I. 4, 54. |
| 2. वृक्षं पश्यतीति दर्शनेनाप्तुमिष्यमाणत्वात् कर्म। | ईप्सिततमं कर्म | I. 4, 49. |
| 3. वृक्षेण चन्द्रमसं ज्ञापयतीतिज्ञापकस्य साधकतमत्मात् करणम् | साधकतमं करणं | I. 4, 42. |
| 4. वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम्। | कर्मणा यमभिप्रैति स सम्प्रदानम् | I. 4, 45. |
| 5. वृक्षे वयांसि सन्तीत्याधारोऽधिकरणम्। I. 2, 16. | आधारोऽधिकरणम् | I. 4, 45. |

किंच अस्तेर्भूः, (I. 4, 52) ब्रुवो वचिः (I. 4, 53) इत्यादिसूत्राणि च न्यायसूत्रभाष्ये (II. 2, 41) अनूदितानि वर्तन्ते। कौटिल्येन अपरामृष्टा मन्वन्तरयुगान्तरविषयाः कामसूत्रे (II. 1, 67) निर्दिष्टाः वात्स्यायनस्योत्तरकालिकतां स्पष्टयन्तीति पाश्चात्यविदुषां राद्धान्तः।

अन्यच्चेदं कौटिल्यस्य वात्सायनान्यत्वनिर्धारकं कारणं दरीदृश्यते। स्वीये कामसूत्रव्याख्याने (I. 2) "वात्स्यायन इति स्वगोत्रनिमित्ता समाख्या। मल्लनाग इति सांस्कारिकी" इति कामसूत्रप्रणेतुर्नामभेदनिर्वचनं कुर्वन् यशोधरः, सति वात्स्यायनस्य कौटिल्यादिनामान्तरे प्रसङ्गसङ्गत्या तत्सूचनमपि नैवोजह्यात्। कामसूत्रप्रणेतुर्वात्स्यायनो मल्लनाग इति यन्नामद्वयं प्रसिद्धं निर्दिष्टं, न

केवलं व्याख्यातृकृतं तन्नामभेदनिर्वचनमेका प्रसक्तिरपि तु अर्थशास्त्राद्वाक्यानामनुवादः कौटिलीयादिम्लेच्छितविकल्पानां विवरणं चापरे द्वे प्रसक्ती आस्ताम्. ग्रन्थनामनिर्देशं विनैव केवलं "तथा चोक्तम्" इत्यर्थशास्त्रात्कामसूत्रव्याख्याने यशोधरेणानूदितानि वाक्यानि चेमानि.—

(1) "संवरणमात्रं त्रयी लोकयात्राविदः।"

कामसूत्रव्याख्या I. 2, पत्र 21. अर्थशास्त्रम्. I. 2.

(2) "दैवं मानुषं हि कर्म लोकं पालयति।"

काम. I. 2, प. 23. अर्थ. VI. 2.

(3) "मेषशृङ्गी क्वाथाभिषुतो गुडप्रतीवापः पिप्पलीमरिचसम्भ रस्त्रिफलायुक्तो मद्यो मैरेयः"।

काम I. 4, प. 54. अर्थ. II. 25.

(4) "तत्र पूर्वं धर्म्याश्चत्वारः।"

काम. III. 3. प. 208. अर्थ. III. 2.

(5) "न शोधनमशुद्धस्य विशेषेणाम्भसश्चरेत्। कदा चिद्धिप्रदुष्टस्य नाधिगम्येत भेषजम्॥"

काम. V. 6. प. 303. अर्थ. I. 10.

(6) "शौर्यममर्षता शीघ्रता दाक्ष्यं चोत्साहगुणाः।"

काम. VI. 1. प. 309. अर्थ. VI. 1.

"तथा च कौटिल्येनार्थशास्त्रे उक्तम्" इति वा अथवा "तथा च वात्स्यायनेनैव स्वीयेऽर्थशास्त्रे उक्तम्" इति वा विशिष्य निगमनं विहाय केवलं "तथाचोक्तम्" इति सामान्यतः परोक्तिमिव परामृशन्यशोधरस्तान्येतानि वाकान्यन्ववदत्. एवमेव "यत्साधुशब्दोपनिबद्धमप्यक्षरविपर्यासादस्पष्टार्थं तन्म्लेच्छितं गूढवस्तुमन्त्रार्थम्। तस्य विकल्पा बहवः पूर्वाचार्योक्ताः। तद्यथा—

"कौटिलीयं यदि क्षान्तैः स्वरयोर्ह्रस्वदीर्घयोः । बिन्दूष्मणोर्विपर्यासाद्दुर्बोधमिति संज्ञितम्" (I. 3. प. 39.) इति कौटिलीयस्य म्लेच्छितविकल्पस्य पूर्वाचार्योक्तत्वं वदता यशोधरेण कौटिल्यो वात्स्यायनादन्यः पूर्वाचार्य इति बाढं प्रकटितं दृश्यते.

अपि च—

आयुर्दायं विष्णुगुप्तोऽपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे ।

इति बृहज्जातकस्य सप्तमाध्यायस्थसप्तमश्लोकस्य व्याख्यायां "किं तु विष्णुगुप्तेनापि चाणक्यापरनाम्ना एवमुक्तम्" इति,

"न कुम्भलग्नं शुभमाह सत्यः
न भागभेदाद्यवना वदन्ति ।
कस्यांशभेदो न तथाऽस्ति राशेः
अतिप्रसङ्गास्त्विति विष्णुगुप्तः" ॥

इति बृहज्जातकस्य एकविंशाध्यायस्थतृतीयश्लोकव्याख्यायां "अत्र विष्णुगुप्तचाणक्यावाहतुः-कस्यांशेति" इति च वदता भट्टोत्पलेन चाणक्यापरनामा विष्णुगुप्त एकः चाणक्यापरनामविरहितोविष्णुगुप्तोऽपर आसीदिति सूचितं दृश्यते. एतौ च विष्णुगुप्तचाणक्यौ राश्यंशसंज्ञापरिष्कृतज्योतिश्शास्त्रवेत्तारौ राश्यंशभेदापरिष्कृतज्योतिर्विदो विष्णुगुप्तचाणक्यापरनामद्वयादर्थशास्त्रकृतः कौटिल्यादन्यावास्तामिति द्वितीयाधिकरणस्थकालमानाध्यायात् (II. 20.) निर्णेतुं शक्यते । तत्र हि राश्यंशभेदोपजीव्यं सपादपञ्चषष्ट्यधिकत्रिशतदिनमितं सौरं संवत्सरमपहाय आदित्यसंवत्सरं षट्षष्ट्यधिकत्रिशतदिवसपरिमितं प्रकल्पितमङ्गीकृत्यैव अधिमासगणना कृता दृश्यते । अतश्च राश्यंशभेदपरिष्कृतसौरसंवत्सरादिविषयास्तदानीमर्थशास्त्रप्रणेत्रा कौटिल्येन न ज्ञाता आसन्निति स्पष्टमेव गम्यते । तथा च,

"उक्तं चाचार्यविष्णुगुप्तेन।

तथाऽऽह—

अप्यर्णवस्य पुरुषः प्रतरन् कदाचित्

आसादयेदनिलयोगवशेन पारम्।

न त्वस्य कालपुरुषाख्यमहार्णवस्य

गच्छेत्कदाचिदनृषिर्मनसाऽपि पारम्"

इति बृहत्संहितायां (II. 4) वराहमिहिरेण निर्दिष्टो विष्णुगुप्तोऽर्थशास्त्रप्रणेतुर्विष्णुगुप्तादन्य एवेति निर्धार्यते। तदित्थं वात्स्यायनस्य विष्णुगुप्तादिनामभिः प्रसिद्धौ सत्यामपि न तस्यार्थशास्त्रप्रणेतृत्वप्रसक्तिस्संभवतीत्यनवद्यम्.

"खम ए अमच्चपुत्ते चाणिक्क चेव्व थूलवद्देय।

भारहं रामायणं भीमासुरक्कं कोडिल्लियम्"

इति वदता नन्दिसूत्रकृता कौटिलीयार्थशास्त्रं ज्ञातपूर्वमासीदिति प्रथममुद्रणोपोद्घाते सूचितम्। राजकोपपात्रस्य मन्त्रिणः कर्तव्यं बोधयितुं कौटिल्येन पञ्चमाधिकरणे पञ्चमाध्याये परमतानुसारेण प्रयुक्तानां क्रौञ्चापसव्यगमनदीर्घतृणशीतशाट्यादिपदानां व्याख्यारूपाः काश्चन पुरातन्यो गाथा दृश्यन्ते[1], अर्थशास्त्रबुभुत्सुभिस्सकथास्ता गाथा अवश्यं ज्ञातव्या एवेति ता अत्र समुद्ध्रियन्ते.—

उप्पत्तिया वेणयिया कम्मया पारिणामिया।

बुद्धी चउविहा वुत्ता पञ्चमा नोपलम्भयि॥

औत्पत्तिकी वैनयिकी कर्मजा पारिणामिकी।

बुद्धिश्चतुर्विधा उक्ता पञ्चमी नोपलभ्यते॥ १॥

पुव्वमदिट्ठमसुयमवेइयतक्खणविसुद्धगहियत्था।

---

[1] नन्दिसूत्रम्. प. 268—334; 1880, Calcutta.

अव्वाहयफलजोगा बुद्धी ओप्पत्तिया नाम ॥

पूर्वमदृष्टमश्रुतमवेदिततत्क्षणविशुद्धगृहीतार्था ।

अव्याहतफलयोगा बुद्धिरौत्पत्तिकी नाम ॥ २ ॥

भरहसिल पणियरुक्खे खुड्डगपडसरडकायउच्चारे ।

गय घयण गोलखम्भे खुड्डगमग्गित्थिपयि पुत्ते ॥ ३ ॥

भरत[1]शिला[2]पणित[3]वृक्षे खुड्डुग[4] पट[5]सरट[6] काक[7] उच्चारे[8] ।

गज[9] घयण[10] गोल[11]स्तंभे[12] क्षुल्लक[13]मार्ग[14]स्त्री[15]पति[16]पुत्रे[17] ॥

महुसित्थमुद्दियंके य नाणये भिक्खुचेडगनिहाणे ।

सिक्खाअ अत्थसत्थे इच्छाय महं सयसहस्से ॥ ४ ॥

मधुसिक्थ[18]मुद्रिका[19]ङ्क[20] च नाणके भिक्षु[21] चेटक[22]निधाने[23] ।

शिक्षा[24]यामर्थशास्त्रे[25] इच्छा महती[26] शतसहस्रे[27] ॥ ४ ॥

भरनित्थरणसमत्था तिवग्गसुत्तत्थ गहियपेयाला ।

उभये लोगे फलवयी विणयसमुत्था हवयि बुद्धी ॥ ५ ॥

भरनिस्तरणसमर्था त्रिवर्गसूत्रार्थगृहीतप्रमाणा ।

उभये लोके फलवती विनयसमुत्था भवति बुद्धिः ॥ ५ ॥

निमित्ते अत्थसत्थे लेहे गणिये य कूव अस्से य ।

गद्दह लक्खणगंठी अगये गणियाय रहिया य ॥ ६ ॥

निमित्ते[28] अर्थशास्त्रे[29] लखे[30] गणिते[31] च कूपे[32] अश्वे[33] च ।

गर्दभ[34]लक्षण[35]ग्रन्थी[36] अगदे[37] गणिका[38] च रथिक[39]श्च ॥ ६ ॥

सीया साडी दीहं च तणं अवसव्वयं च कूंचस्स ।

निव्वोदयेय गोणे घोडगपडणं च रुक्खायो ॥ ७ ॥

शीता शाटी[40] दीर्घं च तृणं[41] अपसव्यं च कौञ्चस्य[42] ।
निर्वेदने[43] गवोः[44] घोटकपतनं[45] च वृक्षाञ्च[46] ॥ ७ ॥

उवयोगदिट्ठसारा कम्मपसंगपरिघोलणविसाला ।
साहुक्कारफलवयी कम्मसमुत्था हवयि बुद्धी ॥ ८ ॥

उपयोगदृष्टसारा कर्मप्रसङ्गपरिघोलनविशाला ।
साधुकारफलवती कर्मसमुत्था भवति बुद्धिः ॥ ८ ॥

हेरण्णये करिसये कोलियडोवियमुत्तिघयपवये ।
तुन्नाय वड्ढायि पूयीयेय घडचित्तकारेय ॥

हैरण्यके[47] कर्षके[48] कौलिक[49]दर्वी[50] घृत[51]प्लवके[52] ।
तुन्नाग[53]वर्धक्या[54]पूपिक[55]घट[56]चित्रकाराश्च[57] ॥ ९ ॥

अणुमानहेतुदिट्ठंतसाहियावय विवागपरिणामा ।
हियनिस्सेयसफलवयी बुद्धी परिणामियानाम ॥ १० ॥

अनुमानहेतुदृष्टान्तसाधिता वयोविपाकपरिणामा ।
हितनिश्श्रेयसफलवती बुद्धिः पारिणामिकीनाम ॥

अभये सेट्ठीकुमारे देवी उदियोदयो हवयिराया ।
साहुयनन्दिसेणे धणदत्ते सावग अमच्चे ॥

खपंये अमच्चपुत्ते चाणक्के चेवथूलबद्दे अ ।
नासिक्कसुन्दरीनन्दे वयिरे परिणामिया बुद्धी ॥

चलणाहण आ मण्डे माणिय सप्पये खग्गितूभये ।
पारिणामिया बुद्धीय एवमायी उदाहरणा ॥ १३ ॥

अभय[58]श्श्रेष्ठी[59] कुमारः[60] देवी[61] उदितोदयो[62] भवति राजा ।

63 64 65 66
साधुश्च नन्दिषेणो धनदत्तश्श्रावकोऽमात्यः ।
67 68 69 70
क्षपकोऽमात्यपुत्रश्चाणक्यश्चैव स्थूलभद्रश्च ॥
71 72 73
नासिक्यसुन्दरीनन्दो वज्रो पारिणामिकी बुद्धिः ।
74 75 76 77 78 79
चरणाहते आमलके मणौ सर्पे खड्गिस्तूपे च ॥
पारिणामिक्या बुद्ध्या एवमादीनि उदाहरणानि ॥

अत्र हि राजनीत्यां व्यापृतानां राज्ञां मन्त्रिणां कारणिकानां पौराणां च यदौत्पत्तिकं वैनयिकं कर्मजं पारिणामिकं वा बुद्धिकौशल्यं कौटिल्यात्पुरैव कथासु प्रख्यापितमासीत् एकोनाशीतिसङ्ख्याकास्ताः कथाः उपर्यनूदितासु गाथासु अङ्काङ्कितैः पदैस्सूचिता वर्तन्ते। कथाश्चैता नन्दिसूत्रव्याख्यायां संक्षेपेण कथिताः सविस्तारमन्येषु जैनग्रन्थेषु रक्षितास्सन्तीत्यस्माद्व्याख्यानादेवावगम्यते । कौटिलीयार्थशास्त्रे पञ्चमाधिकरणे पञ्चमाध्याये दीर्घतृणशीतशाठ्यादीनां नीत्युपयुक्तकथासूचकपदानां प्रयोगात् एताः कथाः क्रिस्तात्पूर्वमब्दानां पञ्चमे षष्ठे वा शतके प्रचारं गतास्समासन्निति बाढं ज्ञायते। एतत्कथास्थानीयाः बौद्धजातककथा अपि तदैव बाढं प्रथितास्समभवन्निति भूलनाम्ना पाश्चात्यविदुषा कृतायास्सम्भावनाया इदमपरं निरस्तसन्देहं गमकं भवति । एकोनाशीतिकथानामत्र सङ्ग्रहो ग्रन्थगौरवावह इति शीतशाठ्यादिपदसूचितार्थबोधकं कथामात्रमेवात्र सङ्गृहीतम्—

“क्वचित्पुरे कोपि राजा । तत्पुत्राः केनाप्याचार्येण शिक्षयितुमारब्धाः । ते च तस्मै आचार्याय प्रभूतं द्रव्यं दत्तवन्तः । राजा च, द्रव्यलोभी तं मारयितुमैच्छत् । तैश्च पुत्रैः कथंचिदेतत् ज्ञात्वा चिन्तितम्—“अस्माकमेष विद्यादायी परमार्थतः पिता । ततः कथमप्येनमापदो निस्तारयामः” इति । ततो यदा भोजनाय समागत; आ-

चार्यः स्नानशाटिकां याचते तदा ते कुमाराः शुष्कायामपि सत्यां शाट्यां "अहो शीता शाटी" इत्यवदन्। द्वारसंमुखं च तृणं कृत्वा, "अहो दीर्घतृणं" इति, "पूर्वं क्रौञ्चेन सदैव प्रदक्षिणीकृतम्। सम्प्रति तु सोऽपसव्यं भ्रमति" इति चावदन्। ततः आचार्येण ज्ञातं— 'सर्वं मयि विरक्तम्। केवलमेते कुमारा मयि भक्तिवशात्तमर्थं ज्ञापयन्ति' इति। ततो यथा न लक्ष्यते तथा स पलायामास"। इति—

एतत्कथानुसारेण "तृणमिति दीर्घश्चारायणः" (V. 5) इत्यत्र "तृणमतिदीर्घं चारायण" इति पाठः पठनीयो भवति। एवमेव उच्चैःस्सञ्जनहस्तिप्रत्युक्षणरथाश्वशब्दा अपि राजकोपप्रसादसूचककथाबोधका इति स्पष्टमवगम्यते। "प्रतिवरणे शूनमति पिशुनपुत्रः। अर्थमानावक्षेपे च परित्यागः" इत्यत्र "प्रतिवरणे अर्थमानावक्षेपे च परित्याग इति पिशुनपुत्रः" इति पाठो गरीयानिति भाति। प्रतिवरणे इत्यस्य प्रतिमन्त्रवरणे अन्यमन्त्रिनियोगे इत्यर्थः।

राजकोपप्रसादप्रदर्शकहस्तिकथा चेत्थं श्रूयते—

मुमूर्षुः कश्चन हस्ती राज्ञा ग्रामे प्रेषितः। 'हस्ती मृत इति न निवेदनीयः। प्रत्युत प्रतिदिनमपि तस्य वार्ता कथनीया' इति ग्रामाय संदेशं च स प्राहिणोत्। रक्षितोऽपि हस्ती मृतः। ग्रामेण राज्ञे निवेदितं च—"देवाद्य हस्ती न निषीदति, नोत्तिष्ठति, न कबलं गृह्णाति, नापि नीहारं करोति, न चोच्छ्वासनिश्वासौ विदधाति, किं बहुना न स सचेतनचेष्टां करोति" इति। राज्ञा भणितं— 'किं, रे, मृतो हस्ती'? इति। ततो ग्रामेण भणितं 'देव, देवपादा एवं ब्रुवते। न वयम्' इति। तदा राजा मौनमादधौ। गतो ग्रामलोकः"। इत्येका हस्तिकथा.

"बुद्धिकुशलं मन्त्रिणमेकमन्विष्यन् कश्चन राजा हस्तिनमालानस्तम्भे बन्धयित्वा घोषणमचीकरत् 'योऽमुं हस्तिनं तोलयति

तस्मै राजा महतीं वृत्तिं प्रयच्छति' इति। कश्चन पुरुषः हस्तिनं महासरसि नावमारोप्य, यावत्प्रमाणा नौः जलनिमग्ना तावत्प्रमाणां रेखां कृत्वा, ततो हस्तिनं समुत्तार्य गण्डशैलंकलशान् ग्राव्णः नावि पूर्वरेखानिमज्जनपर्यन्तं प्रक्षिप्य, तान्पाषाणान् तोलयामास। गजतोलनां च राज्ञे निवेदितवान्। राजा च तुष्टस्तं मन्त्रिणं चकार" इत्यपरा कथा.

"परचक्रेण रुद्धः कश्चन राजा जलदूषणार्थं विषमपेक्षमाणो वैद्यानाकारयामास। कश्चन वैद्यो यवमात्रं विषमानीय 'देव, गृहाण विषं' इति समर्पितवान्। राजा स्तोकं विषं दृष्ट्वा चुकोप। तस्मै वैद्यो विज्ञापयामास—'देव, सहस्रवेधीदं विषम्। तस्मादप्रसादं मा कुरु' इति। राजाऽवादीत् 'कथमेतदवसेयम्' इति। स आह— "आनीयतां कोऽपि जीर्णो हस्ती, इति। आनीतस्य हस्तिनः वाल प्रदेशे रन्ध्रं कृत्वा विषं तत्र सञ्चरितं वैद्येन। ततो भणितं च तेन —'देव, सर्वोऽप्येष हस्ती विषमयो जातः। योऽप्येनं भक्षयति सोऽपि विषमयो भवति। एवमेतद्विषं सहस्रवेधि" इति। ततो हस्तिहानिदूनचेतसं राजानं तोषयितुं वैद्यो रन्ध्रे तस्मिन्नपरं गदं संचार्य विषप्रतीकारं कृत्वा हस्तिनमुज्जीवयामास" इति.

एवमेव रथाश्वकथा अपि बुद्धिकौशलप्रदर्शिकाः कथिताः दृश्यन्ते। तास्तत एवावगम्याः।

कोशान्तरालाभाद्यथास्थितपाठमेव प्रथममुद्रणं साधितम्। इतः परं मद्रास्पत्तनस्थप्राच्यकोशभाण्डागाराय संपादितस्य कोशद्वयस्य प्रत्यन्तरमासाद्य, जर्मनीदेशस्थे उर्जबर्ग्पत्तने सर्वविद्यालयकोशागारे स्थितस्य कोशस्य च तृतीयचतुर्थाधिकरणयोरुपलभ्यमानान्पाठभेदान्पत्रिकाद्वाराऽऽसाद्य च द्वितीयमुद्रणमिदं बह्वपेक्षितं सपाठभेदं यथामति परिष्कृतं च संसाधितम्। मद्रास्जर्मनीकोशौ चात्र मुद्रिते

कोशे 'म' 'ज' अक्षराभ्यां सूचितौ। कचिल्लेखकप्रमादान्नष्टानि छन्दांसि पुनराबद्धानि [1]। कचिच्च ग्रन्थपातस्समुद्धृतः [2]। कोशान्तरापेक्षया परिष्करणीयाः पाठा भूयांसस्स्युरित्येतेनैव संभाव्यते।

भट्टस्वामिकृता प्रतिपदपञ्चिकानाम्नी व्याख्या द्वितीयाधिकरणाष्टमाध्यायादारभ्याधिकरणसमाप्तेरुपलभ्या वर्तत इति पुरैव सूचितम्। इदानीं मद्रासूपत्तनस्थप्राच्यकोशागाराय सम्पादितायाः सप्तमाधिकरणसप्तमाध्यायाद्वा च द्वादशाधिकरणचतुर्थाध्यायादुपलभ्यायाः वादिकविचूडामणिमहोपाध्यायश्रीमाधवयज्वमिश्रविरचितायाः नयचन्द्रिकाख्यायाः अर्थशास्त्रव्याख्यायाः प्रत्यन्तरमासादितम्। द्वितीयाधिकरणसप्तमाध्यायादारभ्य द्वादशाधिकरणचतुर्थाध्यायपर्यन्तं विद्यमाने मूले १५०० ग्रन्थपरिमितेऽपि व्याख्येयं ४००० ग्रन्थपरिमिता दृश्यत इति विस्तृतैवेयं समीचीनेत्यपि भाति. अथापि सम्पूर्णव्याख्यानोपलब्धिं विना नेयं मुद्रणार्हेत्येष एव खेदावहो विषयः।

चाणक्यसूत्राणीति प्रसिद्धानि एकसप्तत्यधिकपञ्चशतमितानि नीतिबोधकानि सूत्राणि कचिदर्थशास्त्रवाक्यसमानाकाराणीति प्रायेण चाणक्यकृतान्येवेति ग्रन्थान्तेऽत्रानुबन्धे मुद्रितानि। "स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च" इति ग्रन्थान्ते यानि सूत्राणि कौटिल्येन परामृष्टानि न तान्येतानि चाणक्यसूत्राणि यतोऽर्थशास्त्रं नैतेषां भाष्यम्। परं तु यथा ममार्थशास्त्राङ्ग्लेयभाषानुवादस्य उपोद्घाते मयोहितं तथैव नयचन्द्रिकाकारेणापि 'प्रकरणाधिकरणसमुद्देशः' इत्युपक्रम्य "तन्त्रयुक्तयः" इत्यन्तं प्रतिप्रकरणविषयसूचनारीत्या कौटिल्येन पठितान्येव वाक्यकदम्बानि अर्थशास्त्रात्मकभाष्यविषयीभूतानि सूत्राणीति स्पष्टीकृतमिति सर्वमनवद्यम्.

R. SHAMA SASTRY.

---

[1] II. 24; [2] IV. 1, 3.

## तृतीयमुद्रणस्योपोद्घातः.

तृतीयमुद्रणमिदमर्थशास्त्रस्य न द्वितीयमुद्रणादतीव भिद्यत इति नोपोद्घातान्तरमपेक्षते । तथाऽपि महामहोपाध्यायेन गणपतिशास्त्रिणा स्वीयव्याख्यया साकमनन्तशयनसंस्कृतग्रन्थावल्यां प्रकाशितस्यार्थशास्त्रप्रथमाधिकरणद्वयस्योपोद्घाते महीशूरराजकीयसंस्कृतग्रन्थावल्यां प्रकाशितमर्थशास्त्रमूलं पाठाशुद्धिभूयिष्ठं तदीयाङ्ग्लेय भाषानुवादश्चासङ्गतार्थ इति यत्प्रलपितं, यच्च स्वप्रकाशितं मूलं व्याख्यानं च बाढं शुद्धं सङ्गतं चेति प्रोद्घुष्टं तदत्र किंचिद्विचार्यते । असूयान्धीकृतदृशाऽनेनशास्त्रिणा दृष्टा पाठाशुद्धिः पूर्ववाक्ययोज्यस्य पदस्योत्तरवाक्येन सह योजनमुत्तरवाक्ययोज्यस्य पूर्ववाक्येन सह योजनमित्येवञ्जातीयेत्यवर्णि । सोऽयं पदानां स्थानव्यत्ययोऽधः प्रदर्शितेषु अष्टसु स्थलेषु कृतो दृश्यते—

| पृष्ठे[1] | पङ्क्तौ |
|---|---|
| 31 | 9–10 |
| „ | 16–17 |
| 40 | 7–8 |
| 46 | 5–6 |
| 52 | 8–9 |
| 55 | 2–3 |
| 94 | 9–10 |
| 116 | 21 } |
| 117 | 1 } |

एतेषु सर्वेषु प्रदेशेषु पदानां स्थानव्यत्ययेन न काऽप्यर्थान्तरपरिस्फूर्तिर्दृश्यते । यत्पुनः 145 तमपृष्ठे तृतीयपङ्क्त्यां "पाद"

---

[1] पृष्ठसंख्या पङ्क्तिसंख्या चात्र महीशूरपुरमुद्रितमर्थशास्त्रम् परामृशति.

पञ्चघटीनाम्" इति विभज्य वाक्यान्तरं कृत्वा "सार्धद्वादशघटिकात-ऊर्ध्वं सार्धसप्तदशघटिकातः प्राक् याः पञ्चघटिकास्तासां संबन्धिन्याग्नि-कार्यकरणे पादः पणचतुर्भागदण्डः" इति तेन व्याख्यातं तदसमञ्जसम्। न हि पञ्चघटिकाः सार्धद्वादश सार्धसप्तदशमध्यवर्तिन्यएव ग्राह्या इत्यत्र गमकं वर्तते। मध्यमयोरह्नश्चतुर्भागयोरिति पूर्ववाक्ये यच्चतुर्भा-गद्वयमुक्तं तत्राग्नयप्रतीकारेऽष्टभागो दण्डो विहित इति न तदस्य पाद-दण्डस्य विषयः। तस्मिन्नप्यस्य विषये सति एकस्यापराधस्य विरुद्ध-दण्डद्वयविधानापत्तिः—किंचाह्नश्चतुर्भागयोरिति पूर्ववाक्य इवात्रापि घटिकास्विति सप्तम्यन्तं विहाय घटीनामिति षष्ठ्यन्तप्रयोगे कारणं मृग्यम्। किं च घटीशब्दोऽत्र ग्रन्थे न कुत्रापि नालिकार्थे प्रयुक्तो दृश्यते। यत्पुनः द्वितीयाधिकरणे एकाविंशतितमेऽध्याये घटिकास्थाने स्थानमिति वाक्यं दृश्यते तत्र घटिकास्थानशब्दश्शुल्कगृहे कंचित्प्रदेशं वाऽभिधत्ते इति भट्टस्वामिनाऽन्यथा व्याख्यातम्—किं चात्रसंबन्धिपदं न निर्दिष्टम् 'अग्निकार्यकरणे' इत्यध्याहारे न किमपि गमकम्। किंचात्र व्याख्याने गणपतिशास्त्रिणा "अग्निकार्य" शब्दोऽनेकवारं प्रयुक्तो दृश्यते। अग्नि-कार्यशब्दोऽग्न्युपासनमभिधत्ते न तु लौकिकमग्न्युद्दीपनमिति नाद्यापि तेन ज्ञातमिति विस्मयावहमेतत्—

किंच पादः पणचतुर्भागदण्ड इति प्रतिपदोपन्यासः गणपतिशा-स्त्रिणः प्रमाद एव। न हि पादशब्दो दण्डमप्याभिधत्ते।

अपि च मर्यादाशब्दस्य तात्पर्यार्थे पुरस्कारमुपादाय कृतमाङ्गले-यभाषानुवादमधिक्षिपन् गणपतिशास्त्री स्वीये पदप्रयोगे पदशक्यार्थ-मपि न गणयतीति विस्मयावहमेतत्। किंच द्राविडकर्णाटादिभाषासु अनुलङ्घनीयसीमास्थानीयपुरस्कारार्थे प्रयुज्यमानः मर्यादाशब्दः सं-स्कृतभाषाया एव संगृहीत इति न कोऽपि सन्देग्धि।

तदित्थं पदव्यत्ययेन वाक्ययोजनां कृत्वा गणपतिशास्त्रिणा महा-ननर्थस्संपादितः, व्याख्याने तावत्कल्पितानर्थान् किञ्चित्पश्यामः—

असत्प्रग्रहः अपूज्यपूजनामिति शास्त्रिणा व्याख्यातम्. (पृ. 16 प. 14) नैतादृशार्थकल्पने किमपि प्रमाणं वर्तते. नाप्यर्थोपधाप्रकरणे ईदृशार्थस्य साङ्गत्यं दृश्यते.

कुलं बहुपुत्रसङ्घः इति व्याख्यातम्. (पृ. 35 प. 8) बहुभ्रातृसङ्घो बहुदारसङ्घोवाऽन्योवा किं न स्यात् ?

प्रवासयेत् हन्यादित्यर्थः इति व्याख्यातम्. (पृ. 37 प 2) प्रमाणं तु नानूदितम् —

परिहारः दौस्स्थ्यपरिहारेण स्वास्थ्यसिध्यर्थं दीयमानं द्रव्यमिति परिहारशब्दार्थः परिष्कृतः (पृ. 47 प. 6) नात्र किमपि प्रमाणमनूदितम्- प्रत्युत परिहारशब्दः प्राचीनशासनेषु करविसर्ग एवार्थे प्रयुक्तो दृश्यते. अत्रापि ग्रन्थे पाञ्चवार्षिकः चातुर्वार्षिकः परिहार इति 170 तमे पृष्ठे 2-5 पङ्क्तिषु करविसर्गरूपार्थे एव प्रयुक्तो दृश्यते.

बाहरिकान् कितववञ्चकनटनर्तकान् इति व्याचक्षाणस्य (पृ. 57 प. 5) शास्त्रिणः प्रमाणं स्वोक्तिरेवेति कः प्रत्येति ?

लक्षणाध्यक्षः क्षेत्रारामादिसीमाचिह्नाध्यक्ष : इति (पृ. 60 प. 1) व्याख्यानं 84 तमे पृष्ठे तृतीयपङ्क्त्यां लक्षणाध्यक्षः टङ्कशालाध्यक्ष इति स्वोक्त्यैव विसंवदति.

व्याजी विंशतिभाग इति व्याख्यातम्. (पृ. 60, प. 14) पञ्चकं शतं व्याजीत्यस्य (पृ. 84 प. 9) किमर्थं त्यागः ?

तत्रैव "परिघः आतरद्रव्यम्" इति व्याख्यानं 85 तमपृष्ठे द्वितीय पङ्क्त्यां "परिघः पारीक्षिकम्" इति व्याख्यानेन विरुद्धम्.

राजवर्षं मासः पक्षो दिवसश्च व्युष्टं राजकर्षादि चतुष्टयं व्युष्ट- संज्ञामित्यर्थः इति (पृ. 60, प. 20)व्याख्यातम् — नेयं संज्ञा, लोकप्रसिद्धा प्रयोगाभावात्; परंतु ग्रन्थकृतस्स्वसंज्ञा शास्त्रे व्यवहारार्थं कृता—इति वक्तव्यम्. यदीदमित्थं स्यात् तर्हि संज्ञाप्रदेशाः "व्युष्टदेशकालेति

64 तमे पृष्ठे दृश्यमानाः 16, 17, 19 पंक्तय एव. तत्र च व्युष्टशब्देन साकं कालशब्दस्यापि प्रयोगदर्शनात् राजवर्षमासपक्षदिवसदेशकालेति कालवाचकयोरन्यतरस्य वैयर्थ्यं स्यात्. ततश्च व्युष्टशब्दस्यात्र न राजवर्षादिरर्थः परत्वन्य एवार्थ इत्यभ्युपगन्तव्यम्. श्रावणकृष्णप्रातिपादि तदानीमारब्धो वर्षादिर्व्युष्टमिति पौर्णमास्यन्तो मासस्तदानीमासीदित्यन्यत्र विस्तरः—आषाढीं गाणनिक्यान्यागच्छेयुः इति गाणनिक्यागमनानन्तरं वत्सरादौ श्रावणकृष्णप्रातिपादि गाणनिक्यपरीक्षोपक्रमस्तदानीमासीदिति विद्वांसो विदांकुर्वन्तु.

60 तमे पृष्टे 20 पङ्क्त्यां—

वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाः शेषाः पूर्णाः। पृथगाधिमासक इत्यत्र शास्त्रिणा राजवर्षस्य त्रिधा विभक्तस्य सिंहादिवृश्चिकान्ता रविमासा वर्षर्तुः, धनुरादिमीनान्ता हेमन्तः, मेषादिकुलीरान्ता ग्रीष्म इति त्रयाणामेषामृतूनां प्रत्येकमष्टौ पक्षाः। तेषु तृतीये सप्तमे चैकैको दिवसो हीयते, पृथगाधिमासकः सौरमासाच्चान्द्रमासोतिरिक्तः इति व्याख्यातम्. इयं व्याख्या चाणक्यकालिकज्योतिषसिद्धान्तग्रन्थकर्त्रभिप्रायोभयाज्ञानविजृम्भितैव ॥

आ वराहमिहिरकालात् अद्ययावत् सौरसंवत्सरो हि सपादषष्ट्यधिकत्रिशतदिवसात्मकः गृहीतोऽस्ति, तत्र षट्सु दिनेषु न्यूनितेषु एकोनषष्ट्यधिकत्रिशतदिवसाश्शिष्यन्ते। किमेतावता प्राप्तम्? किं वाऽनेन दिवससमुदायेनात्रोपपादनीयं वर्तते? किमीदृगुक्तेः प्रयोजनम्? सेयं तु कल्पनैव। किं च अधिमासकः अतिरिक्तश्चान्द्रमास इति कथमयमर्थस्समुपलभ्यते? ग्रन्थकृतस्त्वयमाशयः—

कालमानाध्यायान्तिमश्लोकोक्तरीत्या "त्रिशतं चतुःपञ्चाशच्चाहोरात्राणामिति" गाणनिक्याधिकाराध्यायोक्तरीत्या च षट्षष्ट्यधिकशतत्रयदिवसात्मकस्सौरस्संवत्सरः चतुःपंचाशदधिकत्रिशतदिवसा-

त्मकश्चान्द्र इति ग्रन्थकृदभिप्रेतौ संवत्सरौ । पञ्चदशाहोरात्रः पक्षः इति कालमानोक्तरीत्या 24 × 15 = 360 दिवसात्मकः चान्द्रसंवत्सरो मा भूदिति चतुर्विंशतिपक्षेषु तृतीये सप्तमे एकादशे पञ्चदशे एकोनविंशे त्रयोविंशे च पक्षे एकैकदिवसत्यागात् षड्दिवसाः न्यूनङ्किताः । तथा च354 दिवसात्मकश्चान्द्रस्सिद्ध्यति। 366 दिवसात्मकात्सौरादृद्वादशदिनैर्न्यूनश्चान्द्रः सार्धसंवत्सरद्वये एकमधिमासं करोतीति.

व्युष्टदेशकालेत्यादिवाक्यानां व्युष्टादिविवरणयुक्तामायगणनां सम्पादयेदित्यर्थ इति विवरणं (पृ. 64, प. 16,17, 19) केवलं शब्दाडम्बर एव । किं च समानयेदित्यस्य सम्पादयेदितिनार्थः.

युक्तप्रतिषेधः अध्यक्षाणां धनापहाराद्वारणमितिव्याख्यातम्.— (पृ. 65, प. 15) किं धनापहारः अध्यक्षैः राजसमक्षमेव क्रियते येन राजा तांस्तस्माद्वारयेत् ? "ज्ञातुं न शक्या धनमाददानाः" इति ग्रन्थकृतैवोक्तम् । अत इदं व्याख्यानमसङ्गतमेव । ग्रन्थकृदाशयस्तु युक्तानाममितानां प्रतिषेधः विसर्गः, अनियोगो वा इति ।

उपयुक्तः युक्तानामुपरिनियुक्तः इति गणपतिशास्त्रिणा कृता व्याख्या (पृ. 67 प. 8)युक्तः प्रधानः उपयुक्तः तत्सहकारीति स्वकृतया व्याख्यया (पृ. 59, प. 4) विसंवादिनीति समाकालनीयम् ।

तदेवं सत्यामपि सव्याख्यात्रयमातृकासामग्र्यामेतैरन्यैश्च बहुभिर्दोषैः परिपूर्णा गणपतिशास्त्रिणः कृतिरित्येतद्विस्मयावहम्। असत्यामप्येतादृशसामग्रीसम्पत्त्यामेकमातृकानिबन्धने महीशूरग्रन्थावल्यां प्रकाशितेऽर्थशास्त्रग्रन्थे तस्याङ्ग्लेयभाषानुवादे च प्राज्ञेनाप्यवार्याः केचिद्दोषास्सम्भवेयुरित्येतदस्माकं भूषणं न तु दूषणमित्यलम् ॥

———

## PREFACE TO THE THIRD EDITION.

THIS edition of the Arthasastra undertaken to meet the ever growing demand of the public for copies of the work differs in no way from its predecessors and stands therefore in need of no new introduction of any kind. Still the publication of the first two books of the work with a commentary of his own and with an introduction specifying the reasons for undertaking a new edition by Mahamahopadhyaya T. Ganapati Sastri in the Trivandrum Sanskrit Series cannot be passed over without a few remarks on the worth of his performance. The one reason urged by him for undertaking a new edition of his own is that the Mysore edition "abounded with errors, such as the word of a previous sentence joined to a subsequent sentence and *vice versa* . . . . The nature of the subjects dealt with is such that even a talented Pandit cannot hope to easily understand it. What then will be the condition, if it contains errors too?"

The reply to this question can be easily found in the misinterpretation which the talented Pandit made not only in his attempt at recasting a few sentences here and there in the text, but also in introducing anachronisms in interpreting ancient words.

For example on page 145, line 3 * he has split into two sentences what in the Mysore edition is taken to be a single sentence. Taking "पाद: पञ्चघटीनां" as a separate

* These references are to the Mysore Oriental Library Edition.

sentence he explains it saying that kindling of fire during the five *ghatikas* from $12\frac{1}{2}$ to $17\frac{1}{2}$ *ghatikas* of the day shall be punished with a fine of one-fourth of a pana. The use of ghati in the sense ghatika, 24 minutes, is found nowhere else in the Arthasastra. The word ghatikâsthâna in Book II, Ch. 21 can be explained otherwise, as done by Bhattasvami by taking it to mean a room in the toll-house. As a fine of one-eighth of a pana is levied for kindling fire during the midday in the previous sentence, this additional fine is not merely superfluous but also contradictory. It follows therefore that the Mahamahopadhyaya's interpretation here is quite wrong and that his splitting the sentence into two is indefensible. Another serious objection to this interpretation is the violation of grammar. The use of the word *panchaghati* in the possessive case instead of in the locative as in the case of अह्नश्चतुर्भागयोः in the previous sentence is against such interpretation. While Mr. T. Ganapati Sastri is ready to find fault with the free English translation or paraphrase of the Arthasastra without strict adherence to the literary sense of words such as Maryada on p. 13. line 1, he himself does not seem to be free from carelessness in giving exact equivalents while commenting on the words of the Arthasastra. For example in commenting upon the word पाद on page 145 line 3 he gives पणचतुर्भागदंड as synonymous with it. Even an ordinary student of Sanskrit knows that पाद never means a danda, but only a quarter. Here it means only a quarter of a pana. He also uses अग्निकार्य in the sense of kindling of fire, though it is a technical word meaning a ceremonial kindling of fire.

Fortunately for Mr. T. Ganapati Sastri the other instances of his re-arrangement of sentences have not in-

volved him into absurdities. There is hardly any change in the meaning due to taking up a word or two with the previous or subsequent sentence. The following are a few instances of his re-arrangement:—

P. 31, lines 9-10 and 16-17; P. 40, lines 7-8; P. 46, lines 5-6; P. 52, lines 8-9; P. 55, lines 2-3; P. 94, lines 9-10; P. 116, line 21 and P. 117 line 1.

How hollow then is the excuse of erroneous reading urged by him for his undertaking what he presumes to be correct edition!

Turning to his commentary, one is obliged to say that his commentary is as wrong as his recasting of sentences in all those places where he departed from the English rendering of the work. To take only a few examples:—

On page 16, line 14, he takes the word असत्प्रग्रह to mean अपूज्यपूजन. Neither does असत् mean अपूज्य nor प्रग्रह पूजन.

On page 35, line 8, his interpretation of the word कुल as बहुपुत्रसङ्घ is wrong.

On page 37. line 2, he takes प्रवासयेत् in the sense of हन्यात् should kill, without quoting any authority for it.

On page 47, line 6. परिहार: दौस्स्थयपरिहारेण स्वास्थ्यासिद्ध्यर्थं दीयमानं द्रव्यम्. This is quite wrong. Compare पांचवार्षिक: परिहार: etc. p. 170 lines 2-5.

On page 57, line 5, बाहिरिकान् कितववञ्चक नटनर्तकान्. Authority is not quoted.

On page 60 line 1, लक्षणाध्यक्ष: क्षेत्रारामादिसीमाचिह्नाध्यक्ष: This is wrong. Compare p. 84, line 3.

On page 60, line 14, व्याजी विंशतिभाग:. This restriction to twentieth part is wrong. It means 5 per cent and 7 per cent commissions also.

On page 60, line 14, परिघः आतरद्रव्यम् meaning ferry due. Again on page 85, line 2, the same word is taken by him to mean पारीक्षिकम् coin-testing charge, thus contradicting himself.

On page 60, line 20, राजवर्षं मासः पक्षो दिवसश्च व्युष्टम्—राजवर्षादि चतुष्टयं व्युष्टसंज्ञमित्यर्थः Authority is not quoted. If however Vyushta is taken to mean the four things, royal year, month, fortnight, and day, then the use of the word काल along with Vyushta on page 64 lines 16, 17, and 19 will be meaningless.

On page 60, line 21, वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाः शेषाः पूर्णाः इति राजवर्षस्य त्रिधा विभक्तस्य सिंहकन्यातुलावृश्चिकाश्चत्वारो रविमासा वर्षर्तुरित्येको भागः. Here Mr. T. Ganapati Sastri takes the year to be a solar year of 365¼ days made up of 12 Sankramana months divided into 3 seasons, and in the 24 fortnights of this year 6 days are in his opinion to be omitted. This results in a year of 359 days. What year is this? Nothing can be more absurd than this. (See the English Translation and the note here).

Page 64, lines 15, 16, 17 व्युष्टादिविवरणयुक्तां आयगणनां संपादयेदित्यर्थः This means that he should secure the accounts of receipts containing the explanations of Vyushta and other words. Can there be anything more nonsensical than this?

Page 65 line 15. युक्तप्रतिषेधः युक्तानामध्यक्षाणां धनापहाराद्वारणम्. This is far-fetched. Where is the impliance of Dhanapahara?

P. 67, line 8, उपयुक्तः युक्तानामुपरिनियुक्तः one who is appointed above the Yuktas. This is contradictory to the meaning of the same word given by him on page 59, line 4. There he says—युक्तः प्रधानः उपयुक्तः तत्सहकारी.

Another serious defect of his edition is the omission of all various readings.

Whether in the face of these and other errors too numerous to point out here it is fair for the Mahamahopadhyaya to find fault with the Mysore Edition of the text and its English version, is a question that is left to scholars for decision.

R. S.

---

# विषयानुक्रमणिका.

---

पत्रम्

# शुद्धाशुद्धम्.

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 31 | 10 | भतु | भर्तु |
| 32 | 9 | १६ | १३ |
| 177 | 5 | बालिश्यात् | बालिश्याद्वा |
| 253 | 9 | नारायणः | चारायणः |
| 305 | 7 | १८ | ११८ |
| ,, | 15 | हीता | हीना |
| 389 | 9 | मध्यं | मद्यं |
| 399 | 6 | नात्मनि | नात्मनि |
| 415 | 1 | गर्द भस्य | गर्दभस्य |
| 419 | पाठान्तरे | शलका | शलाका |
| 423 | 2 | द्धटनं | द्धाटनं |
| ,, | ,, | स्वापन | स्वापनं |



# कौटिलीयं अर्थशास्त्रम्.

## विनयाधिकारिकं—प्रथमाधिकरणम्.

ॐ नमश्शुक्रबृहस्पतिभ्याम्.

पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यै[1]कमिदमर्थशास्त्रं कृतम् । तस्यायं प्रकरणाधिकरणसमुद्देशः— 1·1* 1·2

विद्यासमुद्देशः । वृद्धसंयोगः । इन्द्रियजयः । अमात्योत्पत्तिः । मन्त्रिपुरोहितोत्पत्तिः । उपधाभिश्शौचाशौचज्ञानममात्यानाम् । गूढपुरुषोत्पत्तिः । गूढपुरुषप्रणिधिः । स्वविषये कृत्याकृत्यपक्षरक्षणम् । परविषये कृत्याकृत्यपक्षोपग्रहः । मन्त्राधिकारः । दूतप्रणिधिः । राजपुत्ररक्षणम् । अवरुद्धवृत्तम् । अवरुद्धे वृत्तिः । राजप्रणिधिः । निशान्तप्रणिधिः । आत्मरक्षितकम् ॥ इति विनयाधिकारिकं प्रथमाधि[2]करणम् ॥ 1·3 2·1

जनपदविनिवेशः । भूमिच्छिद्रविधानम् । दुर्गविधानम् । दुर्गनिवेशः[3] । सन्निधातृचेय[4] कर्म । समाहर्तृसमुदयप्रस्थापनम् । 2·2

[1] सङ्कृत्यै. [2] प्रथममधि. [3] विनिवेशः. [4] तृनिचय.

* These figures refer to the English Translation, ed. 1915 ; those to the left of the point to the pages and those to the right to the paragraphs.

आक्षपटले[1] गाण[2]निक्याधिकारः । समुदयस्य युक्तापहृतस्य प्रत्यानयनम् । उपयुक्तपरीक्षा । शासनाधिकारः । कोशप्रवेश्यरत्नपरीक्षा । आकरकर्मान्तप्रवर्तनम् । अक्षशालायां सुवर्णाध्यक्षः । विशिखायां सौवर्णिकप्रचारः । कोष्ठागाराध्यक्षः । पण्याध्यक्षः । कुप्याध्यक्षः । आयुधागाराध्यक्षः । तुलामानपौतवम् । देशकालमानम् । शुल्काध्यक्षः । सूत्राध्यक्षः । सीताध्यक्षः । सुराध्यक्षः । सूनाध्यक्षः । गणिकाऽध्यक्षः । नावध्यक्षः । गोऽध्यक्षः । अश्वाध्यक्षः । हस्त्यध्यक्षः । रथाध्यक्षः । पत्त्यध्यक्षः । सेनापतिप्रचारः । मुद्राऽध्यक्षः । विवीताध्यक्षः । समाहर्तृप्रचारः । गृहपतिवै[3]देहकतापसव्यञ्जनाः प्रणिधयः । नागरिक[4]प्रणिधिः ॥ इत्यध्यक्षप्रचारो द्वितीयमधिकरणम् ॥

---

2·3 व्यवहारस्थापना । विवादपदनिबन्धः । विवाहसंयुक्तम् । दायविभागः । वास्तुकम् । समयस्यानपाकर्म । ऋणादानम् ।
3·1 औपनिधिकम् । दासकर्मकरकल्पः । सम्भूयसमुत्थानम् । विक्रीतक्रीतानुशयः । दत्तस्यानपाकर्म । अस्वामिविक्रयः । स्वस्वामिसम्बन्धः । साहसम् । वाक्पारुष्यम् । दण्डपारुष्यम् । द्यूतसमाह्वयम् । प्रकीर्णकानि ॥ इति धर्मस्थीयं तृतीयमधिकरणम् ॥

---

[1] पाले. [2] गण. [3] पतिकवै. [4] रीक.

कारुकरक्षणम् । वैदेहकरक्षणम् । उपनिपातप्रतीकारः । गूढाजीविनां रक्षा । सिद्धव्यञ्जनैर्माणवप्रकाशनम् । शङ्कारूपकर्माभिग्रहः । आशुमृतकपरीक्षा । वाक्यकर्मानुयोगः । सर्वाधिकरणरक्षणम् । एकाङ्गवधनिष्क्रयः । शुद्धश्चित्रश्च दण्डकल्पः । कन्याप्रकर्म । अतिचारदण्डः ॥ इति कण्टकशोधनं चतुर्थमधिकरणम् ॥ 32

दाण्डकर्मिकम् । कोशाभिसंहरणम् । भृत्यभरणीयम् । अनुजीविवृत्तम् । समया[1]चारिकम् । राज्यप्रतिसन्धानम् । एकैश्वर्यम् ॥ इति योगवृत्तं पञ्चममधिकरणम् ॥ 33

प्रकृतिसम्पदः । शमव्यायामिकम् ॥ इति मण्डलयोनिः षष्ठमधिकरणम् ॥ 34

षाड्गुण्यसमुद्देशः । क्षयस्थानवृद्धिनिश्चयः । संश्रयवृत्तिः । समहीनज्यायसां गुणाभिनिवेशः । हीनसन्धयः । विगृह्यासनम् । सन्धायासनम् । विगृह्य यानम् । सन्धाय यानम् । सम्भूय प्रयाणम् । यातव्यामित्रयोरभिग्रहचिन्ता । क्षयलोभविरागहेतवः । प्रकृतीनां सामवायिक[2]विपरिमर्शः । संहितप्रयाणिकम् । परिपणितापरिपणितापसृताश्च सन्धयः । द्वैधीभाविकास्सन्धिविक्रमाः । यातव्यवृत्तिः । अनुग्राह्यमित्रविशेषाः । 35

[1] सामया. [2] थिका.

4·1 मित्रहिरण्यभूमिकर्मसन्धयः। पार्ष्णिग्राहचिन्ता। हीनशक्तिपूरणम्। बलवता विगृह्योपरोधहेतवः। दण्डोपनतवृत्तम्। दण्डोपनायिवृत्तम्। सन्धिकर्म। सन्धि[1] मोक्षः। मध्यमचरितम्। उदासीनचरितम्। मण्डलचरितम्॥ इति षाड्गुण्यं सप्तममधिकरणम्॥

---

4·2 प्रकृतिव्यसनवर्गः। राजराज्ययोर्व्यसनचिन्ता। पुरुषव्यसनवर्गः। पीडनवर्गः। स्तम्भवर्गः। कोशसंगवर्गः। बलव्यसनवर्गः। मित्रव्यसनवर्गः॥ इति व्यसनाधिकारिकमष्टममधिकरणम्॥

---

4·3 शक्तिदेशकालबलाबलज्ञानम्। यात्राकालाः। बलोपादानकालाः। सन्नाहगुणाः। प्रतिबलकर्म। पश्चात्कोपचिन्ता। बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारः। क्षयव्ययलाभविपरिमर्शः। बाह्याभ्यन्तराश्चापदः दूष्यशत्रुसंयुक्ताः अर्थानर्थसंशययुक्ताः। तासामुपायविकल्पजास्सिद्धयः॥ इत्यभियास्यत्कर्म नवममधिकरणम्॥

---

4·4 स्कन्धावारनिवेशः। स्कन्धावारप्रयाणम्। बलव्यसनावस्कन्दकालरक्षणम्। कूटयुद्धविकल्पाः। स्वसैन्योत्साहनम्। स्वबलान्यबलव्यायोगः। युद्धभूमयः। पत्त्यश्वरथहस्तिकर्माणि। पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः। सारगुल्फव[2] लवि-

---

[1] सन्धि.   [2] फल्गुविभागः.

भागः । पत्त्यश्वरथहस्तियुद्धानि । दण्डभोगमण्डलासंहतव्यूहनम् । तस्य प्रतिव्यूहस्था[1]पनम् ॥ इति साङ्ग्रामिकं दशममधिकरणम् ॥

---

भेदोपदानानि । उपांशु[2]दण्डः ॥ इति सङ्घवृत्तमेकादशमधिकरणम् ॥ 5.1

---

दूतकर्म । मन्त्रयुद्धम् । सेनामुख्यवधः । मण्डलप्रोत्साहनम् । शस्त्राग्निरसप्रणिधयः । वीवधासारप्रसारवधः । योगातिसन्धानम् । दण्डातिसन्धानम् । एकविजयः ॥ इत्याबलीयसं द्वादशमधिकरणम् ॥ 5.2

---

उपजापः । योगवामनम् । अपसर्पप्रणिधिः । पर्युपासनकर्म । अवमर्दः । लब्धप्रशमनम् ॥ इति दुर्गलम्भोपायस्त्रयोदशमधिकरणम् ॥ 5.3

---

परघातप्रयोगः । प्रलम्भनम् । स्वबलोपघातप्रतीकारः ॥ इत्यौपनिषदिकं[3] चतुर्दशमधिकरणम् ॥ 5.4

---

तन्त्रयुक्तयः । इति तन्त्रयुक्तिः पञ्चदशमधिकरणम् ॥ 5.5

शास्त्रसमुद्देशः पञ्चदशाधिकरणानि सपञ्चाशदध्यायशतं साशीति[4] प्रकरणशतं षट्श्लोकसहस्राणीति ॥ 5.6

---

1 संस्था. 2 प्रांशु. 3 निषदं. 4 तिः.

5·7 सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
कौटिल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥

इति कौटिलीयेऽर्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे
राजवृत्तिः प्रथमोऽध्यायः.

## १. प्रक. विद्यासमुद्देशः.

6·1 आन्वीक्ष[1]की त्रयी वार्ता दण्डनीतिश्चेति विद्याः ।

त्रयी वार्ता दण्डनीतिश्चेति मानवाः—त्रयीविशेषो ह्यान्वीक्षकीति ।

6·3 वार्ता दण्डनीतिश्चेति बार्हस्पत्याः—संवरणमात्रं हि त्रयी लोकयात्राविद इति ।

दण्डनीतिरेका विद्येत्यौशनसाः—तस्यां हि सर्वविद्यारम्भाः प्रतिबन्धा[2] इति ॥

6·5 चतस्र एव विद्या इति कौटिल्यः । ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम् ।

6·6 साङ्ख्यं योगो लोकायतं चेत्यान्वीक्ष[3]की ।

6·7 धर्माधर्मौ त्रय्याम् । अर्थानर्थौ वार्तायाम् । नयान[4]यौ दण्डनीत्यां बलाबले चैतासां हेतुभिरन्वीक्ष[5]माणा लोकस्योप

[1] क्षि. [2] बद्धा. [3] क्षि. [4] नयापन. [5] क्ष्य.

करोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्य-क्रियावैशारद्यं च करोति—

प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम् । 7·1
आश्रयस्सर्वधर्माणां शश्वदान्वीक्ष[1]की मता ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे विद्यासमुद्देशे
आन्वीक्ष[1]कीस्थापना द्वितीयोऽध्यायः.

---

सामर्ग्यजुर्वेदास्त्रयस्त्रयी । अथर्ववेदेतिहासवेदौ च वेदाः । 7·3
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितिर्ज्योतिषमिति चाङ्गानि ।

एष त्रयीधर्मश्चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः ।

स्वधर्मो ब्राह्मणस्याध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति । 7·6

क्षत्रियस्याध्ययनं यजनं दानं शस्त्राजीवो भूतरक्षणं च ।
वैश्यस्याध्ययनं यजनं दानं कृषिपाशुपाल्ये वाणिज्या च ।
शूद्रस्य द्विजातिशुश्रूषा वार्ता कारुकुशीलवकर्म च ।

गृहस्थस्य स्वकर्माजीवस्तुल्यैरसमानर्षिभिर्वैवाह्यमृतुगामित्वं देवपित्रतिथिभृत्येषु त्यागश्शेषभोजनं च । 8·1

---

[1] क्षि.

8·2 ब्रह्मचारिणस्स्वाध्यायोऽग्निकार्याभिषेकौ भैक्षव्रतत्वमाचार्ये प्राणान्तिकी वृत्तिस्तदभावे गुरुपुत्रे सब्रह्मचारिणि वा।

8·3 वानप्रस्थस्य ब्रह्मचर्यं भूमौ शय्या जटाऽजिनधारणमग्निहोत्राभिषेकौ देवतापित्रतिथिपूजा वन्यश्चाहारः।

8·4 परिव्राजकस्य संयतेन्द्रियत्वमनारम्भो निष्किञ्चनत्वं सङ्गत्यागो भैक्षमनेकत्रारण्य[1]वासो बाह्यमाभ्य[2]न्तरं च शौचं स-

8·5 र्वेषामहिंसा सत्यं (शौच)[3] मनसूयाऽऽनृशंस्यं क्षमा च।

8·6 स्वधर्मस्स्वर्गायानन्त्याय च। तस्यातिक्रमे लोकस्सङ्करादुच्छिद्येत—

8·7 तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥

इति विनयाधिकारिके प्रथमेऽधिकरणे विद्यासमुद्देशे
त्रयी[4] स्थापना तृतीयोऽध्यायः.

---

9·1 कृषिपाशुपाल्ये वाणिज्या च वार्ता; धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपका[5]रिकी। तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्याम्।

---

[1] ण्ये. [2] ह्याभ्यं. [3] शौचं. [4] तृतीय. [5] चा.

आन्वीक्ष[1]कीत्रयीवार्तानां योगक्षेमसाधनो दण्डः । तस्य नीतिर्दण्डनीतिः ; अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च । 9·2

तस्यामायत्ता लोकयात्रा । तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डस्स्यात् ।

न ह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्ड इत्याचार्याः ॥ 9·4

नेति कौटिल्यः । तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः । मृदुदण्डः परिभूयते । यथार्हदण्डः पूज्यः । सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति । दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग पुनर्गृहस्थान् ? अप्रणीतो हि मात्स्यन्यायमुद्भावयति । बलीयानबलं हि ग्रसते दण्डधराभावे । तेन गुप्तः प्रभवतीति ॥ 9·5 10·1

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः । 10·2
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे विद्यासमुद्देशे वार्तास्थापना दण्डनीतिस्थापना च चतुर्थोऽध्यायः.

विद्यासमुद्देशस्समाप्तः.

---

1 क्षि.

## २. प्रक. वृद्धसंयोगः.

10·4 तस्माद्दण्डमूलास्तिस्रो विद्याः ।

विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः ।

10·5 कृतकस्स्वाभाविकश्च विनयः । क्रिया हि द्रव्यं विनयति नाद्रव्यम् । शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम् ।

विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च ।

वृत्तचौलकर्मा लिपिं सङ्ख्यानं चोपयुञ्जीत ।

10·7 वृत्तोपनयनस्त्रयीमान्वीक्ष[1]कीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः ।

11·2 ब्रह्मचर्यं चाषोडशाद्वर्षात् । अतो गोदानं दारकर्म च । अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं, तन्मूलत्वाद्विनयस्य ।

11·4 पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत् । पश्चिममितिहासश्रवणे । पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः ।

शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात् । अगृहीतानामाभीक्ष्ण्यश्रवणं च ।

---

[1] क्षि.

श्रुताद्धि प्रज्ञोपजायते प्रज्ञया योगो योगादात्मवत्तेति विद्यासामर्थ्यम् ॥ 11·7

विद्याविनीतो राजा हि प्रजानां विनये रतः । 11·8
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे
वृद्धसंयोगः पञ्चमोऽध्यायः.

## ३. प्रक. इन्द्रियजयः.

विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात्कार्यः । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरस[1]गन्धेष्वविप्रतिपत्तिरिन्द्रियजयः शास्त्रार्थानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः । 12·1

तद्विरुद्धवृत्तिरवश्येन्द्रियश्चातुरन्तोऽपि राजा सद्यो विनश्यति—यथा दाण्डक्यो नाम भोजः कामात् ब्राह्मणकन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश । करालश्च वैदेहः ।

कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तः, तालजङ्घश्च भृगुषु । 12·4
लोभादैलश्चातुर्वर्ण्यमत्याहारयमाणः, सौवीरश्चाजबिन्दुः[2] ।
मानात् रावणः परदारानप्रयच्छन्, दुर्योधनो राज्यादंशं च।
मदाद्दम्भोद्भवो भूतावमानी हैहयश्चार्जुनः ।

[1] स्पर्शरस. [2] बिन्दुस्सौवीरश्चाजमा.

13·1 हर्षाद्वातापिरगस्त्यामत्यासादयन्, वृष्णिसङ्घश्च द्वैपायनमिति ।

13·2 एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः ।
सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥
शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।
अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ॥

इति विनयाधिकारिके इन्द्रियजये
अरिषड्वर्गत्यागः षष्ठोऽध्यायः.



13·4 तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत । वृद्धसंयोगेन प्रज्ञां, चारेण चक्षुः, उत्थानेन योगक्षेमसाधनं, कार्यानुशासनेन स्वधर्मस्थापनं, विनयं विद्योपदेशेन, लोकप्रियत्वमर्थसंयोगेन, हितेन वृत्तिम् ।

13·5 एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत् । स्वप्नलौल्यमनृतमुद्धतवेषत्वमनर्थ[1]संयोगं च । अधर्मसंयुक्तमनर्थसंयुक्तं च व्यवहारम् ।

14·1 धर्मार्थाविरोधेन कामं सेवेत । न निस्सुखस्स्यात् । समं वा त्रिवर्गमन्योन्यानुबन्धम् । एको ह्यत्यासेवितो धर्मार्थकामाना[2]त्मानमितरौ च पीडयति । 'अर्थ एव प्रधानः' इति कौटिल्यः—अर्थमूलौ हि धर्मकामाविति ।

[1] मानर्थ. [2] मानामात्मा.

मर्यादां स्थापयेदाचार्यानमात्यान्वा । य एनमपायस्थानेभ्यो वारयेयुः,[1] छायानालिका[2]प्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः ॥ 14·3

सहायसाध्यं राजत्वं चक्रमेकं न वर्तते ।
कुर्वीत सचिवांस्तस्मात्तेषां च शृणुयान्मतम् ॥ 14·4

इति विनयाधिकारिके इन्द्रियजये राजर्षिवृत्तं
सप्तमोऽध्यायः. इन्द्रियजयस्समाप्तः.

## ४. प्रक. अमात्योत्पत्तिः.

"सहाध्यायिनोऽमात्यान् कुर्वीत दृष्टशौचसामर्थ्यत्वात्" इति भारद्वाजः । ते ह्यस्य विश्वास्याः भवन्तीति ॥ 14·6

नेति विशालाक्षः । सहक्रीडितत्वात् परिभवन्त्येनम् । ये ह्यस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत—समानशीलव्यसनत्वात्; ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति ॥

"साधारण एष दोषः" इति पराशरः—तेषामपि मर्मज्ञभयात्कृताकृतान्यनुवर्तेत ॥ 15·1

यावद्भ्यो गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः ।
अवशः कर्मणा तेन वश्यो भवति तावताम् ॥

[1] "नृपस्य ते हि सुहृदस्त एव गुरवो मताः । य एनमुत्पथगतं वारयन्त्यनिवारिताः" ॥ इति कामान्दकः.

[2] नालिकेति पाठः. न लिकेति उपाध्यायनिरपेक्षास्थानुवादः.

य एनमापत्सु प्राणाबाधयुक्तास्त्वनुगृह्णीयुस्तानमात्यान् कुर्वीत । दृष्टानुरागत्वादिति ॥

15·3 नेति पिशुनः—भक्तिरेषा न बुद्धिगुणः । सङ्ख्यातार्थेषु कर्मसु नियुक्ता ये यथाऽऽदिष्टमर्थं सविशेषं वा कुर्युस्तानमात्यान्कुर्वीत । दृष्टगुणत्वादिति ॥

15·4 नेति कौणपदन्तः—अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहानमात्यान् कुर्वीत, दृष्टापदानत्वात् ते ह्येनमपचरन्तमपि न त्यजन्ति सगन्धत्वात् । अमानुषेष्वपि चैतत् दृश्यते—गावो ह्यसगन्धं गोगणमतिक्रम्य सगन्धेष्वेवावतिष्ठन्ते इति ॥

15·5 नेति वातव्याधिः । ते ह्यस्य सर्वमवगृह्य स्वामिवत्प्रचरन्तीति । तस्मान्नीतिविदो नवानमात्यान्कुर्वीत; नवास्तु यमस्थाने दण्डधरं मन्यमाना नापराध्यन्तीति ॥

15·6 नेति बाहुदन्तीपुत्रः—शास्त्रविददृष्ट[1] कर्माकर्मसु विषादं गच्छेत् । अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तानमात्यान्कुर्वीत । गुणप्राधान्यादिति ।

16·1 सर्वमुपपन्नमिति कौटिल्यः—कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते । सामर्थ्यतश्च—

16·2 विभज्यामात्यविभवं देशकालौ च कर्म च ।
अमात्यास्सर्व एवैते कार्यास्स्युर्न तु मन्त्रिणः ॥

इति विनयाधिकारिके अमात्योत्पत्तिः अष्टमोऽध्यायः.

---

[1] मातृकाकोशे "शास्त्रविदृष्ट" इत्यपि पठितु शक्यते.

# ५. प्रक. मन्त्रिपुरोहितोत्पत्तिः.

जानपदोऽभिजातः स्ववग्रहः कृतशिल्पश्चक्षुष्मान् प्राज्ञो- 16'4
धारयिष्णुर्दक्षो वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः
क्लेशस[1]हश्शुचिर्मैत्रो दृढभक्तिश्शी[2]लबलारोग्यसत्त्वसंयुक्तः स्त-
म्भचापल्यवर्जितस्संप्रियो वैराणामकर्तेत्यमात्यसम्पत् ।

अतः पादार्धगुणहीनौ मध्यमावरौ ।

तेषां जनपदमवग्रहं चाप्ततः[3] परीक्षेत—समानविद्ये- 16'6.
भ्यः शिल्पं शास्त्रचक्षुष्मत्तां च; कर्मारम्भेषु प्रज्ञां धारयिष्णुतां
दाक्ष्यं च, कथायोगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्त्वं च;
आपद्युत्साहप्रभावौ क्लेशसहत्वं च; संव्यवहाराच्छौचं मैत्रतां
दृढभक्तित्वं च; संवासिभ्यश्शीलबलारोग्यसत्त्वयोगमस्तम्भ-
मचापल्यं च; प्रत्यक्षतः संप्रियत्वमवैरित्वं च ।

प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः । स्वयंदृष्टं प्रत्यक्षम्, 17'2
परोपदिष्टं परोक्षम् । कर्मसु कृतेनाकृतावेक्षणमनुमेयम् ॥

अयौगप[4]द्यात्तु कर्मणामनेकत्वादनेकस्थत्वाच्च देशकाला-
त्ययो मा भूत् इति परोक्षममात्यैः कारयेदित्यमात्यकर्म ।

पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते द- 17'4
ण्डनीत्यां च अभिविनीतमापदां दैवमानुषीणां अथर्वभिरुपा-

---

[1] हर. [2] भक्तिशील. [3] च.प्यत:. [4] यौगप.

यैश्च प्रतिकर्तारं कुर्वीत । तमाचार्यं शिष्यः पितरं पुत्रो भृत्यस्स्वामिनमिव चानुवर्तेत ।

17·6 ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम् ।
जयत्यजितमत्यन्तं शास्त्रानुगम[1]शस्त्रितम् ॥

इति विनयाधिकारिके मन्त्रिपुरोहितोत्पत्तिः नवमोऽध्यायः.

## ६. प्रक. उपधाभिश्शौचाशौचज्ञानममात्यानाम्.

मन्त्रिपुरोहितसख[2]स्सामान्येष्वधिकरणेषु स्थापयित्वाऽमा-
18·1 त्यानुपधाभिश्शोधयेत् ।

पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजा अवक्षिपेत् । स सत्रिभिश्शपथ[3]पूर्वमेकैकममात्यमुपजापयेत्—अधार्मिकोऽयं राजा साधुधार्मिकमन्यमस्य तत्कुलीनमवरुद्धं कुल्यमेकप्रग्रहं सामन्तमाटविकमौपपादिकं[4] वा प्रतिपादयामः सर्वेषामेतद्रोचते कथं वा तवेति । प्रत्याख्याने शुचिरिति धर्मोपधा ।

18·5 सेनापतिरसत्प्रग्रहे[5]णावक्षिप्तस्सत्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन[6] राजविनाशनाय—सर्वेषामेतद्रोचते कथं वा तवेति । प्रत्याख्याने शुचिरित्यर्थोपधा ।

18·7 परिव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा महामात्रमेकैकमुपजपेत्—राजमहिषी त्वां कामयते कृतसमागमोपाया ; महानर्थश्च भविष्यतीति । प्रत्याख्याने शुचिरिति कामोपधा ।

[1] गत. [2] पुरोहितः. [3] शापथ. [4] पादिकं. [5] रसत्प्रांतग्रहे. [6] क्षोभयेद्राज.

प्रवहण[1] निमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत् । ते- 19·3
नोद्वेगेन राजा तानवरुन्ध्यात् । कापटिकच्छात्रः पूर्वावरुद्धस्ते-
षामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्—असत्प्रवृत्तोऽयं राजा,
साध्वेनं हत्वा अन्यं प्रतिपादयिष्यामः; सर्वेषामेतद्रोचते ।
कथं वा तवेति । प्रत्याख्याने शुचिरिति भयोपधा ।

तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत् । 19·5
अर्थोपधाशुद्धान् समाहर्तृसन्निधातृनिचयकर्मसु ।
कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु ।
भयोपधाशुद्धानासन्नकार्येषु राज्ञः । सर्वोपधाशुद्धान् मन्त्रिणः
कुर्यात् । सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयोजयेत् ।

त्रिवर्गभयसंशुद्धानमात्यान्स्वेषु कर्मसु । 19·6
अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः ॥
न त्वेव कुर्यादात्मानं देवीं वा लक्षमीश्वरः ।
शौचहेतोरमात्यानामेतत्कौटिल्यदर्शनम् ॥ 20·1
न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत् ।
कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥
कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा ।
नागत्वाऽन्तर्निवर्तेत स्थिता सत्त्ववतां धृतौ ॥

---

[1] "सामुद्रिकाः व्यापारिणः महासमुद्रं प्रवहणैस्तरन्ति" इति उत्तराध्ययनसूत्रटीकायाम् प. २४६.

20·3 तस्माद्बाह्यमधिष्ठानं कृत्वा कार्ये चतुर्विधे ।
शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ॥

इति विनयाधिकारिके उपधाभिश्शौचाशौच-
ज्ञानममात्यानां दशमोऽध्यायः.

## ७. प्रक. गूढपुरुषोत्पत्तिः

20·5 उपधाभिश्शुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत् ।

कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्रितीक्ष्णरसदभिक्षुकीश्च ।

परमर्मज्ञः प्रगल्भः छात्रः[1] कापटिकः । तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयात्—राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीमेव प्रत्यादिशेति ।

20·7 प्रव्रज्याप्रत्यवसितः[2] प्रज्ञाशौचयुक्त उदास्थितः । स वार्ताकर्मप्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म कारयेत् । कर्मफलाच्च सर्वप्रव्राजितानां ग्रासाच्छादनावसथान् प्रतिविदध्यात् । वृत्तिकामांश्चोपजपेत्—एतेनैव दोषेण[3] राजार्थश्चरितव्यो भक्तवेतनकाले चोपस्थातव्यमिति ।

सर्वप्रव्राजिताश्च स्वं स्वं वर्गमुपजपेयुः ।

21·2 कर्षको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो गृहपतिकव्यञ्जनः । स कृषिकर्मप्रदिष्टायां भूमाविति—समानं पूर्वेण ।

[1] प्रगल्भच्छात्रः. [2] प्रव्रज्यप्रत्यवसतः. [3] वेषेण.

वाणिजको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदे[1]हकव्यञ्जनः । 21·3
स वणिक्कर्मप्रदिष्टायां भूमाविति—समानं पूर्वेण ॥

मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः । स नगराभ्याशे प्रभूतमुण्ड[2] जटिलान्तेवासी शाकं यवसमुष्टिं वा मासद्विमासान्तरं प्रकाशमश्नीयात्, गूढमिष्टमाहारम् । वैदेहकान्तेवासिनश्चैनं समिद्धयोगैरर्चयेयुः शिष्याश्चास्य विदयेयुः—"असौ सिद्धस्सामेधिकः" इति । समेधाशास्तिभिश्चाभिगतानामङ्गविद्यया शिष्यसंज्ञाभिश्च कर्मण्यभिजनेऽवसितान्यादिशेदल्पलाभमग्निदाहं चोरभयं दूष्यवधं तुष्टदानं विदेशप्रवृत्तिज्ञानं "इदमद्य श्वो वा भविष्यतीदं वा राजा करिष्यतीति" ॥ 21·6

तदस्य गूढास्सत्रिणश्च संवादयेयुः । 22·2

सत्वप्रज्ञावाक्यशक्तिसम्पन्नानां राजभाग्य[3] मनुव्याहरेत्[4] मन्त्रिसंयोगं च । मन्त्री चैषां वृत्तिकर्मभ्यां वियतेत । ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत् । अकारणक्रुद्धान् तूष्णींदण्डेन राजद्विष्टकारिणश्च ॥

पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम् । 22·4
जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्तिताः ॥

इति विनयाधिकारिके गूढपुरुषोत्पत्तौ
संस्थोत्पत्तिः एकादशोऽध्यायः.

---

[1] वैदेहि. [2] मुण्डनको. [3] भाग्य. [4] रते.

# ८ प्रक. गूढपुरुषप्रणिधिः.

22.6 ये चाप्यसम्बन्धिनोऽवश्यभर्तव्यास्ते लक्षणमङ्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं[1] निमित्तमन्तरचक्रमित्यधीयानाः सत्रिणस्संसर्गविद्या वा ।

ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः ।

23.1 ये बन्धुषु निस्स्नेहाः क्रूराश्चालसाश्च ते रसदाः ।

परिव्राजिका वृत्तिकामा दरिद्रा विधवा प्रगल्भा ब्राह्मण्यन्तःपुरे कृतसत्कारा महामात्रकुलान्यधिगच्छेत् ॥

एतया मुण्डा वृषल्यो व्याख्याताः ।

इति सञ्चाराः ।

तान्राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातृप्रदेष्टृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषदध्यक्षदण्डदुर्गान्तपालाटविकेषु श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान् भक्तितस्सामर्थ्ययोगाच्चापसर्पयेत् ॥

23.5 तेषां बाह्यं चारं छत्रभृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणः तीक्ष्णा विद्युः ।

तं सत्रिणः संस्थास्वर्पयेयुः ।

---

1 धर्मं.

सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारका रसदाः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मानो नटनर्तकगायनवादकवाग्जीवनकुशीलवाः स्त्रियश्चाभ्यन्तरं चारं विद्युः । तं भिक्षुक्यः संस्थास्वर्पयेयुः । 23·7 24·2

संस्थानामन्तेवासिनः संज्ञालिपिभिश्चारसञ्चारं कुर्युः ।

न चान्योन्यं संस्थास्ते वा विद्युः ।

भिक्षुकीप्रतिषेधे द्वास्स्थपरम्परा मातापितृव्यञ्जनाः शिल्पकारिकाः कुशीलवा दास्यो वा गीतवाद्य[1] भाण्डगूढलेख्यसंज्ञाभिर्वा चारं निर्हरेयुः । दीर्घरोगोन्मादाग्निरसविसर्गेण वा गूढनिर्गमनम् ।

त्रयाणा[2]मेकवाक्ये सम्प्रत्ययः । 24·7

तेषामभीक्ष्णविनिपाते तूष्णींदण्डः प्रतिषेधो वा ।

कण्टकशोधनोक्ताश्चापसर्पाः परेषु कृतवेतना वसेयुः ।

सम्पातश्चारार्थे[3] । त उभयवेतनाः ।

गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान् । 24·9

तांश्चारिप्रहितान्विद्यात्तेषां शौचं च तद्विधैः ॥

एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान् । 25·2

उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि ॥

अन्तर्गृहचरास्तेषां कुब्जवामनषण्डकाः ।

शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः ॥

---

1 गीतपाठ्य. 2 त्रयाणामन्योन्य. 3 तन्निश्चारार्थे.

25·4 दुर्गेषु वणिजस्संस्था दुर्गान्ते सिद्धतापसाः ।
कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः ॥
वने वनचरैः[1] कार्याश्श्रमणाटविकादयः ।
परप्रवृत्तिज्ञानार्थाः शीघ्राश्चारपरम्पराः ॥
परस्य चैके[2] बोद्धव्याः तादृशैरेव तादृशाः ।
चारसञ्चारिणस्संस्था गूढाश्चागूढसंज्ञिताः ॥
25·6 अकृत्यान् कृत्यपक्षीयैः दर्शितान्कार्यहेतुभिः ।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥

इति विनयाधिकारिके गूढपुरुषोत्पत्तौ
सञ्चारोत्पत्तिः द्वादशोऽध्यायः .

## ९ प्रक. स्वविषये कृत्याकृत्यपक्षरक्षणम्.

26·1 गूढपुरुषप्रणिधिः कृतमहामात्या[3]पसर्पः पौरजानपदानपसर्पयेत् ।

सत्रिणो द्वन्द्विनस्तीर्थसभाशालापूगजनसमवायेषु विवादं कुर्युः—"सर्वगुणसम्पन्नश्चायं राजा श्रूयते । न चास्य कश्चित् गुणो दृश्यते यः पौरजानपदान् दण्डकाराभ्यां पीडयति" इति ।

तत्र येऽनुप्रशंसेयुः तानितरस्तं च प्रतिषेधयेत्—"मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे । धान्यषड्भागं
26·4 पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः । तेन

[1] चराः:  [2] चेते.  [3] मात्रा.

भूता राजानः प्रजानां योगक्षेमवहाः तेषां किल्बिषमदण्डकरा हरन्ति यो [रन्त्ययो ?] ग[1]क्षेमवहाश्च प्रजानाम्। तस्मादुञ्छष-ड्भागमारण्यका अपि निवपन्ति—'तस्यैतद्भागधेयं योऽस्मान् गोपायतीति'। इन्द्रय[2]मस्थानमेतत् राजानः प्रत्यक्षहेडप्रसादाः। तानवमन्यमानान् दैवोऽपि दण्डः स्पृशति। तस्माद्राजानो नावमन्तव्याः" इति क्षुद्रकान्प्रतिषेधयेत्।

किंवदन्तीं च विद्युः। 27·1

ये चास्य धान्यपशुहिरण्यान्याजीवन्ति तैरुपकुर्वन्ति, व्यसने अभ्युदये वा कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्त्यमित्रमाटविकं वा प्रतिषेधयन्ति, तेषां मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः।

तुष्टान् भूयः [3]पूजयेत्।

अतुष्टान् तुष्टिहेतोस्त्यागेन साम्ना च प्रसादयेत्। परस्पराद्वा भेदयेदेनान् सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च। तथाऽप्यतुष्यतो दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत्। विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत्। गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत् परेषामास्पदभयात्।

क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः। तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसम्बन्धं अमित्र[4]प्रतिसम्बन्धं वा विद्युः। 27·2

---

[1] अयोग. [2] इन्द्रय. [3] अर्थमानाभ्यां पू. [4] अमित्राटविक प्र.

27·3 तुष्टानर्थमानाभ्यां पूजयेत् ।

अतुष्टान् सामदानभेददण्डैस्साधयेत् ।

27·4 एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः ।

परोपजापात्संरक्षेत् प्रधानान् क्षुद्रकानपि ॥

इति विनयाधिकारिके स्वविषये कृत्याकृत्यपक्षरक्षणं त्रयोदशोऽध्यायः.

## १०. प्रक. परविषये कृत्याकृत्यपक्षोपग्रहः.

28·1 कृत्याकृत्यपक्षोपग्रहस्स्वविषये व्याख्यातः। परविषये वाच्यः। संश्रुत्यार्थान् विप्रलब्धः, तुल्यकारि[1]णोश्शिल्पे वोपकारे वा विमानितः, वल्लभावरुद्धः समाहूय पराजितः, प्रवासोपतप्तः, कृत्वा व्ययमलब्धकार्यः, स्वधर्माद्दायाद्याद्वोपरुद्धः मानाधिकाराभ्यां भ्रष्टः,[2] तुल्यै[3]रन्तर्हितः, प्रसभाभिमृष्टस्त्रीकः, काराभिन्यस्तः, परोक्ष[4]दण्डितः, मिथ्याचारवारितः, सर्वस्व[5]माहारितः बन्धनपरिक्लिष्टः, प्रवासितबन्धुरिति क्रुद्धवर्गः ।

28·3 स्वयमुपहतः, विप्रकृतः[6], पापकर्माभिख्यातः, तुल्यदोषदण्डेनोद्विग्नः, पर्यात्तभूमिः, दण्डेनोपनतः, सर्वाधिकरणस्थः, सहसोपचितार्थः, तत्कुलीनो वाशंसुः प्रद्विष्टो राज्ञा, राजद्वेषी चेति भीतवर्गः ॥

[1] तुल्याधिकारी [2] भृष्टः. [2] कुल्यैः. [4] परोक्त. [5] सर्वस्व. [6] क्रुष्टः.

परिक्षीणोऽत्यात्तस्वः कदर्यो व्यसन्यत्याहितव्यवहारश्चेति लुब्धवर्गः । 29.1

आत्मसम्भावितो मानकामः शत्रुपूजामर्षितो नीचैरुपहितस्तीक्ष्णस्साहसिको भोगेनासन्तुष्ट इति मानिवर्गः ।

तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत्—“यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नात्येवमयमशास्त्रचक्षुरन्धो राजा पौरजानपदवधायाभ्युत्थितः; शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुममर्षः[1] क्रियताम्” इति क्रुद्धवर्गमुपजापयेत् ।

“यथा लीनस्सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजत्येवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजत्यन्यत्र गम्यताम्” इति भीतवर्गमुपजापयेत् । 29.4

यथा श्वगणिनां धेनुश्श्वभ्यो दुग्धे न ब्राह्मणेभ्य एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नात्मगुणसम्पन्नेभ्यः । असौ राजा पुरुषविशेषज्ञस्सेव्यतामिति” लुब्धवर्गमुपजापयेत् ।

“यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषामेवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम् । असौ राजा पुरुषविशेषज्ञः तत्र गम्यतामिति” मानिवर्गमुपजापयेत् । 29.6

[1] कर्तुमर्ष.

30·2 तथेति प्रतिपन्नांस्तान् संहितान् पणकर्मणा ।
योजयेत यथाशक्ति सापसर्पान् स्वकर्मसु ॥
लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु ।
अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥

इति विनयाधिकारिके परविषये कृत्याकृत्यपक्षोपग्रहः
चतुर्दशोऽध्यायः.

## ११. प्रक. मन्त्राधिकारः.

30·5 कृतस्वपक्षपरपक्षोपग्रहः कार्यारम्भान् चिन्तयेत् ।

मन्त्रपूर्वास्सर्वारम्भाः । तदुद्देशः संवृतः कथानामनिस्रावी पक्षिभिरप्यनालोक्यस्स्यात् ।

श्रूयते हि शुकशारिकाभिः मन्त्रो भिन्नश्श्वभिरन्यैश्च तिर्यग्योनिभिः ।

तस्मान्मन्त्रोद्देशमनायुक्तो नोपगच्छेत् ।

उच्छिद्येत मन्त्रभेदी ।

30·8 मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्याम् ।

इङ्गितमन्यथावृत्तिः ।

आकृतिग्रहणमाकारः । तस्य संवरणं आयुक्तपुरुषरक्षणमा कार्यकालादिति । तेषां हि प्रमादमदसुप्तप्रलापकामा-

दिरुत्सेकः । प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति । तस्मा- 31·1
द्रक्षेन्मन्त्रम् ।

मन्त्रभेदोऽन्ययोग[1]क्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च ।

तस्मात्—"गुह्यमेको मन्त्रयेतेति" भारद्वाजः । मन्त्रि- 31·4
णामपि हि मन्त्रिणो भवन्ति । तेषामप्यन्ये । सैषा मन्त्रि-
परम्परा मन्त्रं भिनत्ति ।

तस्मान्नास्य परे विद्युः कर्म किञ्चिच्चिकीर्षितम् ।
आरब्धारस्तु जानीयुरारब्धं कृतमेव वा ॥

"नैकस्य मन्त्रसिद्धिरस्तीति" विशालाक्षः । प्रत्यक्षप- 31·6
रोक्षानुमेया हि राजवृत्तिः । अनुपलब्धस्य ज्ञानमुपलब्धस्य नि-
श्चयबलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धि-
रिति मन्त्रिसाध्यमेतत् । तस्माद्बुद्धिवृद्धैस्सार्धमासीत मन्त्रम् ॥

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम् ।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः ॥

"एतन्मन्त्रज्ञानं नैतन्मन्त्ररक्षणमिति" पराशरः । यद- 31·8
स्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत् । 'कार्यमि-
दमेवमासीदेवं वा यदि भवेत्तत्कथं कर्तव्यमिति' । ते यथा ब्रूयुः
तत्कुर्यात् । एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति ।

[1] द्योऽयोग.

32·1 "नेति" पिशुनः । मन्त्रिणो हि व्यवहितमर्थं वृत्त मवृत्तं वा पृष्टमनादरेण ब्रुवन्ति प्रकाशयन्ति वा स दोषः । तस्मात्कर्मसु ये येष्वभिप्रेतास्तैस्सह मन्त्रयेत् । तैर्मन्त्रयमाणो हि मन्त्रबुद्धिं गुप्तिं च लभत इति ॥

32·2 "न" इति कौटिल्यः । अनवस्था ह्येषा । मन्त्रिभिस्त्रिभि-श्चतुर्भिर्वा सह मन्त्रयेत ।

मन्त्रयमाणो ह्येकेनार्थकृच्छ्रेषु निश्चयं नाधिगच्छेत् । एकश्च मन्त्री यथेष्टमनवग्रहश्चरति ।

द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यामवगृह्यते । विगृ-हीताभ्यां विनाश्यते ।

त्रिषु[1] चतुर्षु वा नैकान्तं कृच्छ्रेणोपपद्यते महादोषम् । उपपन्नं[2] तु भवति । ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते । मन्त्रो वा रक्ष्यते ।

देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत ।

32·3 कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, वि-निपातप्रतीकारः, कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः ।

तानेकैकशः पृच्छेत् समस्तांश्च ॥

हेतुभिश्चैषां मतिप्रविवेकान् विद्यात् । अवाप्तार्थः कालं नातिक्रामयेत् ।

---

[1] तत्त्रिषु.  [2] दोष उपपन्नस्तु.

न दीर्घकालं मन्त्रयेत च तेषां पक्षै[1]र्येषां अपकुर्यात् । 32·5

"मन्त्रिपरिषदं द्वादशामात्यान्कुर्वीतेति" मानवाः ।

"षोडशेति" बार्हस्पत्याः ।

"विंशतिम्" इत्यौशनसाः । 33·1

"यथासामर्थ्यम्" इति कौटिल्यः ।

ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः । अकृतारम्भमा-रब्धानुष्ठानमनुष्ठितविशेषं नियोगसम्पदं च कर्मणां कुर्युः । आसन्नै[2]स्सह कार्याणि पश्येत् । अनासन्नैस्सह पत्रसम्प्रेषणेन मन्त्रयेत् ।

इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम् । तच्चक्षुः[3] । तस्मा- 33·5 दिमं द्व्यक्षं सहस्राक्षमाहुः ।

आत्ययिके कार्ये मन्त्रिणो मन्त्रपरिषदं चाहूय ब्रूयात् । तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत्कुर्यात् । कुर्वतश्च—

नास्य गुह्यं परे विद्युः छिद्रं विद्यात्परस्य च । 33.7
गूहेत्कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः ॥
यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति ।
एवमश्रुतशास्त्रार्थो न मन्त्रं श्रोतुमर्हति ॥

इति विनयाधिकारिके मन्त्राधिकारः
पञ्चदशोऽध्यायः.

---

[1] पक्ष्यै. [2] अनासन्नै. [3] स तच्चक्षुः ।

## १२. प्रक. दूतप्रणिधिः.

34·1 उद्धृतमन्त्रो दूतप्रणिधिः ।

अमात्यसम्पदोपेतो निसृष्टार्थः ।

पादगुणहीनः परिमितार्थः ।

अर्धगुणहीनः शासनहरः ।

34.4 सुप्रतिविहितयानवाहनपुरुषपरिवापः प्रतिष्ठेत "शासनमेवं वाच्यः,[1] 'परस्स वक्ष्यत्येवं तस्येदं प्रतिवाक्यमेवमतिसन्धातव्यम्' इत्यधीयानो गच्छेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत् । अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य चावेक्षेत । दुर्गराष्ट्रप्रमाणं सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत । पराधिष्ठानमनुज्ञातः प्रविशेत् । शासनं च यथोक्तं ब्रूयात् । प्राणाबाधेऽपि दृष्टे परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं वाक्यपूजनमिष्टपरिप्रश्नं गुणकथासङ्गमासन्नमासनं सत्कारमिष्टेषु स्मरणं विश्वासगमनं च लक्षयेत्तुष्टस्य । विपरीतमतुष्टस्य । तं

35·1 ब्रूयात्—"दूतमुखा[2] वै राजानस्त्वं चान्ये च । तस्मादुद्धृते[3]ष्वपि शस्त्रेषु यथोक्तं वक्तारस्तेषामन्तावसायिनो[4]ऽप्यवध्याः । किमङ्ग पुनर्ब्राह्मणः । परस्यैतद्वाक्यमेष दूतधर्मः" इति ।

35·3 वसेदविसृष्टः[5] प्रपूजया[6] नोत्सिक्तः । परेषु बलित्वं न

---

[1] वाच्यम्. [2] तमुखेन. [3] हृद्यते.
[4] मन्तेव.सिनो [5] दवसृष्टः. [6] पूजया.

मन्येत। वाक्यमनिष्टं सहेत। स्त्रियः पानं च वर्जयेत्। एकश्शयीत। सुप्तमत्तयोर्हि भावज्ञानं दृष्टं, कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं, रागाप[1]रागौ भर्तरि, रन्ध्रं च प्रकृतीनां तापसवैदेहकव्यञ्जनाभ्यामुपलभेत। तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा। तेषामसम्भाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः पुण्यस्थानदेवगृहचित्र[2]लेख्यसंज्ञाभिर्वा चारमुपलभेत। उपलब्धस्योपजापमुपेयात्। परेण चोक्तस्स्वासां प्रकृतीनां परिमाणं नाचक्षीत। "सर्वं वेद भवानिति" ब्रूयात्। कार्यसिद्धिकरं वा कार्यस्यासिद्धावुपरुध्यमानस्तर्कयेत्। 35·4 35·7 36·1

किं भर्तुर्मे व्यसनमासन्नं पश्यन्, स्वं वा व्यसनं प्रतिकर्तुकामः; पार्ष्णिग्राहासाराबन्तःकोपमाटविकं वा समुत्थापयितुकामः; मित्रमाक्रन्दाभ्यां वा व्यापादयितुकामः; स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः; संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकामः; सस्यकुप्यपण्यसङ्ग्रहं दुर्गकर्म बलसमुत्थानं[3] वा कर्तुकामः; स्वसैन्यानां व्यायामदेशकालावाकाङ्क्षमाणः; परिभवप्रमादाभ्यां वा संसर्गानुबन्धार्थी वा, मामुपरुणद्धीति ॥ 36·2

ज्ञात्वा वसेदपसरेद्वा। प्रयोजनमिष्टमपेक्षेत[4] वा। शासनमानिष्टमुक्त्वा बन्धवधभयादपि विसृष्टो[5] व्यपगच्छेदन्यथा नियम्येत[6]। 36·3

[1] रागोप. [2] विचित्र. [3] समुद्दानं
[4] प्रवेक्षेत. [5] द्विविसृष्टो. [6] यम्यते.

36·5 प्रेषणं सन्धिपालत्वं प्रतापो मित्रसङ्ग्रहः ।
उपजापस्सुहृद्भेदो गूढदण्डातिसारणम् ॥
बन्धुरत्नापहरणं चारज्ञानं पराक्रमः ।
समाधिमोक्षो दूतस्य कर्मयोगस्य चाश्रयः ॥
स्वदूतैः कारयेदेतत् परदूतांश्च रक्षयेत् ।
प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः ॥

इति विनयाधिकारिके दूतप्रणिधिः
षोडशोऽध्यायः.

## १६. प्रक. राजपुत्ररक्षणम्.

37·3 रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः परेभ्यश्च[1] । पूर्वं दारेभ्यः पुत्रेभ्यश्च ।

दाररक्षणं निशान्तप्रणिधौ वक्ष्यामः ।

पुत्ररक्षणं—जन्मप्रभृति राजपुत्रान् रक्षेत् । कर्कटकसधर्माणो हि जनकभक्षाः राजपुत्राः ।

37·6 "तेषामजातस्नेहे पितर्युपांशुदण्डश्श्रेयान्" इति भारद्वाजः ।

"नृशंसमदुष्ट[2]वधः क्षत्रबीजविनाशश्चेति" विशालाक्षः । तस्मादेकस्थानावरोधश्श्रेयानिति ।

37·8 "अहिभयमेतदिति" पाराशराः । कुमारो हि त्रिक

1 छात्रेभ्यश्च. 2 मदष्टं.

मभयान्मां पिता रुणद्धीति ज्ञात्वा तमेवाङ्के कुर्यात्तस्मादन्त-पालदुर्गे वासश्श्रेयानिति ।

"औरभ्रकं[1] भयमेतत्" इति पिशुनः । "प्रत्यापत्तौर्हि तदेव कारणं ज्ञात्वाऽन्तपालसखस्स्यात् । तस्मात् स्वविषयादपकृष्टे सामन्तदुर्गे वासश्श्रेयानिति" । 37'9

"वत्सस्थानमेतदिति" कौणपदन्तः । वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात् । तस्मान्मातृबन्धुषु वासश्श्रेयानिति । 38'2

"ध्वजस्थानमेतत्" इति वातव्याधिः । तेन हि ध्वजेनादितिकौशिकवदस्य मातृबान्धवा भिक्षेरन् । तस्मात् ग्राम्यधर्मेष्वेनमवसृजेयुः । सुखोपरुद्धा हि पुत्राः पितरं नाभिद्रुह्यन्तीति । 38'3

"जीवन्मरणमेतत्" इति कौटिल्यः । काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । तस्मादृतुमत्यां महिष्यां ऋत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायां कौमारभृत्यो गर्भभर्मणि प्रजनने[2] च वियतेत । प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समर्थं तद्विदो विनयेयुः ॥

सत्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्—पितरि विक्रम्य राज्यं गृहाणेति । तदन्यस्सत्त्री प्रतिषेधयेत्" इत्याम्भीयाः[3] । 38'5

[1] अगं. [2] प्रसवने. [3] त्याजीयः.

38·6 "महादोषमबुद्धबोधनमिति" कौटिल्यः। नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति। एवमयं नवबुद्धिर्यद्यदुच्यते तत्तच्छास्त्रोपदेशमिवाभिजानाति। तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च। सत्रिणस्त्वेनं[1] 'तव स्मः' इति वदन्तः पालयेयुः।

यौवनोत्सेकात् परस्त्रीषु मनः कुर्वाणं आर्याव्यञ्जनाभिः स्त्रीभिरमेध्याभि[2]श्शून्यागारेषु रात्रावुद्वेजयेयुः॥

मद्यकामं योगपानेनोद्वेजयेयुः।

द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः।

मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः।

पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः।

"अप्रार्थनीयो राजा विपन्ने घातस्सम्पन्ने नरकपातः, सक्रोशः प्रजाभिरेकलोष्टवधश्चेति"। विरागं प्रियमेकपुत्रं वा बध्नीयात्॥

बहुपुत्रः प्रत्यन्तमन्यविषयं वा प्रेषयेद्यत्र गर्भः पण्ड्यं[3] डिमबो[4] वा न भवेत्॥

39·3 आत्मसम्पन्नं सैनापत्ये यौवराज्ये वा स्थापयेत्।

बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः।

शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान्।

उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः।

अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः॥

---

[1] श्चैनं. [2] रसेव्या. [3] पण्यं. [4] डिम्बो.

स यद्येकपुत्रः पुत्रोत्पत्तावस्य प्रयतेत । 39·6

पुत्रिकापुत्रानुत्पादयेद्वा ।

वृद्धस्तु व्याधितो वा राजा मातृबन्धुतुल्य[1] गुणवत्सामन्तानामन्यतमेन क्षेत्रे बीजमुत्पादयेत् । न चैकपुत्रमविनीतं राज्ये स्थापयेत् । 40·2

बहूनामेकसंरोधः पिता पुत्रहितो भवेत् । 40·3
अन्यत्रापद ऐश्वर्यं ज्येष्ठभागी तु पूज्यते ॥
कुलस्य वा भवेद्राज्यं कुलसङ्घो हि दुर्जयः ।
अराजव्यसनाबाधः शश्वदावसति क्षितिम् ॥

इति विनयाधिकारिके राजपुत्ररक्षणं सप्तदशोऽध्यायः

## १४–१५. प्रक. अवरुद्धवृत्तमवरुद्धे च वृत्तिः.

राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत । अन्यत्र प्राणबाधकप्रकृतिकोप[2] पातकेभ्यः ॥ 40·5

पुण्यकर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत ।

पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत् ।

अभिरूपं[3] च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत् ॥

तथाऽप्यतुष्यन्तमन्यस्मिन् पुत्रे दारेषु वा स्निह्यन्तमरण्याय आपृच्छेत । बन्धवधभयाद्वा यस्सामन्तो न्यायवृत्तिर्धार्मिकः 40·7

[1] कुल्य. [2] कोपक. [3] अविरुद्धं.

सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत ।

तत्रस्थः कोदण्ड[1] सम्पन्नः प्रवीरपुरुषकन्यासम्बन्धमटवीसम्बन्धं कृत्यपक्षोपग्रहं वा कुर्यात् ।

41·2 एकचरस्सुवर्ण[2] पाकमणिरागहेमरूप्यपण्याकरकर्मान्तानाजीवेत् । पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं देवद्रव्यमाढ्यविधवां वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसन्धायापहरेत् ।

पारग्रामिकं वा योगमातिष्ठेत् ।

मातुः परिजनोपग्रहेण वा चेष्टेत ।

41·3 कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डछद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखः छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयात्—“अहमसौ कुमारः, सहभोग्यमिदं राज्यमेको नार्हति भोक्तुं तत्र ये कामयन्ते भर्तुं;[3] नाहं[4] द्विगुणेन भक्तवेतनेनोपस्थास्ये” इति ।

इत्यवरुद्धवृत्तम् ॥

अवरुद्धं तु मुख्यपुत्रमपसर्पाः प्रतिपाद्यानयेयुः ।

41·6 माता वा प्रतिग्रहीता ।

त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः ।

अत्यक्तं तुल्यशीलाभिस्स्त्रीभिः पानेन मृगयया वा प्रसज्य रात्रावुपगृह्यानयेयुः ।

---

[1] कोशदण्ड—Ed [2] स्सुपर्ण. [3] भर्तुं. [4] तानहं.

उपस्थितं च राज्येन मदूर्ध्वमिति सान्त्वयेत् । 42·1

एकस्थमथ संरुध्यात् पुत्रवान्वा प्रवासयेत् ॥

इति विनयाधिकारिके अवरुद्धवृत्तमवरुद्धे च वृत्तिः अष्टादशोऽध्यायः.

## १६. प्रक. राजप्रणिधिः.

राजानमुत्तिष्ठमान[1] मनूत्तिष्ठन्ते भृत्याः । 42.3

प्रमाद्यन्तमनुप्रमाद्यन्ति । कर्माणि चास्य भक्षयन्ति । द्विषद्भिश्चातिसन्धीयते ।

तस्मादुत्थानमात्मनः कुर्वीत ।

नालिकाभिरहरष्टधा रात्रिं च विभजेत् । छायाप्रमाणेन वा । 42·4

त्रिपौरुषी पौरुषी चतुरङ्गुलाऽच्छायो[2] मध्याह्न इति[3] पूर्वे दिवसस्याष्टभागाः ॥

तैः पश्चिमाः व्याख्याताः ।

तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात् । 42·5

द्वितीये पौरजानपदानां कार्याणि पश्येत् ।

तृतीये स्नानभोजनं सेवेत । स्वाध्यायं च कुर्वीत ।

---

[1] नमुत्थित. [2] ला च छाया. [3] चत्वारः पूर्वे.

चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत।

पञ्चमे मन्त्रिपरिषदा पत्रसंप्रेषणेन मन्त्रयेत। चारगुह्यबोधनीयानि च बुद्ध्येत।

षष्ठे स्वैरविहारं मन्त्रं वा सेवेत। सप्तमे हस्त्यश्वरथायुधीयान् पश्येत्।

अष्टमे सेनापतिसखो विक्रमं चिन्तयेत्।

43·2 प्रतिष्ठितेऽहनि सन्ध्यामुपासीत।

प्रथमे रात्रिभागे गूढपुरुषान् पश्येत्।

द्वितीये स्नानभोजनं कुर्वीत स्वाध्यायं च।

तृतीये तूर्यघोषेण संविष्टः चतुर्थपञ्चमौ शयीत।

षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्। सप्तमे मन्त्रमध्यासीत। गूढपुरुषांश्च प्रेषयेत्।

अष्टमे ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्। चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येत्। सवत्सां धेनुं वृषभं च प्रदक्षिणीकृत्योपस्थानं गच्छेत्।

43·4 आत्मबलानुकूल्येन वा निशाहर्भागान् प्रतिविभज्य कार्याणि सेवेत।

उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत्। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमा[1] सन्नैः कार्यते। तेन प्र-

[2] पर्यनमासमा.

कृतिकोपमरिवशं वा गच्छेत् । तस्माद्देवताश्रमपाषण्डश्रोत्रिय पशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत् । कार्यगौरवादात्ययिकवशेन वा ।

सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत् । 43.5
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते ॥

अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् । 44.1
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च ॥

तपस्विनां तु कार्याणि त्रैविद्यैस्सह कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम् ॥

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥

तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥

अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च । 44.6
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम् ॥

इति विनयाधिकारिके राजप्रणिधिः एकोनविंशोऽध्यायः

## १७. प्रक. निशान्तप्रणिधिः.

44·8 वास्तुकप्रशस्ते देशे सप्राकारपरिखाद्वारमनेककक्ष्यापरिगत-मन्तःपुरं कारयेत् ।

45·1 कोशगृहविधानेन वास[1] गृहं, गूढभित्तिसञ्चारं मोहनगृहं तन्मध्ये वा वासगृहं, भूमिगृहं वा, आसन्नकाष्ठचैत्यदेवताविधान-द्वारमनेकसुरुङ्गासञ्चारं प्रासादं वा गूढभित्तिसोपानं, सुषिर-स्तम्भप्रवेशापसारं वा वासगृहं यन्त्रबद्धतलावपातं कारयेत् ।

आपत्प्रतीकारार्थमापदि वा कारयेत् ।

अतोऽन्यथा वा विकल्पयेत् सहाध्यायिभयात् ।

मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति । न चात्रान्योऽग्निर्ज्वलति । वैद्युतेन भस्मना मृत्संयु-क्तेन करकवारिणाऽवलिप्तं च ।

45·4 जीवन्तीश्वेतामुष्ककपुष्पवन्दाकाभिरक्षीपे[2] जातस्याश्वत्थस्य प्रतानेन वा गुप्तं सर्पा विषाणि वा न प्रसहन्ते ।

मार्जारमयूरनकुलपृषतोत्सर्गस्सर्पान् भक्षयति[3] [र्गास्सर्पान् भक्षयन्ति ?] ।

शुकश्शा[4]रिका भृङ्गराजो वा सर्पविषशङ्कायां क्रोशति[5] ।

क्रौञ्चो विषाभ्याशे माद्यति ।

---

[1] वा मध्ये वास. [2] रक्षीवे ; 'वन्दाकानामक्षिपे' इति चतुर्दशाधिकरणे चतुर्था-ध्याये पाठो दृश्यते.

[3] 'मयूरपृषतोत्सर्गे न भवन्ति भुजङ्गमाः' इति कामन्दकः.

[4] शुकशारिका. [5] क्रोशन्ति.

म्लायति जीवंजीवकः ।

म्रियते मत्तकोकिलः ।

चकोरस्याक्षिणी विरज्येते[1] ।

इत्येवं अग्निविषसर्पेभ्यः प्रतिकुर्वीत । 45·8

पृष्ठतः कक्ष्याविभागे स्त्रीनिवेशो गर्भव्याधिवैद्यप्रख्यातसंस्थावृक्षोदकस्थानं च ।

बहिः कन्याकुमारपुरम् ।

पुरस्तादलङ्कारभूमिः मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च ।

कक्ष्यान्तरेष्वन्तर्वंशिकसैन्यं तिष्ठेत् । 46·2

अन्तर्गृहगतस्स्थविरस्त्रीपरिशुद्धां देवीं पश्येत् । न काञ्चिदभिगच्छेत् ।

देवीगृहे लीनो हि भ्राता भद्रसेनं जघान ।

मातुश्शय्यान्तर्गतश्च पुत्रः कारूशम् ।

लाजान्मधुनेति विषेण पर्यस्य देवी काशिराजम् ।

विषदिग्धेन नूपुरेण वैरन्त्यं मेखलामणिना सौवीरं जालूथमादर्शेन वेण्यागूढं शस्त्रं कृत्वा देवी विदूरथं जघान ।

तस्मादेतान्यास्पदानि परिहरेत् । 46·4

मुण्डजटिलकुहकप्रतिसंसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत् ।

न चैनाः कुल्याः पश्येयुरन्यत्र गर्भव्याधिसंस्थाभ्यः । रूपाजीवास्स्नानप्रघर्षशुद्धशरीराः परिवर्तितवस्त्रालङ्काराः पश्येयुः ।

---

[1] ज्येत.

46·6 आशीतिकाः पुरुषाः पञ्चाशत्कास्स्त्रियो वा मातापितृव्यञ्जनास्स्थविरवर्षवराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः स्थापयेयुश्च स्वामिहिते।

47·1 स्वभूमौ च वसेत्सर्वः परभूमौ न सञ्चरेत् ।
न च बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत् ॥
सर्वं चावेक्षितं द्रव्यं निबद्धागमनिर्गमम् ।
निर्गच्छेदधिगच्छेद्वा मुद्रासङ्क्रान्तभूमिकम् ॥

इति विनयाधिकारिके निशान्तप्रणिधिः
विंशोऽध्यायः.

## १८. प्रक. आत्मरक्षितकम्.

47·4 शयनादुत्थितस्स्त्रीगणैर्धन्विभिः परिगृह्येत ।
द्वितीयस्यां कक्ष्यायां कञ्चुकोष्णीषिभिर्वर्षवराभ्यागारिकैः।
तृतीयस्यां कुब्जवामनकिरातैः ।
चतुर्थ्यां मन्त्रिभिस्सम्बन्धिभिर्दौवारिकैश्च प्रासपाणिभिः ।
पितृपैतामहं महासम्बन्धानुबन्धं शिक्षितमनुरक्तं कृतकर्माणं जनमासन्नं कुर्वीत ।

47·7 नान्यतोदेशीयमकृतार्थमानं स्वदेशीयं वाऽप्यकृत्योपगृहीतं अंतर्वंशिकसैन्यं राजानमन्तःपुरं च रक्षेत् ।

गुप्ते देशे माहानसिकः सर्वमास्वादबाहुल्येन कर्म कारयेत्। 48·1
तद्राजा तथैव प्रतिभुञ्जीत पूर्वमग्नये वयोभ्यश्च बलिं कृत्वा।

अग्नेर्ज्वालाधूमनीलता शब्दस्फोटनं च विषयुक्तस्य,—वयसां विपत्तिश्च;—अन्नस्योष्मा मयूरग्रीवाभः शैत्यं, आशुक्लिष्टस्यैव वैवर्ण्यं सोदकत्वमक्लिन्नत्वं च,—व्यञ्जनानामाशुशुष्कत्वं च क्राथश्यामफेनपटल[1] विच्छिन्नभावो गन्धस्पर्शरसवधश्च,—द्रव्येषु हीनातिरिक्तच्छायादर्शनं फेनपटलसीमन्तोर्ध्वराजीदर्शनं च,—रसस्य मध्ये नीला राजी,—पयसस्ताम्रा,—मद्यतोययोः काली,—दध्नश्श्यामा च,—मधुनश्श्वेता,—द्रव्याणामार्द्राणामाशुप्रम्लात[2]त्वमुत्पक्वभावः क्राथनीलश्यावता च,—शुष्काणामाशुशातनं वैवर्ण्यं च,—कठिनानां मृदुत्वं मृदूनां कठिनत्वं च,—तदभ्याशे क्षुद्रसत्त्ववधश्च,—आस्तरणप्रावरणानां श्याम[3]मण्डलता तन्तुरोमपक्ष्मशातनं च,—लोहमणिमयानां पाकलोपदेहता[4] स्नेहरागगौरवप्रभाववर्णस्पर्शवधश्चेति विषयुक्तलिङ्गानि। 48·2

विषप्रदस्य तु शुष्कश्याववक्त्रता वाक्सङ्गस्स्वेदो विजृम्भणं चातिमात्रं वेपथुः प्रस्खलनं वाक्यविप्रेक्षणमावेशः[5] कर्मणि स्वभूमौ चानवस्थानमिति। 48·3

तस्मादस्य चाङ्गलीविदो भिषजश्चासन्नास्स्युः।

[1] मण्डल. [2] म्लान. [3] ध्यायश्याम. [4] पङ्कमलोपदेहता; लोहानां च मणीनां च मलपङ्कोपदिग्धता' इति कामन्दकः. [5] वेगः.

49·1 भिषग्भैषज्यागारादास्वादविशुद्धमौषधं गृहीत्वा पाचकपोषकाभ्यामात्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत् ।

पानं पानीयं चौषधेन व्याख्यातम् ।

कल्पकप्रसाधकास्स्नानशुद्धवस्त्रहस्तास्समुद्रमुपकरणमन्तर्वंशिकहस्तादादाय परिचरेयुः ।

49·3 स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः । ताभिरधिष्ठिता वा शिल्पिनः आत्मचक्षुषि निवेश्य वस्त्रमाल्यं दद्युः । स्नानानुलेपनप्रघर्षचूर्णवासस्नानीयानि स्ववक्षोबाहुषु च ।

एतेन परस्मादागतकं च व्याख्यातम् ।

कुशीलवाश्शस्त्राग्निरसवर्जं नर्मयेयुः । आतोद्यानि चैषामन्तस्तिष्ठेयुरश्वरथद्विपालङ्काराश्च ।

49·6 मौलपुरुषाधिष्ठितं यानवाहनमारोहेत् ।

नावं चाप्तनाविकाधिष्ठितामन्यनौप्रतिबद्धां वातवेगवशां च नोपेयात् ।

उदकान्ते सैन्यमासीत ।

मत्स्यग्राहविशुद्धमवगाहेत ।

व्यालग्राहपरिशुद्धमुद्यानं गच्छेत् ।

49·9 लुब्धकैः श्वगणिभिरपास्तस्तेनव्यालपराबाधभयं चललक्ष्यपरिचयार्थं मृगारण्यं गच्छेत् ।

आप्तशस्त्रग्राहाधिष्ठितस्सिद्धतापसं पश्येत् । 50·2

मन्त्रिपरिषदा सामन्तदूतं । सन्नद्धोऽश्वं हस्तिनं रथं वाऽऽरूढस्सन्नद्धमनीकं गच्छेत् ।

निर्याणेऽभियाने च राजमार्गमुभयतःकृतारक्षं दण्डिभिरपास्तशस्त्रहस्तप्रव्रजितव्यङ्गं गच्छेत् । न पुरुषसम्बाधमवगाहेत ।

यात्रासमाजोत्सवप्रवहणानि च दशवर्गिकाधिष्ठितानि गच्छेत् ।

यथा च योगपुरुषैरन्यान्राजाधितिष्ठति । 50·6

तथाऽयमन्यबाधेभ्यो रक्षेदात्मानमात्मवान् ॥

इति विनयाधिकारिके आत्मरक्षितकम् एकविंशोऽध्यायः.

एतावता कौटिलीयस्यार्थशास्त्रस्य विनयाधिकारिकं प्रथममधिकरणं समाप्तम्.



## अध्यक्षप्रचारः—द्वितीयाधिकरणम्.

## १९. प्रक. जनपदनिवेशः.

---

भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् । 51·1

शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् ।

नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषु सीम्नां[1] स्थापयेत् ।

51·3 अष्टशतग्राम्या मध्ये स्थानीयं, चतुश्शतग्राम्या द्रोणमुखं, * द्विशतग्राम्या खार्वटिकं,[2] * दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत् ।

52·1 अन्तेष्वन्तपालदुर्गाणि ।

जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् । तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः ।

52·2 ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभि[3] रूपदायकानि प्रयच्छेत् ।

अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानीकानीक[4] स्थचिकित्सकाश्वदमकजङ्घारिके[5] भ्यश्च विक्रयाधानवर्जम् ।

---

[1] वृक्षान्तरेषु सीमां.

* "नगरं राजधानी, पांसुप्राकारनिबद्धखेटं. क्षुल्लकप्राकारवेष्टितं खर्वटं. अर्धगव्यूततृतीयान्तग्रामान्तररहितं मण्टपम्.

पत्तनं शकटैर्गम्यं घाटिकैर्नौभिरेव च ।
नौभिरेव तु यद्गम्यं पट्टणं तत्प्रचक्षते ॥

द्रोणमुखं जलनिर्गमप्रवेशं पट्टणमित्यर्थः" इति रायपसेणीसूत्रव्याख्याने–प. २०६.

"नगराणि करवर्जितानि निगमवणिजां स्थानानि । जनपदा देशाः पुरवराणि नगरैकदेशभूतानि द्रोणमुखानि जलस्थलपथोपेतानि. खेटानि धूलीप्राकारोपेतानि. खर्वटानि कुनगराणि. मण्डपानि दूरस्थलसीमान्तराणि. संवाहाः स्थापिन्यः. पत्तनानि जलस्थलपथयोरन्यतरयुक्तानि" इति प्रश्नव्याकरणसूत्रव्याख्याने—प. ३०६.

[2] कार्वाटिकं. [3] राण्यभि. [4] स्थानिनानीक. [5] जङ्घालके.

करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् । अकृतानि कर्तृभ्यो नादेयात् । 52·3

अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्; ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तोऽपहीनं दद्युः । धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात्तान्यनुसुखेन दद्युः ।

अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपपातिकौ[1] वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते ।

निवेशसमकालं यथागतकं[2] वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ।

आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् । 52·9

सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् । 53·1

पुण्यस्थानारामाणां च । सम्भूय सेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः । व्ययकर्मणि च भागी स्यात् । न चांशं लभेत ।

मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् ।

दासाहित[3]कबन्धूनशृण्वतो राजा विनयं ग्राहयेत् ।

बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात् । 53·5

स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ।

---

[1] घातिकौ. [2] गतं. [3] साहित.

बालद्रव्यं ग्रामवृद्धा वर्ज[र्ध]येयुरा व्यवहारप्रापणात्ः देवद्रव्यं च ।

अपत्यदारं[1] मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः अन्यत्र मातुः ।

पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वस्साहसदण्डः स्त्रियं च प्रव्राजयतः ।

53·9 लुप्तव्यवायः प्रव्रजेदापृश्च्य धर्मस्थान्[2]। अन्यथा नियम्येत

54·1 वानप्रस्थादन्यः प्रव्रजितभावः सजातादन्यः सङ्घस्सामुत्थायिका[3]दन्यस्समयानुबन्धो वा नास्य जनपदमुपनिवेशेत । न च तत्राराम[4] विहारार्थाः शालास्स्युः ।

नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः; निराश्रयत्वात् ग्रामाणां क्षेत्राभिरतत्वाच्च पुरुषाणां, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ।

54·2 परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं परिहरेद्राजा व्ययक्रीडाश्च वारयेत् ॥
दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान् ॥
वल्लभैः कार्मिकैस्स्तेनैरन्तपालैश्च पीडितम् ।

---

[1] दारान्. [2] दापृच्छ्य धर्मस्थान्. [3] यिका. [4] रामा.

शोधयेत्पशुसङ्घैश्च क्षीयमाणवणिक्पथम् ॥

एवं द्रव्यं द्विपवनं सेतुबन्धमथाकरान् । 54.5

रक्षेत्पूर्वकृतान्राजा नवांश्चाभिप्रवर्तयेत् ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे जनपदनिवेशः

प्रथमोऽध्यायः । आदितो द्वाविंशः.

## २०. प्रक. भूमिच्छिद्रविधानम्.

अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत् । 54·7

प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि 55·1
तपोवनानि च, तपस्विभ्यो गोत्र(त)[1] पराणि प्रयच्छेत् । तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्रव्यालमार्गायुकहस्तिहस्तिनीकलभमृगवनं विहारार्थं राज्ञः कारयेत् ।

सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत् ।

कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत् । द्रव्यवनकर्मान्तानटवीश्च द्रव्यवनापाश्रयाः प्रत्यन्ते हस्तिवनमटव्या रक्षन् निवेशयेत् ।

---

1 गोरुत.

55·8 नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्रवेशनिष्क[1]सनं नागवनपालैः पालयेत् ।

हस्तिघातिनं हन्युः ।

दन्तयुगं स्वयं मृगस्याहरतः सपादचतुष्पणो लाभः ।

55·10 नागवनपाला हस्तिपकपादपाशिकसौमिकवनचरकपारिकार्मिकसखा हस्तिमूत्रपुरीषच्छन्नगन्धा भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिस्सप्तभिर्वा हस्तिबन्धकीभिः सह चरन्तः शय्यास्थानपद्यालण्डकूलपा[2]तोद्देशेन हस्तिकुलपर्यग्रं विद्युः ।

56·2 यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्ध[3]मुक्तं च निबन्धेन विद्युः । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः । हस्तिप्रधानो विजयो राज्ञाम् । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिन इति ।

56·4 कालिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेति करूशजाः ।
दशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ।
सौराष्ट्रिकाः पाञ्चजनाः तेषां प्रत्यवरास्स्मृताः ।
सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे भूमिच्छिद्रविधानं द्वितीयोऽध्यायः आदितस्त्रयोविंशः.

---

[1] निष्कास. [2] कुलपो. [3] बन्ध.

# २१. प्रक. दुर्गविधानम्.

चतुर्दिशं जनपदान्ते साम्परायिकं दैव[1] कृतं दुर्गं कारयेत्। 56·6
अन्तर्द्वीपं स्थलं वा, निम्नावरुद्धमौदकं, प्रास्तरं गुहां वा पार्वतं, निरुदकस्तम्बमिरिणं वा धान्वनं, खजनोदकं स्तम्ब[2] गहनं वा वनदुर्गं। तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानं, धान्वनवनदुर्गमटवीस्थानं।

आपाद्य[3] प्रसारो वा जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेत्। वास्तुकप्रशस्ते देशे नदीसङ्गमे ह्रदस्य वा अविशोष[4]स्याङ्के सरसस्तटाकस्य वा वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन प्रदक्षिणोदकं पण्यपुटभेदनमसंवारिपथाभ्यामुपेतम्। तस्य[5] परिखास्तिस्रो दण्डान्तराः कारयेत्। चतुर्दश द्वादश दशेति दण्डानु[6] त्रिस्तीर्णाः विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूला मूले चतुरश्राः पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा तोयान्तिकीरागन्तुतोयपूर्णा वा सपरिवाहाः पद्मग्राहवतीः[7]।

चतुर्दण्डावकृष्टं परिखायाः षड्दण्डोच्छ्रितमवरुद्धं तद्द्विगुणविष्कम्भं खाताद्वप्रं कारयेत्। 57·5

ऊर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा हस्तिभिर्गोभिश्च क्षुण्णं

---

[1] देव. [2] खञ्जनोदकस्थम्ब. [3] आपद्य. [4] वाटविशोष. [5] मुपेतस्य.
[6] दण्डान्. [7] वतीश्च.

कण्टकिगुल्मविषवल्लीप्रतानवन्तं पांसुविशेषेण वास्तुच्छिद्रं वा पूरयेत् ।

वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्तादिति कारयेत् ।

रथचर्यासञ्चारं तालमूलमुरजकैः कपिशीर्षकैश्चाचिताग्रं[1] पृथुशिलासहितं वा शैलं कारयेत् । न त्वेव काष्ठमयम् अग्निरवहितो हि तस्मिन् वसति ।

58·2 विष्कम्भचतुरश्रमट्टालकमुत्सेधसमावक्षेपसोपानं कारयेत् ॥

त्रिंशद्दण्डान्तरं च द्वयोरट्टालकयोर्[2] मध्ये सहर्म्यद्वितलां द्व्यर्धायामां प्रतोलीं कारयेत् ।

अट्टालकप्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सापि[3] धानच्छिद्रफलकसंहतमितीन्द्रकोशं कारयेत् ।

अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायाममनुप्राकारमष्टहस्तायतं देवपथं कारयेत् ।

दण्डान्तरा द्विदण्डान्तरा वा चार्याः[4] कारयेत् ।

58·7 अग्राह्ये देशे प्रधावितिकां निष्कुर[5] द्वारं च ।

बहिर्जानुभञ्जिनीं[6] त्रिशूलप्रकारकूटा[7] वपातकण्टकप्रतिसराहिपृ-

---

[1] "कविसीसअवट्टरयिअसंठिय विरायमाणा—कपिशीर्षकैर्वृत्तरचितसंस्थितैः वर्तुलीकृतसंस्थानैर्विराजमाना" इति रायसेणीव्याख्याने—प. ३. "कपिशीर्षकैः वृत्तरचितैः वर्तुलकृतैः संस्थितैः विशिष्टसंस्थानैः विराजमाना" इति ज्ञाताधर्मकथाङ्गसूत्रव्याख्याने. प. ६ [2] "अट्टालकाः प्राकारोपरिभृत्याश्रयविशेषाः" इति रायपसेणियाख्याने प. ३. [3] सापि. [4] चर्या. "चरिका—चार्या, अष्टहस्तप्रमाणो मार्गः" इति रा. प. प. ३. [5] निष्कर. [6] भञ्जनी. [7] आशूलप्रकरकूपकूटा.

छुतालपत्रशृङ्गाटकश्वदंष्ट्रार्गळोपस्कन्दनपादुकाम्बरीषोदपानकैः छन्नपथं कारयेत् ।

प्राकारमुभयतो मण्डलक[1]मध्यर्धदण्डं कृत्वा प्रतोलीषट्तुलान्तरं द्वारं निवेशयेत् ।

पञ्चदण्डादेकोत्तरवृद्ध्याऽऽष्टदण्डादिति चतुरश्रं षड्भागायामादधिकमष्टभागं वा ।

पञ्चदशहस्तादेकोत्तरमाऽष्टादशहस्तादिति तलोत्सेधः ।

स्तम्भस्य परिक्षेपा[2]ष्षडायामो[3] द्विगुणो निखातः चूलिकायाश्चतुर्भागः । 59·1

आदितलस्य पञ्च भागाः शाला वापी सीमागृहं च ।

दशभागिकौ द्वौ प्रतिमञ्चौ; अन्तरामणिहर्म्यं च समुच्छ्रयादर्धतलं, स्थूणावबन्धश्च, आर्धवास्तुकमुत्तमागारं त्रिभागान्तरं वा, इष्टकावबन्धपार्श्वं, वामतः प्रदक्षिणसोपानं गूढभित्तिसोपानमितरतः, द्विहस्तं तोरणशिरः, त्रिपञ्चभागिकौ द्वौ[4] कवाटयोगौ, द्वौ द्वौ परिघौ, अरत्निरिन्द्रकीलः[5], पञ्चहस्तमणि[6] द्वारं, चत्वारो हस्तिपरिघाः, निवेशार्धं हस्तिनखः मुखसमस्सङ्क्रमोऽसंहार्यो वा भूमिमयो वा निरुदके ।

प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत् ।

---

[1] मण्डक. [2] क्षेप. [3] यामो. [4] द्वौ द्वौ.

[5] "छेवायरियरयियदढफलिह इंदकीला—छेकेन निपुणेनाचार्येण शिल्पोपाध्यायेन रचितः दृढो बलवान् परिघोऽर्गलो इन्द्रकीलश्च सम्पादितकवाटद्वयाधारभूतः प्रवेशमध्यभागो यस्यां सा" इति रायपसेणीव्याख्याने—प ३. [6]माणि.

प्राकारमध्ये कृत्वा वापीं पुष्करिणीं द्वा[1]रं चतुश्शालम-ध्यर्धान्तराणीकं[2] कुमारीपुरं मुण्डहर्म्यं द्वि[3] तलं मुण्डकद्वारं भूमिद्रव्यवशेन वा त्रिभागाधिकायामाः भाण्डवाहिनीः कु-ल्याः कारयेत् ।

59·5 तासु पाषाणकुद्दालकुठारीकाण्डकल्पनाः ।
मुसृण्ठि[4]मुद्गरा दण्डचक्रयन्त्रशतघ्नयः ॥
कार्याः कार्मारिकाश्शूला वेधनाग्राश्च वेणवः ।
उष्ट्रग्रीव्योऽग्निसंयोगाः कुप्यकल्पे च योऽवधिः ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे दुर्गविधानं
तृतीयोऽध्यायः । आदितश्चतुर्विंशः.

## २२. प्रक. दुर्गनिवेशः.

60·3 त्रयः प्राचीना राजमार्गास्त्रय उदीचीना इति वास्तुवि-भागः । स द्वादशद्वारो युक्तोदकभूमिच्छन्नपथः ।

चतुर्दण्डान्तरा रथ्या राजमार्गद्रोणमुखस्थानीयराष्ट्रविवी-तपथाः ।

सयोनीयव्यूहश्मशानग्रामपथाश्चाष्टदण्डाः ।

चतुर्दण्डस्सेतुवनपथः ।

द्विदण्डो हस्तिक्षेत्रपथः ।

पञ्चारत्नयो रथपथश्चत्वारः पशुपथः ।

[1] रिणीद्वा. [2] र्धावत्रतान्तरमाणिकं. [3] हर्म्यद्वि. [4] सृण्ठी.

द्वौ क्षुद्रपशुमनुष्यपथः ।

प्रवीरे वास्तुनि राजनिवेशाः[1] । 60·10

चातुर्वर्ण्यसमाजीवे वास्तुहृदयादुत्तरे नवभागे यथोक्तविधानमन्तःपुरं प्राङ्मुखमुदङ्मुखं वा कारयेत् । तस्य पूर्वोत्तरं भागमाचार्यपुरोहितेज्यातोयस्थानं मन्त्रिणश्चावसेयुः । पूर्वदक्षिणं भागं महानसं हस्तिशाला कोष्ठागारं च । ततः परं गन्धमाल्यधान्यरसपण्याः प्रधानकारवः क्षत्रियाश्च पूर्वां दिशमधिवसेयुः । दक्षिणपूर्वं भागं भाण्डागारमक्षपटलं कर्मनिषद्याश्च । दक्षिणपश्चिमं भागं कुप्यगृहमायुधागारं च । ततः परं नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः पक्वान्नसुरामांसपण्याः रूपाजीवास्तालापचारा वैश्याश्च दक्षिणां दिशमधिवसेयुः । पश्चिमदक्षिणं भागं खरोष्ट्रगुप्तिस्थानं कर्मगृहं च । पश्चिमोत्तरं भागं यानरथशालाः । ततः परमूर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवश्शूद्राश्च पश्चिमां दिशमधिवसेयुः । उत्तरपश्चिमं भागं पण्यभैषज्यगृहम् । उत्तरपूर्वं भागं कोशो गवाश्वं च । ततः परं नगरराजदेवतालोहमणिकारवो ब्राह्मणाश्चोत्तरां दिशमधिवसेयुः । वास्तुच्छिद्रानुशालेषु श्रेणीप्रवहणी[2]निकाया आवसेयुः ।

अपराजिताप्रतिहतजयन्तवैजयन्त[3] कोष्ठकान् शिववैश्रवणा- 61·14

---

[1] निवेशः.  [2] वहणि.

[3] ''विजआ वैजयन्ता अ जयन्ता अपराजिआ । सर्वाट्ठसिद्धिगा चैव पञ्च-

श्विश्रीमदिरागृहं च पुरमध्ये कारयेत् । कोष्ठकाल[1] येषु यथोद्देशं वास्तुदेवताः स्थापयेत् । ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि बहिः परिखा[2]याः धनुश्शतापकृष्टाश्चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः । यथादिशं च दिग्देवताः ।

62·4 उत्तरः पूर्वो वा श्मशानवाटः, दक्षिणेन वर्णोत्तराणाम् । तस्यातिक्रमे पूर्वस्साहसदण्डः ॥

पाषण्डचण्डालानां श्मशानान्ते वासः ॥

कर्मान्तक्षेत्रवशेन वा कुटुम्बिनां सीमानं स्थापयेत् ॥

तेषु पुष्पफलवाटषण्डकेदारान् धान्यपण्यनिचयांश्च अनुज्ञाताः कुर्युः । दशकुलीवाटं कूपस्थानं सर्वस्नेहधान्यक्षारलवणभैषज्यशुष्कशाकयवसवल्लूरतृणकाष्ठलोहचर्माङ्गारस्नायुविषविषाणवेणुवल्कलसारदारुप्रहरणावरणाश्मनिचयाननेकवर्षोपभोगसहान् कारयेत् ।

नवेनानवं शोधयेत् ॥

---

हाऽणुत्तरा सुरा ॥ विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धिगाश्च पञ्चधा अनुत्तरा देवाः" इति उत्तराध्ययनसूत्रे. प. १०८७.

"इन्द्राण अ खंदाण अ रुद्दासिववेसमणनागाणं भूयाण अ जक्खाण अ अज्जकोट्टकिरियाण अ बहूणि..........उवायिमाणि चिट्ठन्ति । इन्द्रस्य च स्कन्दस्य च रुद्रशिववैश्रवणनागानां भूतानां च यक्षाणां च आर्या कोष्ठाक्रियायाश्च बहूनि उपार्जितानि तिष्ठन्ति" इति ज्ञाताधर्मकथाङ्गसूत्रे. प. ७५२. नागपूजा चैतद्ग्रन्थकाले प्रबला आसीदिति "कोशसंहरण" अध्यायात् ज्ञायते.

[1] कोष्ठाल. [2] परिघा.

हस्त्यश्वरथपादातमनेकमुख्यमवस्थापयेत् । अनेकमुख्यं हि परस्परभयात् परोपजापं नोपैतीति ॥ 62·10

एतेनान्तपालदुर्गसंस्कारा व्याख्याताः ॥

न च बाहिरिका[1] न्कुर्यात्पुरराष्ट्रोपघातकान् । 63·1
क्षिपेज्जनपदे चैतान् सर्वान्वा दापयेत्करान् ॥

इत्यध्यक्षप्रचारे दुर्गनिवेशः चतुर्थोऽध्यायः.
आदितः पञ्चविंशः.

---

## २३. प्रक. सन्निधातृचेयकर्म.

---

सन्निधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् ॥ 63·3

---

1 "राअगिहे णामं णअरे....................नालंदा णामं बाहिरिआ होत्था अणेगभवणसअसण्णिविट्ठा" राजगृहे नाम नगरे................नालन्दा नाम बाहिरिका आसीत् अनेकभवनशतसन्निविष्टा" इति परमैश्वर्यसमृद्धबाहिरिकजातिवर्णनं 'सूयङ्गांगसूत्रे नालन्दाध्ययने दृश्यते.' प. ९६९.

"बाहिरिअ उवट्ठाणसालाए सीहसणवरगए पुरत्थाभिमुहे सण्णुसण्णे स इएहि अ, साहस्सिएहिअ सअसाहस्सिएहि अ जाएहिं दाएहिं बाएहिं दलअमाणे पडिच्छमाणे" बहिरिका उपस्थानशालायै सिंहासनवरगृहे पूर्वाभिमुखे सन्निषण्णे शतिकैस्साहस्रैश्शतसाहस्रैश्च जातैर्दानैः भागैः दीयमानं प्रतियच्छन्तु" इति ज्ञाताधर्मकथाङ्गसूत्रे. प. १७७.

63·4 चतुरश्रां वापीमनुदकोपस्नेहां खानयित्वा पृथुशिलाभिरुभयतः पार्श्वमूलं च प्रचित्य सारदारुपञ्जरं भूमिसमं त्रितलमनेकविधानं कुट्टिमदेशस्थानतलमेकद्वारं यन्त्रयुक्तसोपानं देवताविधानं भूमिगृहं कारयेत् ॥

तस्योपर्युभयतोनिषेधं सप्रग्रीवमैष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत् प्रासादं वा ॥

जनपदान्ते ध्रुवनिधिमापदर्थमभित्यक्तैः[1] पुरुषैः कारयेत् ॥

पक्वेष्टकास्तम्भं चतुश्शालमेकद्वारमनेकस्थानतलं, विवृतस्तम्भापसारमुभयतः पण्यगृहं, कोष्ठागारं च, दीर्घबहुलशालं कक्ष्यावृतकुड्यमन्तःकुप्यगृहं, तदेव भूमिगृहयुक्तमायुधागारं, पृथग्धर्मस्थीयं महामात्रीयं, विभक्तस्त्रीपुरुषस्थानमपसारतः सुगुप्तकक्ष्यं बन्धनागारं कारयेत् ॥

4·4 सर्वेषां शालाखातोदपानवर्च स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षास्वा[2] दैवपूजनवृत्ताः[3] कारयेत् ॥

कोष्ठागारे वर्षमानमरत्निमुखं कुण्डं स्थापयेत् ।

तज्जातकरणाधिष्ठितः पुराणं नवं च रत्नं सारं फल्गुकुप्यं वा प्रतिगृह्णीयात् ।

तत्र रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च । सारोपधौ मध्यमः । फल्गुकुप्योपधौ तच्च तावच्च दण्डः ।

रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात् । अशुद्धं छेदयेत् । आहर्तुः पूर्वः साहसदण्डः ।

---

[1] भियुक्तैः. [2] स्था. [3] नयुक्ताः.

शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात् । विपर्यये मूलद्विगुणो दण्डः ।

तेन पण्यं कुप्यमायुधं च व्याख्यातम् ।

सर्वाधिकरणेषु युक्तोपयुक्ततत्पुरुषाणां पणादिचतुष्पणाः पर[1]मापहारेषु पूर्वमध्यमोत्तमवधा दण्डाः । 65·1

कोशाधिष्ठितस्य कोशावच्छेदे घातः ।

तद्वैयावृत्यकाराणा[2]मर्धदण्डः । परिभाषणमविज्ञाते[3] ।

चोराणामभिप्रधर्षणे[4] चित्रो घातः ।

तस्मादाप्तपुरुषाधिष्ठितः सान्निधाता निचयाननुतिष्ठेत् ।

बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि । 65·5

यथा पृष्टो न सज्येत व्ययशेषं च दर्शयेत् ॥

इत्यध्यक्षप्रचारे सन्निधातृनिचयकर्म पञ्चमोऽध्यायः.

आदितष्षड्विंशः.

## २४. प्रक. समाहर्तृसमुदयप्रस्थापनम्.

समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत । 65·7

---

1 पणाद्विपणचतुष्पणपर.

2 'वैयावृत्यं व्यावृत्तकर्मरूपं उपष्टम्भनमित्यर्थः' इति प्रश्नव्याकरणसूत्रव्याख्याने प. ४१९ तेन च वैयावृत्यं साहाय्यमित्यर्थः.　　3 ज्ञाने.

4 "तर्जा—हस्तादिना चोरं प्रति प्रेषणादिसंज्ञाकरणम्" इति प्रश्नव्याकरणसूत्रव्याख्याने—प. १९३. अभिप्रधर्षणं च तर्जापर्यायः ;

65·8 शुल्कं दण्डः[1] पौतवं नागरिको लक्षणाध्यक्षो मुद्राऽध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारं सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारबाहिरिकादेयं च दुर्गम् ।

66·2 सीता भागो बलिः करो वणिक् नदीपालस्तरो नावः पट्टनं[2] विवीतं वर्तनी रज्जूश्चोररज्जूश्च राष्ट्रम् ॥

सुवर्णरजतवज्रमणिमुक्ताप्रवालशङ्खलोहलवणभूमिप्रस्तररसधातवः खनिः ॥

पुष्पफलवाटषण्डकेदारमूलवापास्सेतुः ।

पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् ।

गोमहिषमजाविकं खरोष्ट्रमश्वाश्वतराश्च व्रजः ।

स्थलपथो वारिपथश्च वणिक्पथः ।

इत्यायशरीरम् ।

66·9 मूलं भागो व्याजी परिघः क्लृप्तं रूपिकमत्ययश्चाय[3] मुखम् ।

देवपितृपूजादानार्थं स्वस्तिवाचनमन्तःपुर[4]महानसं दूतप्रावर्तिमं[5] कोष्ठागारमायुधागारं पण्यगृहं कुप्यगृहं कर्मान्तो विष्टिः पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्यालवाटाः काष्ठतृणवाट[6]श्चेति व्ययशरीरम् ।

67·2 राजवर्षं मासः पक्षो दिवसश्च व्युष्टं वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाश्शेषाः पूर्णाः पृथगधिमासक इति कालः ।

[1] शुल्कदण्डः. [2] पत्तनं. [3] श्चाये. [4] पुरं. [5] वर्तनं. [6] वाटा.

करणीयं सिद्धं शेषमायव्ययौ नीवी च ।

संस्थानं प्रचारश्शरीरावस्थापनमादानं सर्वसमुदयपिण्डसञ्जातमेतत्करणीयम् । 67·4

कोशार्पितं राजहारः पुरव्ययश्चाप्रविष्टं[1] परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चापातनीयमेतत्सिद्धम् । 68·1

सिद्धिप्रकर्मयोगः दण्डशेषमाहरणीयं बलात्कृतप्रतिस्तब्धमवसृष्टं[2] च प्रशोध्यमेतच्छेषमसारमल्पसारं च ।

वर्तमानः पर्युषितोऽन्यजातश्चायः ।

दिवसानुवृत्तो वर्तमानः ।

परमसांवत्सरिकः परप्रचारः सङ्क्रान्तो वा पर्युषितः ।

नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं डमर[3]गतकस्वमपुत्रकं निधिश्चान्यजातः ।

विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्ययः ।

विक्रये पण्यानामर्घवृद्धिरूपजा मानोन्मानविशेषो व्याजी क्रयसङ्घर्षे वा वृद्धिरित्यायः ।

नित्यो नित्योत्पादिको लाभो लाभोत्पादिक इति व्ययः । 68·9

---

[1] विष्टः. [2] मप्रसृष्टं.

[3] डमरगतमृत. "डिम्बः स्वदेशोत्था विप्लवाः डमराणि परराजकृता उपद्रवाः" इति जीवाभिगमसूत्रव्याख्याने प. ६५७.

दिवसानुवृत्तो नित्यः ।

पक्षमाससंवत्सरलाभो लाभः ।

69·1 तयोरुत्पन्नो नित्योत्पादिको लाभोत्पादिक इति[1] ।

व्ययसंजातादायव्ययविशुद्धा नीवी प्राप्ता चानुवृत्ता चेति ।

एवं कुर्यात्समुदयं वृद्धिं चायस्य दर्शयेत् ।
ह्रासं व्ययस्य च प्राज्ञस्साधयेच्च विपर्ययम् ॥

इत्यध्यक्षप्रचारे समाहर्तृसमुदयप्रस्थापनं षष्ठोऽध्यायः.
आदितः सप्तविंशः.

## २५. प्रक. अक्षपटले गाणनिक्याधिकारः.

69·4 अक्षपटलमध्यक्षः प्रत्यङ्मुख[2]मुदङ्मुखं वा विभक्तोपस्थानं निबन्धपुस्तकस्थानं कारयेत् ।

तत्राधिकरणानां सङ्ख्यां, प्रचारसञ्जाताग्रं कर्मान्तानां द्रव्यप्रयोगं वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणं, रत्नसारफल्गुकुप्यानामर्घप्रतिवर्णकप्रतिमानमानोन्मानावमानभाण्डं देशग्रामजातिकुलसङ्घातानां धर्मव्यवहारचरित्रसंस्थानं, राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभं, राज्ञश्च पत्नीपुत्राणां रत्नभूमिलाभनिर्देशो[3]त्पातिकप्रतीकारलाभं, मित्रामित्राणां च सन्धिविक्रमप्रदानादानानि[4], निबन्धपुस्तकस्थं कारयेत् ।

[1] इति व्ययः. सञ्जाता. [2] प्राङ्मुख. [3] निर्देशौ. [4] दानं.

ततस्सर्वाधिकरणानां करणीयं सिद्धं शेषमायव्ययौ नीवी- 70·2
मुपस्थानं प्रचारचारित्रसंस्थानं च निबन्धेन प्रयच्छेत्। उत्त-
ममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात्।

सामुदायिकेष्ववक्लृप्तिकं व्ययमुपहत्य राजाऽनुतप्येत।

सहग्राहिणः प्रतिभुवः कर्मोपजीविनः पुत्रा भ्रातरो भार्या
दुहितरो भृत्याश्चास्य कर्मच्छेदं वहेयुः।

त्रिशतं चतुःपञ्चाशच्चाहोरात्राणां कर्म संवत्सरः। तमा-
षाढीपर्यवसानमूनं पूर्णं वा दद्यात्। करणाधिष्ठितमधिमा-
सकं कुर्यात्।

अपसर्पाधिष्ठितं च प्रचारं प्रचारचरित्रसंस्थानान्यनुपलभ- 70·7
मानो हि प्रकृतस्समुदयमज्ञानेन परिहापयति—उत्थानक्लेशा-
सहत्वादालस्येन, शब्दादिष्विन्द्रियार्थेषु प्रमादेन, सङ्क्रोशा-
धर्मानर्थभीरुर्भयेन, कार्यार्थिष्वनुग्रहबुद्धिः कामेन, हिंसाबुद्धिः
कोपेन, विद्याद्रव्यवल्लभापाश्रयाद्दर्पेण, तुलामानतर्कगणिका-
न्तरोपधानाल्लोभेन।

तेषां आनुपूर्व्या "यावानर्थोपघातः तावानेकोत्तरो दण्डः" 71·1
इति मानवाः।

"सर्वत्राष्टगुणः" इति पाराशराः॥

"दशगुणः" इति बार्हस्पत्याः॥

"विंशतिगुणः" इत्यौशनसाः॥

"यथाऽपराधम्" इति कौटिल्यः॥ 71·5

गाणनिक्यान्याषाढीमागच्छेयुः । आगतानां समुद्रपुस्तभाण्ड-नीवीकानामेकत्र[1] सम्भाषावरोधं कारयेत् । आयव्ययनीवी-नामग्राणि श्रुत्वा नीवीमवहारयेत् । यच्चाग्रादायस्यान्तरवर्णे नीव्या वर्धेत, व्ययस्य वा यत्परिहापयेत्, तदष्टगुणमध्यक्षं दापयेत् । विपर्यये तमेव प्रतिस्यात् ॥

यथाकालमनागतानामपुस्तनीविकानां वा देयदशबन्धो दण्डः । कार्मिके चोपस्थिते कारणिकस्याप्रतिबध्नतः पूर्वस्साहस-दण्डः । विपर्यये कार्मिकस्य द्विगुणः ॥

71·11 प्रचारसमं महामात्रास्समग्राः श्रावयेयुः । अविषममन्त्रः पृथग्भूतो मिथ्यावादी चैषामुत्तमदण्डं दद्यात् ॥

72·2 अकृताहोरूपहरं मासमाकाङ्क्षेत । मासादूर्ध्वं मासद्विशतोत्तरं दण्डं दद्यात् ॥

अल्पशेषलेख्यनीविकं[2] पञ्चरात्रमाकाङ्क्षेत । ततः परं कोशपूर्व-महोरूपहरं धर्मव्यवहारचरित्रसंस्थानसङ्कलनानिर्वर्तनानुमानचार-प्रयोगैरवेक्षेत । दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्राति-समानयेत् । व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापक-निबन्धकप्रतिग्राहकैश्चायं समानयेत् । व्युष्टदेशकालमुखला भकारणदेययोगपरिमाणाज्ञापकोद्धारकविधात[3]कप्रतिग्राहकैश्च व्ययं समानयेत् । व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनि-क्षेपभाजनगोपायकैश्च नीवीं समानयेत् ॥

---

[1] त्रा. [2] वीकं. [3] विधान.

राजार्थेऽर्थकारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाऽऽज्ञानिबन्धादायव्ययमन्यथा वा विकल्पयतः पूर्वस्साहसदण्डः ॥ 72'7

क्रमावहीनमुत्क्रममविज्ञातं पुनरुक्तं वा वस्तुकमवलिहतो[1] द्वादशपणो दण्डः ॥

नीवीमवलिखतो द्विगुणः । भक्षयतोऽष्टगुणः । नाशयतः पञ्चबन्धः प्रतिदानं च । मिथ्यावादे स्तेयदण्डः । पश्चात् प्रतिज्ञाते द्विगुण प्रस्मृतोत्पन्ने च--

अपराधं सहेताल्पं तुष्येदल्पेऽपि चोदये । 73'5
महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत् ॥

इत्यध्यक्षप्रचारे अक्षपटले गाणनिक्याधिकारः
सप्तमोऽध्यायः आदितोऽष्टाविंशः.

## २६ प्रक. समुदयस्य युक्तापहृतस्य प्रत्यानयनम्.

कोशपूर्वास्सर्वारम्भाः ॥ 73'7

तस्मात्पूर्वं कोशमवेक्षेत ॥

प्रचारसमर्धि[2]श्चरित्रानुग्रहश्चोरग्रहो[3]युक्तप्रतिषेधः सस्यसम्पत्पण्यबाहुल्यमुपसर्गप्रमोक्षः परिहर[4]क्षयो हिरण्योपायनमिति कोशवृद्धिः ।

प्रतिबन्धः प्रयोगो व्यवहारोऽवस्तारः परिहापणमुपभोगः परिवर्तनमपहारश्चेति कोशक्षयः ॥

---

[1] लिखतो. [2] समृद्धि. [3] निग्रहो.

[4] 'परिहार' इति युक्तम्. परिहारपदं च ४७ पुटे प्रयुक्तं दृश्यते.

74·2 सिद्धीनामसाधनमनवतारणमप्रवेशनं वा प्रतिबन्धः। तत्र दश-बन्धो दण्डः ॥

कोशद्रव्याणां वृद्धिप्रयोगः प्रयोगः ।

पण्यव्यवहारो व्यवहारः । तत्र फलद्विगुणो दण्डः ॥

सिद्धं कालमप्राप्तं करोत्यप्राप्तं प्राप्तं वेत्यवस्तारः । तत्र पञ्चबन्धो दण्डः ॥

क्लृप्तमायं परिहापयति व्ययं वा विवर्धयतीति परिहापणं । तत्र हीनचतुर्गुणो दण्डः । स्वयमन्यैर्वा राजद्रव्याणामुपभोजन-मुपभोगः । तत्र रत्नोपभोगे घातः ; सारोपभोगे मध्यमस्साहस-दण्डः, फल्गुकुप्योपभोगे तच्च तावच्च दण्डः ॥

राजद्रव्याणामन्यद्रव्येणादानं परिवर्तनं ; तदुपभोगेन व्या-ख्यातम् ॥

74·10 सिद्धमायं न प्रवेशयति ; निबन्धं[1] व्ययं न प्रयच्छति. प्राप्तां नीवीं विप्रतिजानीत इत्यपहारः । तत्र द्वादशगुणो दण्डः ॥

75·2 तेषां हरणोपायाश्चत्वारिंशत् —

पूर्वं सिद्धं पश्चादवतारितं ; पश्चात्सिद्धं पूर्वमवतारितं ; सा-ध्यं न सिद्धं ; असाध्यं सिद्धं ; सिद्धमसिद्धं कृतं ; असिद्धं सिद्धं कृतं ; अल्पसिद्धं बहुकृतं ; बहुसिद्धमल्पं कृतम् ; अ न्यत् सिद्धमन्यत्कृतं ; अन्यतस्सिद्धमन्यतः कृतं ; देयं न दत्तं ; अदेयं दत्तं ; काले न दत्तं ; अकाले दत्तं ; अल्पं दत्तं बहुकृ-तं ; बहुदत्तमल्पं कृतं ; अन्यद्दत्तमन्यत्कृतं ; अन्यतो दत्तमन्यतः कृतं ; प्रविष्टमप्रविष्टं कृतं ; अप्रविष्टं प्रविष्टं कृतं ; कुप्यमदत्त-

[1] निबद्धं.

मूल्यं प्रविष्टं; दत्तमूल्यं न प्रविष्टं; सङ्क्षेपो विक्षेपः कृतः; विक्षेपः सङ्क्षेपो वा; महार्घमल्पार्घेण परिवर्तितं; अल्पार्घं महार्घेण वा; समारोपितोऽर्घः; प्रत्यवरोपितो वा; रात्रयः समारोपिता वा; प्रत्यवरोपिता वा; संवत्सरो मासविषमः कृतः; मासो दिवसविषमो वा; समागमविषमः; मुखविषमः; धार्मिकविषमः; निर्वर्तनविषमः। पिण्डविषमः; वर्णविषमः अर्घविषमः; मानविषमः; मापनविषमः; भाजनविषमः इति हरणोपायाः।

तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिवैयावृत्यकरानेकैकशोऽनुयुञ्जीत। मिथ्यावादे चैषां युक्तसमो दण्डः। प्रचारे चापघोषयेत्—“अमुना प्रकृतेनोपहृताः प्रज्ञापयन्त्विति”। प्रज्ञापयतो यथोपघातं दापयेत्। अनेकेषु चाभियोगेष्वपव्ययमानस्सकृदेव परोक्तः सर्वं भजेत। वैषम्ये सर्वत्रानुयोगं दद्यात्। महत्यर्थापचारे[1] चाल्पेनापि सिद्धस्सर्वं भजेत। कृतप्रतिघातावस्थस्सू[2]चको निष्पन्नार्थष्षष्ठमंशं लभेत। द्वादशमंशं भृतकः। प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत। अनिष्पन्ने शरीरं हैरण्यं वा दण्डं लभेत। न चानुग्राह्यः। 76·2

निष्पत्तौ निक्षिपेद्वादमात्मानं वाऽपवाहयेत्।
अभियुक्तोपजापात्तु सूचको वधमाप्नुयात्॥ 77·4

इत्यध्यक्षप्रचारे समुदयस्य युक्तापहृतस्य प्रत्यानयनं
अष्टमोऽध्यायः। आदितः एकोनत्रिंशः।

---

[1] हारे. [2] स्थस्सू.

## २७ प्रक. उपयुक्तपरीक्षा.

77·6 अमात्यसम्पदोपेतास्सर्वाध्यक्षाश्शक्तितः कर्मसु नियोज्याः कर्मसु चैषां नित्यं परीक्षां कारयेत् चित्तानित्यत्वान्मनुष्याणाम् । अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते ।

तस्मात्कर्तारं करणं देशं कालं कार्यं प्रक्षेपमुदयं चैषु विद्यात् । ते यथासन्देशमसंहता अविगृहीताः कर्माणि कुर्युः । संहता भक्षयेयुः । विगृहीता विनाशयेयुः । न चानिवेद्य भर्तुः किञ्चिदारम्भं कुर्युरन्यत्रापत्प्रतीकारेभ्यः । प्रमादस्थानेषु चैषामत्ययं स्थापयेद्दिवसवेतनव्ययाद्विगुणम् ।

78·6 यश्चैषां यथाऽऽदिष्टमर्थं सविशेषं वा करोति स स्थानमानौ लभेत ।

"अल्पायतिश्चेन्महाव्ययो भक्षयति। विपर्यये, यथाऽऽयतिव्ययश्च न भक्षयति" इत्याचार्याः ।

"अपसर्पेणैवोपलभ्यते" इति कौटिल्यः ।

यस्समुदयं परिहापयति स राजार्थं भक्षयति । स चेदज्ञानादिभिः परिहापयति तदेनं यथागुणं दापयेत् ।

78·12 यस्समुदयं द्विगुणमुद्भावयति स जनपदं भक्षयति । स चेद्राजार्थमुपनय[1] त्यल्पापराधे वारयितव्यः ; महति यथापराधं दण्डयितव्यः ।

[1] पहर

यस्समुदयं व्ययमुपनयति स पुरुषकर्माणि भक्षयति । स कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु यथाऽपराधं दण्डयितव्यः।

तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यमायव्ययौ च व्याससमासाभ्यामाचक्षीत ।

मूलहरतादात्विककदर्यांश्च प्रतिषेधयेत् । 79·1

यः पितृपैतामहमर्थमन्यायेन भक्षयति, स मूलहरः ।

यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः ।

यो भृत्यात्मपीडाभ्यामुपचिनोत्यर्थं स कदर्यः । स पक्षवांश्चेदनादेयः; विपर्यये पर्यादातव्यः ।

यो महत्यर्थसमुदये स्थितः कदर्यस्सन्निधत्ते, उपनि[1]धत्ते, अव[2]स्रावयति वा—सन्निधत्ते स्ववेश्मनि, अवनिधत्ते पौरजानपदेषु, अवस्रावयति परविषये,—तस्य सत्री मन्त्रिमित्रभृत्यबन्धुपक्षमागतिं गतिं च द्रव्याणामुपलभेत ।

यश्चापर[3]विषये सञ्चारं कुर्यात्तमनुप्रविश्य मन्त्रं विद्यात् । सुविदिते शत्रुशासनापदेशेनैनं घातयेत् ।

तस्मादस्याध्यक्षाः सङ्ख्यायकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः ।

उत्तराध्यक्षः[4]—हस्त्यश्वरथारोहास्तेषामन्तेवासिनश्शिल्पशौचयुक्तास्सङ्ख्यायकादीनामपसर्पाः । 79·8

बहुमुख्यमनित्यं चाधिकरणं स्थापयेत् ।

यथा ह्यनास्वादयितुं न शक्यं

---

[1] अवनि. [2] अप. [3] यश्चास्य पर. [4] क्षाः,

जिह्वातलस्थं मधु वा विषं वा ।
अर्थस्तथा ह्यर्थचरेण राज्ञः
स्वल्पोऽप्यनास्वादयितुं न शक्यः ॥
मत्स्या यथाऽन्तस्सलिले चरन्तो
ज्ञातुं न शक्याः सलिलं पिबन्तः ।
युक्तास्तथा कार्यविधौ नियुक्ता
ज्ञातुं न शक्या धनमाददानाः ॥

80'1 अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।
न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः ॥
आस्रावयेच्चोपचितान् विपर्यस्येच्च कर्मसु ।
यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा ॥
न भक्षयन्ति ये त्वर्थान्न्यायतो वर्धयन्ति च ।
नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः ॥

इत्यध्यक्षप्रचारे उपयुक्तपरीक्षा नवमोऽध्यायः.
आदितस्त्रिंशः.

## २८ प्रक. शासनाधिकारः.

80'5 शासने शासनमित्याचक्षते । शासनप्रधाना हि राजानः, तन्मूलत्वात् सन्धिविग्रहयोः ।

तस्मादमात्यसम्पदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात् । सोऽव्यग्रमना राज्ञस्सन्देशं

श्रुत्वा निश्चितार्थं[1] लेखं विदध्यात् । देशैश्च वंश[2]नामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य ।

> जातिं कुलं स्थानवयश्श्रुतानि 81·2
> कर्मर्द्धिशीलान्यथ देशकालौ ।
> यौनानुबन्धं च समीक्ष्य कार्ये
> लेखं विदध्यात्पुरुषानुरूपम् ॥

अर्थक्रमः, सम्बन्धः, परिपूर्णता, माधुर्यमौदार्यं, स्पष्टत्वमिति लेखसम्पत् ।

तत्र यथावदनुपूर्वक्रियाप्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थस्य क्रमः[3] ॥

प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमासमाप्तेरिति सम्बन्धः ॥

अर्थपदाक्षराणामन्यूनातिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाऽश्रान्तपदेति[4] परिपूर्णता ॥

सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम् ॥

अग्राम्यशब्दाभिधानमौदार्यम् ॥

प्रतीतशब्दप्रयोगस्स्पष्टत्वमिति ॥

अकारादयो वर्णाः त्रिषष्टिः ॥ 81·10

---

[1] निश्चित्यार्थं समीक्ष्यकार्ये. "निश्चितार्थं" इत्यस्योपरि = इत्येवं रेखां विधाय तदर्थः "समीक्ष्य कार्ये" इति लिखितं मातृकायाम्. [2] देशैश्वर्यवंश.
[3] इत्यर्थार्थस्यानुपक्रमः इति मातृकायाम्. इत्यर्थक्रमः. [4] पदेताति.

82·1 वर्णसङ्घातः पदम्। तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति। तत्र नाम सत्त्वाभिधायि। अविशिष्टलिङ्गमाख्यातं क्रियावाचि। क्रियाविशेषिताः[1] प्रादय उपसर्गाः। अव्ययाश्चादयो निपाताः ॥

पदसमूहो वाक्यमर्थपरिसमाप्तौ; एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन वर्गः कार्यः। लेखकपरिसंहरणार्थ इति शब्दो वाचिकमस्येति च ॥

निन्दा प्रशंसा पृच्छा च तथाऽऽख्यानमथार्थना।
प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना ॥
सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा।
एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः ॥

तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा।
गुणवचनमेतेषामेव प्रशंसा।
"कथमेतदिति" पृच्छा।
"एवम्" इत्याख्यानम्।
देहीत्यर्थना।
82·15 "न प्रयच्छामि" इति प्रत्याख्यानम् ॥
83·1 अननुरूपं भवत इत्युपालम्भः।
"मा कार्षीः" इति प्रतिषेधः।
"इदं क्रियताम्" इति चोदना।
"योऽहं स भवान्, मम द्रव्यं तद्भवतः" इत्युपग्रहः सान्त्वम्।

1 षकाः.

व्यसनसाहाय्यमभ्यन्नपत्तिः ।

सदोषमायतिप्रदर्शनमभिभर्त्सनम् ।

अनुनयस्त्रिविधोऽर्थकृतावतिक्रमे पुरुषादिव्यसने चेति ।

प्रज्ञापनाज्ञापरिदानलेखाः
तथा परीहारनिसृष्टिलेखौ ।
प्रावृत्तिकश्च प्रतिलेख एव
सर्वत्रगश्चेति हि शासनानि ॥

अनेन विज्ञापितमेवमाह तद्दीयतां चेद्यदि तत्त्वमस्ति ।
राज्ञस्समीपे पर[1]कारमाह प्रज्ञापनैषा विविधोपदिष्टा ॥

भर्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति ।
विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम् ॥

यथाऽर्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते ।
83·12 अप्याधौ परिदाने वा भवतस्तावुपग्रहौ ॥

जातेर्विशेषेषु परेषु[2] चैव
ग्रामेषु देशेषु च तेषु तेषु ।
अनुग्रहो यो नृपतेर्निदेशात् ।
तज्ज्ञः परीहार इति व्यवस्येत् ॥

84·1 निसृष्टिस्थापना कार्या करणे वचने तथा ।
एषा वाचिकलेखस्स्यात् भवेन्नैसृष्टिकोऽपि वा ॥

विविधां[3] दैवसंयुक्तां तत्त्वजां चैव मानुषीम् ।

---

[1] वर. [2] पुरेषु. [3] द्विविधां.

विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति ॥
दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च ।
प्रतिलेखो भवेत्कार्यो यथा राजवचस्तथा ॥
यत्रेश्वरांश्चाधिकृतांश्च राजा
रक्षोपकारौपयिकार्थमाह ।
सर्वत्रगो नाम भवेत्स मार्गे
देशे च सर्वत्र च वेदितव्यः ॥

उपायास्सामोपप्रदानभेददण्डाः ।

तत्र साम पञ्चविधं– गुणसङ्कीर्तनं सम्बन्धोपाख्यानं परस्परोपकारसन्दर्शनमायतिप्रदर्शनमात्मोपनिधानमिति ।

तत्राभिजनशरीरकर्मप्रकृतिश्रुति[1]द्रव्यादीनां गुणागुणग्रहणं प्रशंसास्तुतिर्गुणसङ्कीर्तनम् ।

ज्ञातियौनमौखस्रौवकुलहृदयमित्रसङ्कीर्तनं सम्बन्धोपख्यानम् स्वपक्षपरपक्षयोरन्योन्योपकारसङ्कीर्तनं परस्परोपकारसन्दर्शनम् ।

अस्मिन्नेवं कृत इदमावयोर्भवतीत्याशाजननमायतिप्रदर्शनम्

85'1 "योऽहं स भवान्यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयोज्यताम्" इत्यात्मोपनिधानमिति ।

उपप्रदानमर्थोपकारः ।

शङ्काजननं निर्भर्त्सनं च भेदः ।

---

[1]श्रुत.

वधः परिक्लेशोऽर्थहरणं दण्ड इति ।

अकान्तिर्व्याघातः पुनरुक्तमपशब्दः सम्प्लव इति लेखदोषाः॥

तत्र कालपत्रकमचारुविषमविरागाक्षरत्वमकान्तिः ।

पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः । उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम् ।

लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः ।

अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासस्संप्लव इति।

सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च । 85.11

कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः ॥

इत्यध्यक्षप्रचारे शासनाधिकारः दशमोऽध्यायः

आदित एकत्रिंशः.

## २९. प्रक. कोशप्रवेश्यरत्नपरीक्षा.

कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा [1]तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात् । 86.1

ताम्र[2]पर्णिकं पाण्ड्यकवा[3]टकं, पाशिक्यं, कौलेयं, चौर्णेयं, माहेन्द्रं, कार्दमिकं, स्रौतसीयं, ह्रादीयं, हैमवतं च मौक्तिकम् ।

शुक्तिः शङ्खः प्रकीर्णकं च योनयः ।

---

[1] तत्र निपुणाः तज्जाताः करणं तदधिकृतपुरुषाणां सामग्री तदधिष्ठितस्तत्समेत इति टीका.

[2] ताम्र.  [3] पा.

86·4 मसूरकं त्रिपुटकं कूर्मकमर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्तकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तम् ।

87·1 स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम् ।

शीर्षकमुपशीर्षकं प्रकाण्डमवघाटकं तरळप्रतिबन्धं[1] चेति यष्टिप्रदेशाः ।

यष्टीनामष्टसहस्रमिन्द्रच्छन्दः । ततोऽर्धं विजयच्छन्दः । चतुष्षष्टिरर्धहारः । चतुष्पञ्चाशद्रश्मिकलापः । द्वात्रिंशद्गुच्छाः[2] । सप्तविंशतिर्नक्षत्रमाला । चतुर्विंशतिरर्धगुच्छः । विंशतिर्माणवकः । ततोऽर्धमर्धमाणवकः । एत एव मणिमध्यास्तन्माणवका भवन्ति । एकशीर्षकश्शुद्धो हारः । तद्वच्छेषाः । मणिमध्योऽर्धमाणवकः । त्रिफलकः फलकहारः पञ्चफलको वा । सूत्रमेकावली शुद्धा । सैव मणिमध्या यष्टिः । हेममणिचित्रा रत्नावली । हेममणिमुक्तान्तरोऽपवर्तकः । सुवर्णसूत्रान्तरं सोपानकम् । मणिमध्यं वा मणिसोपानकं ।

88·4 तेन शिरोहस्तपादकटी[3]कलापजालकविकल्पा व्याख्याताः । मणिः कौटो मौले[4]यकः पारसमुद्रकश्च ।

सौगन्धिकः, पद्मरागः, अनवद्यरागः[5], पारिजातपुष्पकः, बालसूर्यकः, वैडूर्यः—उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः । नीलावलीय[6]इन्द्र-

---

[1] बन्धकं. [2] च्छः. [3] काटि. [4] माले. [5] पद्मानवद्यरागः. [6] यक.

नीलः कलायपुष्पको महानीलो जाम्बवाभो जीमूतप्रभो नन्दकः स्रवन्मध्यः शीतवृष्टिः सूर्यकान्तश्चेति मणयः ।

षडश्रश्चतुरश्रो वृत्तो वा, तीव्ररागसंस्थानवानच्छस्स्निग्धो गुरुरर्चिष्मानन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः ।

मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खण्डो दुर्विद्धो लेखाकीर्ण इति दोषाः ।

विमलकः सस्यकोऽञ्जनमूलकः पित्तकस्सुलभको लोहितकोऽमृतांशुको ज्योतीरसको मैलेयक आहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरपकः[1] शुक्तिचूर्णकः शिलाप्रवालकः पुळकः शुक्रपुळकः इत्यन्तरजातयः ॥ 89·1

शेषाः काचमणयः ।

सभाराष्ट्रकं मध्यमराष्ट्रकं काश्मक [कान्तीर]राष्ट्रकं[2] श्रीकटनकं मणिमन्तकमिन्द्रवा[3]नकं च वज्रम् ।

खनिस्स्रोतः प्रकीर्णकं च योनयः ।

मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकव[4]र्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः ।

स्थूलं,[5] गुरु, प्रहारसहं, समकोटिकं भाजनलेखितं कुभ्रामि[6] भ्राजिष्णु च प्रशस्तम् ।

नष्टकोणं निरश्रि पार्श्वापवृत्तं च अप्रशस्तम् । 89·7

---

[1] वकः. [2] काश्मीरराष्ट्रकं. [3] पान. [4] पुष्पव. [5] स्निग्धं. [6] लेखिभ्रामि.

प्रवालकं आलकन्दकं, वैवर्णिकं च रक्तं पद्मरागं च करटं गार्भिका[1] वर्जमिति ॥

चन्दनं—सततं रक्तं भूमिगन्धि; गोशीर्षकं कालताम्रं मत्स्यगन्धि; हरिचन्दनं शुकपत्रवर्णमाम्रगन्धि; तार्णसं च; ग्रामेरुकं रक्तं रक्तकाळं वा बस्तमूत्रगन्धि; दैवसभेयं रक्तं पद्मगन्धि; जापकं च; जोङ्गकं रक्तं रक्तकाळं वा स्निग्धं; तौरूपं[2] च। मालेयकं[3] पाण्डुरक्तं; कुचन्दनं काळ[4]रूक्षमगरुकालं रक्तं रक्तकाळं वा; कालपर्वतकम[5] नवद्यवर्णं वा; कोशाकार[6]पर्वतकं काळं काळचित्रं वा; शीतोदकीयं पद्माभं काळ स्निग्धं वा; नागपर्वतकं रूक्षं शैवलवर्णं वा; शाकलं कपिलमिति।

लघुस्निग्धमश्यानं सर्पिस्स्नेहलेपि गन्धसुखं त्वगनुसार्यनुल्वणमविराग्युष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः।

अगरु—जोङ्गकं काळं काळचित्रं मण्डलचित्रं वा; श्यामं दोङ्गकं; पारसमुद्रकं चित्ररूपमुशीरगन्धि नवमालिकागन्धि वेति[7]।

गुरु स्निग्धं पेशलगन्धि निर्हारि अग्निसहमसंप्लुतधूमं समगन्धं विमर्दसहमित्यगरुगुणाः ॥

तैलपर्णिकं—अशोकग्रामिकं मांसवर्णं पद्मगन्धि; जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा; ग्रामेरुकं स्निग्धं गोमूत्र गन्धि; सौवर्णकुड्यकं रक्तपीतं मातुलुङ्गगन्धि; पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति; भद्रश्रीयं पारलौहित्यकं जातीवर्णं;

---

1 करटागर्भिणिका. 2 रूपं. 3 लेयं. 4 कालं गोमूत्रगन्धिकाल. 5 पर्वतमन. 6 कौशागार. 7 चेति.

आन्तरपत्य[1]मुशीरवर्णं; उभयं कुष्ठगन्धि चेति; कालेयकः स्वर्णभूमिजस्स्निग्धपीतकः; औत्तरपर्वतको रक्तपीतक इति साराः।

पिण्डक्वाथधूमसहमविरागि योगानुविधायि च। चन्दनागरुवच्च तेषां गुणाः।

कान्तनावकं प्रैयकं चोत्तरपर्वतकं चर्म।

कान्तनावकं मयूरग्रीवाभं; प्रैयकं नीलपीतश्वेतलेखि[2]बिन्दुचित्रं। तदुभयमष्टाङ्गुलायामम्।

बिसी महाबिसी च द्वादशग्रामीये। 91·7

अव्यक्तरूपा[3]दुहिलितिका चित्रा वा बिसी। परुषा श्वेतप्राया महाबिसी द्वादशाङ्गुलायाममुभयम्।

श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चारोह[4]जाः। 92·2

कपिला बिन्दुचित्रा वा श्यामिका; कालिका कपिला कपोतवर्णा वा। तदुभयमष्टाङ्गुलायामम्। परुषा कदली हस्तायता। सैव चन्द्रचित्रा चन्द्रोत्तरा। कदली त्रिभागा शाकुला कोठमण्डलचित्रा कृतकर्णिकाऽजिनचित्रा चेति।

सामूरं चीनसी सामूली च बाह्लवेयाः।

षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरं; चीनसी रक्तकाळी पाण्डुकाळी वा; सामूली गोधूमवर्णेति।

सातिना नलतूला वृत्तपुच्छा च औद्राः।

---

[1] रव.  [2] नीलपीतं श्वेतं लेखा.

[3] रूप. हिलिका—बहुतररोमोपेता, इति व्याख्या.  [4] रोट.

सातिना कृष्णा । नलतूला नलतूलवर्णा । कपिला वृत्तपुच्छा च । इति चर्मजातयः ।

चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम् ।

शुद्धं शुद्धरक्तं पक्षरक्तं च आविकं; खचितं वानचित्रं खण्डसङ्घात्यं तन्तुविच्छिन्नं च कम्बळः ।

92·11 कौचपकः[1] कुलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं[2] वारवाणः परिस्तोमः समन्तभद्रकं च आविकं ।

93·2 पिच्छलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम् ॥

अष्टप्रौतिसङ्घात्या कृष्णा भिङ्गिसी वर्षवारणमपसारक इति नैपालकम् ।

सम्पुटिका, चतुराश्रिका, लम्बरा, कटवानकं, प्रावरकः, सत्तलिकेति मृगरोम ।

वाङ्गकं श्वेतं स्निग्धं दुकूलं, पौण्ड्रकं श्यामं मणिस्निग्धं; सौवर्णकुड्यकं सूर्यवर्णं मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च ।

एतेषामेकांशुकमर्धद्वित्रिचतुरंशुकमिति ।

तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम् ।

मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्रोर्णाः[4] ।

नागवृक्षो लिकुचो बकुलो वटश्च योनयः ।

---

1 कौचलकः. 2 तलिन्धरुतल्पक इति व्याख्या. 3 मध्यर्धं. 4 पत्त्रोर्णा.

पीतिका नागवृक्षिका; गोधूमवर्णा लैकुची; श्वेता वाकुळी; शेषा नवनीतवर्णा। 94.1

तासां सौवर्णकुड्यका श्रेष्ठा। तया कौशेयं चीनपट्टाश्च चीनभूमिजा व्याख्याताः।

माधुरमापरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति।

अतः परेषां रत्नानां प्रमाणं मूल्यलक्षणम्।
जातिं रूपं च जानीयान्निधानं नवकर्म च॥
पुराणप्रतिसंस्कारं कर्म गुह्यमुपस्करात्[1]।
देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम्॥

इत्यध्यक्षप्रचारे कोशप्रवेश्यरत्नपरीक्षा एकादशोध्यायः
आदितो द्वात्रिंशः.

## ३० प्रक. आकरकर्मान्तप्रवर्तनम्.

आकराध्यक्षः शुल्बधातुशास्त्ररसपाकमणिरागज्ञस्तज्ज्ञसखो वा तज्ज्ञातकर्मकरोपकरणसम्पन्नः किट्टमूषाङ्गारभस्मलिङ्गं वाऽऽकरं भूतपूर्वमभूतपूर्वं वा भूमिप्रस्तररसधातुमत्यर्थवर्णगौरवमुग्रगन्धरसं परीक्षेत॥ 94.9

पर्वतानामभिज्ञातोद्देशानां बिलगुहोपत्यकालयनिगूढखातेष्वन्तःप्रस्यन्दिनो जम्बूचूततालफलपक्वहारिद्राभेदहारिताळक्षौद्र[2]-

[2] स्करान्   [2] तालमनश्शिलाक्षौद्र.

हिङ्गुलुकपुण्डरीकशुकमयूरपत्रवर्णास्सवर्णोदकौषधीपर्यन्ताश्चि–क्कणा विशदा भारिकाश्च रसाः काञ्चनिकाः ।

अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च ताम्र-रूप्ययोश्शतादुपरिवेद्धारः ।

95·3 तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात् ।

पीतकास्ताम्रकास्ताम्रपीतका वा भूमिप्रस्तरधातवो भिन्ना[1] नीलराजिवन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्रा हरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णा[2] भिन्नाश्चुञ्च-वालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका आर्चिष्मन्तस्ताप्य-माना न भिद्यन्ते बहुफेनधूमाश्च सुवर्णधातवः प्रतीवापार्था-स्ताम्ररूप्यवेधनाः ।

शङ्खकर्पूरस्फटिकनवनीतकपोतपारावतविमलकमयूरग्रीवाव-र्णाः सस्यकगोमेदकगुळमत्स्यण्डिकावर्णाः कोविदारपद्मपाट-लीकळायक्षौमातसीपुष्पवर्णास्ससीसाः साञ्जनाः[3] विस्रा भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः सर्वे वा लेखाबिन्दुचि-त्रा मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः ।

96·2 सर्व[4]धातूनां गौरववृद्धौ सत्त्ववृद्धिः—तेषामशुद्धा मूढगर्भा वा तीक्ष्णमूत्रक्षारभाविता[5] राजवृक्षवटपीलुगोपित्तरोचना महिष खरकरट[6]मूत्रलण्डपिण्डबद्धास्तत्प्रतीवापास्तदवलेपा वा विशु-द्धास्स्रवन्ति ।

---

[1] वः प्रभिन्ना. [2] वर्णा वा. [3] साञ्जना विभिन्नाः.
[4] सर्वेषां. [5] विभाविता. [6] करभ.

यवमाषतिलपलाशपीलुक्षारैर्गोक्षीराजक्षीरैर्वा कदली[1] वज्रकन्दप्रतीवापो मार्दवकरः ।

मधुमधुकमजापयः सतैलं
घृतगुडकिण्वयुतं सकन्दलीकं ।
यदपि शतसहस्रधा विभिन्नं
भवति मृदु त्रिभिरेव तन्निषेकैः ॥

गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः ।

भारिकस्स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गळो हरितः पाटलो लोहितो वा ताम्रधातुः । 97'1

काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रस्सीसधातुः ।

ऊषरकर्बुरः पक्वलोष्टवर्णो वा त्रपुधातुः । कुरुम्बः[2] पाण्डुरो[3]हितस्सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः ।

काण्ड[4]भुजपत्रवर्णो वा वैकृन्तकधातुः ।

अच्छस्निग्धः सप्रभो घोषवान् शीततीव्रस्तनुरागश्च मणिधातुः ।

धातुसमुत्थितं तज्ज्ञातकर्मान्तेषु प्रयोजयेत् ।

कृत[5]भाण्डव्यवहारमेकमुखमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत् ।

आकारिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः ।

स्तेनमनिसृष्टोपजीविनं च बद्धं[7] कर्म कारयेत् ।

---

[1] कन्दली. [2] खुरम्भः. [3] लो. [4] काकाण्ड काण्ट इति टीकायां.
[5] शीतस्तीव्रस्तनु. [6] अकृत. [7] बद्धा ; बद्धं दण्डोपकारिणं च.

97·11 भाण्डोपकारिणं[1] च व्ययक्रियाभारिकमाकरं भागेन प्रक्रयेण वा दद्यात् । लाघविकमात्मना कारयेत् ।

98·2 लोहाध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोध्रककर्मान्तान् कारयेत् । लोहभाण्डव्यवहारं च ।

लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतमं माषबीजयुक्तं कारयेत्—

पणमर्धपणं पादमष्टभागमिति ; पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति ।

98·5 रूपदर्शकः पणयात्रां व्यावहारिकीं कोशप्रवेश्यां च स्थापयेत्—

रूपिकमष्टकं शतं; पञ्चकं शतं व्याजीं; पारीक्षिकमष्टभागिकं शतं; पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः॥

99·1 खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवाळक्षारकर्मान्तान्[2] कारयेत् पणन[3] व्यवहारं च ।

लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं सङ्गृह्णीयात्—विक्रयाच्च मूल्यं रूपं व्याजीम्[4] ।

आगन्तुलवणं षड्भागं दद्यात्[5]—दत्तभागविभागस्य विक्रयः[6] पञ्चकं शतं व्याजीं रूपं, रूपिकं च क्रेता शुल्कं राजपण्याच्छेदानुरूपं च वैधरणं दद्यात् । अन्यत्र क्रेता षट्छतमत्ययं च ।

99·4 विलवण[7]मुत्तमं दण्डं दद्यात् ; अनिसृष्टोपजीवी च अन्यत्र वानप्रस्थेभ्यः । श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः ।

---

[1] नास्ति. [2] मान्तं. [3] पण्य. [4] व्याजीं च. [5] दद्या'दष्टभागं वा. [6] ये.
[7] " द्विलवण " इति मातृकायां । " विलवणं विलादिमिश्रितम् " इति व्याख्यायाम्.

अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात् ।

एवं मूल्यं[1] विभागं च व्याजीं परिघमत्ययम् । 100·1

शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च ॥

खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत् ।

एवं सर्वेषु पण्येषु स्थापयेन्मुखसङ्ग्रहम् ॥

आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते ।

पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा ॥

इत्यध्यक्षप्रचारे आकरकर्मान्तप्रवर्तनं द्वादशोऽध्यायः.

आदितः त्रयस्त्रिंशः

---

## ३१ प्रक अक्षशालायां सुवर्णाध्यक्षः.

---

सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानामसम्बन्धावेशनचतुश्शा- 100·4
लामेकद्वारामक्षशालां कारयेत् । विशिखामध्ये सौवर्णिकं शि-
ल्प[2]वन्तमभिजातं प्रात्ययिकं च स्थापयेत् ।

जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्ग[3] शुक्तिजं जातरूपं
रसविद्ध[4] माकरोद्गतं च सुवर्णम् ।

किञ्जल्कवर्णं मृदु स्निग्धमनुनादि[5] भ्राजिष्णु च श्रेष्ठम् ।
रक्तपीतकं मध्यमम् । रक्तमवरम् ।

श्रेष्ठानां पाण्डु श्वेतं चाप्राप्तकं । तत् येनाप्राप्तकं तच्चतुर्गुणेन

---

[1] मूल्य. [2] शील. [3] शृङ्गि. [4] सिद्धं. [5] मनादि.

सीसेन शोधयेत् । सीसान्वयेन भिद्यमानं शुष्कपटलैर्ध्मापयेत् । रूक्षत्वाद्भिद्यमानं तैलगोमये निषेचयेत् ।

101·6 आकरोद्गतं सीसान्वयेन भिद्यमानं पाकपत्राणि कृत्वा गण्डिकासु कुट्टयेत्; कन्दलीवज्रकन्दकल्के वा निषेचयेत् ।

102.2 तुत्थोद्गतं गौडिकं काममलं कवकं[1] चाक्रवालिकम् च रूप्यम् । श्वेतं स्निग्धं मृदु च श्रेष्ठम् । विपर्यये स्फोटनं च दुष्टम् । तत्सीसचतुर्भागेन शोधयेत् ।

उद्गतचूळिकमच्छं भ्राजिष्णु दधिवर्णं च शुद्धम् ।

शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः । ततश्शुल्बकाकण्युत्तरापसारिता आचतुस्सीमान्तादिति षोडशवर्णकाः ।

सुवर्णं पूर्वं निकष्य[2] पश्चाद्वर्णिकां निकषयेत् । समरागलेखमनिम्नोन्नते देशे निकषितं परिमृदितं परिलीढं नखान्तराद्वा 102.8 गैरिकेणावचूर्णितमुपधिं विद्यात् ।

जातिहिङ्गुळुकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति ।

सकेसरस्स्निग्धो मृदुर्भ्राजिष्णुश्च निकषरागः श्रेष्ठः । कालिङ्गकस्थाली[3] पाषाणो वा मुद्गवर्णो निकषःश्रेष्ठः । समरागी विक्रयक्रयहितः ।

---

[1] तुत्थोद्गतं गौळिकं काम्भुकं इति पाठो व्याख्यानुसारी. [2] कृष्य.—[3] स्तापी.

हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः ।

स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः ।

श्वेत[1]श्चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः ।

तापो बहिरन्तश्च समः किञ्जल्कवर्णः कारण्डक[2]पुष्पवर्णो वा श्रेष्ठः । श्यावो नीलश्चाप्रासकः ॥ 103·3

तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः । तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च ॥

अक्षशालामनायुक्तो नोपगच्छेत् । अभिगच्छन् उच्छेद्यः ॥

आयुक्तो वा सरूप्यस्वर्णस्तेनैव जीयेत ॥

विचितवस्त्रहस्तगुह्याः काञ्चनपृषित[3]त्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः[4] प्रविशेयुः निष्कसेयुश्च । सर्वं चैषामुपकरणमनि[5]ष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन् । गृहीतं सुवर्णं घृतं च प्रयोगं करणमध्ये दद्यात् । सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात् ॥

क्षेपणो गुणः क्षुद्रमिति[6] कर्माणि ॥ 104·2

क्षेपणः काचार्पणादीनि ॥

गुणस्सूत्र[7]वानादीनि ॥

घनं सुषिरं पृषता[8]दियुक्तं क्षुद्रकमिति ॥

अर्पयेत्[9] काचकर्मणः पञ्चभागं काञ्चनं दशभागं मानम्[10] ।

---

[1] छेद. [2] करण्डक. [3] पृषत. [4] धावकाः. [5] माधि.
[6] क्षुद्रकमिति. [7] त्रक. [8] पृषता. [9] येच्च.
[10] करमानम् । कटकमानमिति च व्याख्यापाठः; कटुमानं.

ताम्रपादयुक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतंत[1] स्मादृक्षेत् ॥

पृषित[2] काचकर्मणः त्रयो हि भागाः परिभाण्डं द्वौ वास्तुकं ; चत्वारो वा वास्तुकं त्रयः परिभाण्डम् ॥

त्वष्टृकर्मणः शुल्बभाण्डं समसुवर्णेन संयूहयेत् । रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेन अवलेपयेत् । चतुर्भागसुवर्णं वा वालुकाहिङ्गुलुकस्य रसेन चूर्णेन वा वासयेत् ॥

तपनीयं ज्येष्ठं सुवर्णं सुरागं समसीसातिक्रान्तं पाकपत्रपक्वं सैन्धविकयोज्ज्वालितम् नीलपीतश्वेतहरितशुककपोतवर्णानां[3] प्रकृतिर्भवति ॥

105'1 तीक्ष्णं चास्यम[4]यूरग्रीवाभं श्वेतभङ्गं चिमिचिमायतितं पीतपूर्णितं[5] काकणिकस्सुवर्णरागः[6] ॥

तारमुपशुद्धं वा अस्थितुत्थे चतुस्समसीसे चतुश्शुष्कतुत्थे चतुः कपाले त्रिर्गोमये द्विः एवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम् । एतस्मात्काकण्युत्तरं[7] आद्विमापादिति सुवर्णे देयं पश्चाद्रागयोगः श्वेततारं भवति ॥

त्रयोऽशाः तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छितास्स[8] श्वेतलोहितकं भवति । ताम्रं पीतकं करोति[9] ॥

तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात् । पीतरागं भवति ॥ श्वेततारभागौ द्वावेकस्तपनीयस्य मुद्गवर्णं करोति ॥

---

1 संस्कृतकं भवति. त. 2 पृ ।त. 3 नीललोहितपीतश्वेतशुकपत्रवर्णानां.

4 चास्य प्रकृतिर्भवति म. 5 चिमिचिमायति । तत्पीतचूर्णितं ; पीतचूर्णितं इति व्याख्यायाम्. 6 सवर्णे रागोत्तरमुपशुद्धं वा. 7 रापस्सुरितात्.

8 तारस्य मूर्छितं तत्. 9 भवति.

कालायसस्यार्धभागाभ्यक्तं[1] कृष्णं भवति ॥

प्र[2]तिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति। 105·4

तस्यारम्भे रागविशेषु प्रतिवर्णिकां गृह्णीयात् ॥

तीक्ष्णताम्रसंस्कारं च बुद्ध्येत ॥

तस्माद्वज्रमणिमुक्ताप्रवालरूपाणामप[3]नेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति[4] ॥

समरागं समद्वन्द्वमसक्तपृषितं[5] स्थिरम् ।
सुविमृष्ट[6] मसंवीतं[7] विभक्तं धारणे सुखम् ॥
अभिनीतं प्रभायुक्तं संस्थानमधुरं समम् ।
मनोनेत्राभिरामं च तपनीयगुणास्स्मृताः ॥

इत्यध्यक्षप्रचारे अक्षशालायां सुवर्णाध्यक्षस्त्रयोदशोऽध्यायः
आदितश्चतुस्त्रिंशः

## ३२ प्रक. विशिखायां सौवर्णिकप्रचारः.

सौवर्णिकः पौरजानपदानां रूप्यसुवर्णमावेशनीभिः कारयेत्।106·4 निर्दिष्टकालकार्यं च कर्म कुर्युः। अनिर्दिष्टकालं कार्यापदेशं कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्च दण्डः। कालातिपातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः।

[1] तपनीयं कृ. [2] प्रति. [3] मप. [4] णानि प्रस(त्य) क्षीकुर्यात. [5] षतं.
[6] सुप्रमृष्टम्. इति व्याख्याने च. अप्रमृष्टमिति च केचिदिति तत्रैव. [7] पीतं.

यथावर्णप्रमाणं नि[1]क्षेपं गृह्णीयुस्तथाविधमेवार्पयेयुः । कालान्तरादपि च तथाविधमेव प्रतिगृह्णीयुरन्यत्र क्षीणपरिशीर्णाभ्याम्।

आवेशनिभिस्सुवर्णपुद्गललक्षणप्रयोगेषु तत्तज्जानीयात् ।

तप्तकलधौतकयोः काकणिकस्सुवर्णे क्षयो देयः[2] । तीक्ष्णकाकणीरूप्यद्विगुणो रागप्रक्षेपस्तस्य षड्भागः क्षयः ।

वर्णहीने माषा[3]वरे पूर्वस्साहसदण्डः । प्रमाणहीने मध्यमः तुलाप्रतिमानोपधावुत्तमः कृतभाण्डोपधौ च ।

107·6 सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो दण्डः। कर्तुर्द्विगुणः ; सापसारश्चेत् ।

अनपसारः कण्टकशोधनाय नीयेत । कर्तुश्च द्विशतो दण्डः पणच्छेदनं[4] वा ।

तुलाप्रतिमानभाण्डं पौतवहस्तात्क्रीणीयुः । अन्यथा द्वादश पणो दण्डः ।

घनं घनसुषिरं संयूह्यमवलेप्यं सङ्घात्यं वासितकं च कारुकर्म तुलाविषममपसारणं विस्रावणं पेटको पिङ्कश्चेति हरणोपायाः-

सन्नामिन्युत्कीर्णिका[5] भिन्नमस्तकोपकण्ठी कुशिक्या सकटुकक्ष्या परि[6]वेल्यय[7]स्कान्ता च दुष्टतुलाः ।

---

[1] माणानि. "सुवर्ण किञ्जल्कवर्णादि ; पुद्गलं आभरणादि ; लक्षणं चिह्नितम्. प्रयोगः परिवर्तनमिति." इति व्याख्या. [2] देहः [3] माषव. [4] छेदं. [5] उत्कीर्णिका. उत्कर्णिका इति व्याख्यायाम् । [6] पारि. ल्याय.

रूप्यस्य द्वौ भागावेकं शुल्बस्य त्रिपुटिकं। तेनाकरोद्गतमवसा 108·5
र्यंते[1] तत्त्रिपुटकाव[2]सारितं ; शुल्बेन शुल्बाव[3]सारितं ; वेल्लकेन वेल्लकाव[4]सारितं ; शुल्बार्धसारेण हेम्ना हेमाव[5]सारितम्।

मूकमूषा पूर्ति[6]किट्टः करटुकमुखं नालीसन्दशो[7]जोङ्गनी[8]सुवर्चिकालवणम्। तदेव सुवर्णमित्य[9]वसरणमार्गाः।

पूर्वप्रणिहिता वा पिण्डवालुका मूषभेदादग्निष्ठादुद्ध्रियन्ते, पश्चाद्बन्धनम्। आचितकपत्रपरीक्षायां वा रूप्यरूपेण परिवर्तनं विस्रावणम्। पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा।

गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसङ्घात्येषु क्रियते। सीसरूपं सुवर्णपत्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं[10]गाढपेटकः। सएव पटलसम्पुटेष्वभ्युद्धार्यः।

पत्रमाश्लिष्टं यमकपत्रं वावलेप्येषु क्रियते। शुल्बं तारं वा गर्भः पत्राणां सङ्घात्येषु क्रियते। शुल्बरूपं[11]सुवर्णपत्रसंहतं प्रमृष्टं सुपार्श्वं ; तदेव यमकपत्रसंहतं प्रमृष्टं ताम्रताररूपं चोत्तरवर्णकः।

तदुभयं तापनिकषाभ्यां निश्शब्दोल्लेखनाभ्यां वा विद्यात्। अभ्युद्धार्यं बदराम्ले लवणोदके वा साद[12]यन्तीति पेटकः।

घनसुषिरे वा रूपे सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा तप्तोऽवतिष्ठते ; दृढवास्तुके वा रूपे वालुकामिश्रं[13] जतुगान्धारपङ्को वा तप्तोऽवतिष्ठते। तयोस्तापनमवध्वंसनं विशुद्धिः। सपरि-

---

1 मपार्थंते. 2 काप. 3 प 4 प. 5 प. 6 प्रति. 7 नालसिन्दशौ इति व्याख्यायां पाठः: 8 जाङ्गनी. 9 प. 10 बन्धं. 11 ताम्ररूपं. 12 साध. 13 मिश्र.

110·2 भाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते। तस्य क्राथनं शुद्धिः। अभ्रपटमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते तस्य पिहितकाचकस्योदके[1] निमज्जत एकदेशः सीदति, पटलान्तरेषु वा सूच्या भिद्यते। मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः॥

तस्य तापनमवध्वंसनं वा शुद्धिरिति पिङ्कः॥

तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां जातिरूपवर्णप्रमाणपुद्गल-लक्षणान्युपलभेत॥

कृतभाण्डपरीक्षायां पुराणभाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः—परिकुट्टनमवच्छेदनमुल्लेखनं परिमर्दनं वा॥

पेटकापदेशेन पृषितं गुणं पिटकां वा यत् परिशातयन्ति तत्परिकुट्टनम्॥

यद्द्विगुणं वास्तुकानां वा रूपे सीसरूपं प्रक्षिप्य अभ्यन्तर-मवच्छिन्दन्ति तदवच्छेदनम्॥

यत् घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम्॥

हरितालमनःशिलाहिङ्गुलुकचूर्णानामन्यतमेन कुरुविन्दचूर्णेन वा वस्त्रं संयूह्य यत् परिमृद्नन्ति तत् परिमर्दनम्॥

तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते। न चैषां किञ्चि-दवरुग्णं भवति।

[1] तस्य विहितकाचस्य ; काचस्योदके इति व्याख्यायां पाठः.

भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात् । अवले- 111·3
प्या[1]नां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् । विरूपाणां
वा तापनमुदकपेषणं च बहुशः कुर्यात् ।

अवक्षेपः प्रतिमानमग्निर्गण्डिका भण्डिकाधिकरणी पिच्छ-
स्सूत्रं चेल्लमबोल्लनं[2] शिर उत्सङ्गो माक्षिका स्वकायेक्षादृतिरुदक-
शरावमग्निष्ठमिति काचं विद्यात् ।

राजतानां विस्रं मलग्राहि परुषं प्रस्तीनं विवर्णं वा दुष्टमिति
विद्यात् ।

एवं नवं च जीर्णं च विरूपं च विभाण्डकं ।
परीक्षेतात्ययं चैषां यथोद्दिष्टं प्रकल्पयेत् ॥

इत्यध्यक्षप्रचारे विशिखायां सौवर्णिकप्रचारः
चतुर्दशोऽध्यायः. आदितः पञ्चत्रिंशः.

## ३३ प्रक. कोष्ठागाराध्यक्षः.

कोष्ठागाराध्यक्षः सीताराष्ट्रक्रयिमपरिवर्तकप्रामित्यकापमित्य-
कासिंहनि[3]कान्यजातव्ययप्रत्यायोपस्थानान्युपलभेत ।

सीताध्यक्षोपनीतः सस्यवर्णकस्सीता॥ पिण्डकरः, षड्भागः,
सेनाभक्तं, बलिः, करः, उत्सङ्गः, पार्श्वं, पारिहीणिकं, औपाय-
निकं, कौष्ठेयकं च राष्ट्रम् ॥

1 लेख्या.　　2 चेलं बोल्लनं ; चेल्लबोल्लनमित्येकं पदं केचित्पठन्तीति व्याख्या.
3 हृति.

112·2 धान्यमूल्यं, कोशनिर्हारः, प्रयोगप्रत्यादानं च क्रयिमम् । सस्यवर्णानामर्घान्तरेण विनिमयः परिवर्तकः ।

सस्ययाचनमन्यतः प्रामित्यकम् ।

तदेव प्रतिदानार्थमापमित्यकम्[1] ।

कुट्टकरोचकसक्तुशुक्तपिष्टकर्म तज्जीवनेषु तैलपीडनमौर[2]भ्रचाक्रिकेष्विक्षूणां च क्षारकर्म सिंहनिका[3] ।

नष्टप्रस्मृतादिरन्यजातः ।

विक्षेप[4]व्याधितान्तरारम्भशेषं च व्ययप्रत्यायः ।

तुलामानान्तरं हस्तपूरणमुत्करो व्याजी ।

पर्युषितं प्रार्जितं चोपस्थानमिति ।

धान्यस्नेहक्षारलवणानां धान्यकल्पं सीताध्यक्षे वक्ष्यामः ।

सर्पिस्तैलवसामज्जानस्नेहाः ।

फाणितगुडमत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः ।

सैन्धवसामुद्रबिडयवक्षारसौवर्चलोद्भेदजा लवणवर्गः ।

क्षौद्रं मार्द्विकं[5] च मधु ।

इक्षुरसगुळ[6] मधुफाणितजाम्बवपनसानामन्यतमो मेषशृङ्गीपिप्पलीक्वाथाभिषुतो मासिकष्षाण्मासिकस्सांवत्सरिको वा चिद्भिटोर्वारुकेक्षुकाण्डाम्रफलामलकावसुतः शुद्धो वा शुक्तवर्गः ।

वृक्षाम्लकरमर्दाम्रविदलामलकमातुलुङ्गकोलबदरसौवीरकपरूषकादिः फलाम्लवर्गः ।

---

1 नास्ति. 2 मौड. 3 इति; संहनिका इति व्याख्यायां पाठः.
4 विक्षेपो. 5 मार्द्वीकं. 6 गड.

दधिधान्याम्लादिः द्रवाम्लवर्गः ।

पिप्पलीमरिचशृङ्गिबेराजाजि[1]किराततिक्तगौरसर्षपकुस्तुम्बुरु- 114·6
चोरकदमनकमरुवकशिग्रुकाण्डादिः कटुकवर्गः ।

शुष्कमत्स्यमांसकन्दमूलफलशाकादि च शाकवर्गः ।

ततोऽर्धमापदर्थं जानपदानां स्थापयेत् । अर्धमुपयुञ्जीत ।
नवे[2] चानवं शोधयेत् ॥

क्षुण्णघृष्टपिष्टभृष्टानामार्द्रशुष्कसिद्धानां च धान्यानां वृद्धि-
क्षयप्रमाणानि प्रत्यक्षीकुर्वीत ॥

कोद्रवव्रीहीणामर्धं सारः । शालीनामष्ट[3]भागोनः।त्रिभागो
नो वर[4]काणाम् । प्रियङ्गूणामर्धं सारः[5]चमसीमुद्गमाषाणामर्धपा-
दोनः[6] । शैब्यानामर्धं सारः । त्रिभागोनः मसूराणा[7]म् ॥

पिष्टमाम[8]कुल्माषाश्चाध्यर्धगुणाः । द्विगुणो यावकः। पुलाकः
पिष्टं च सिद्धम् ॥

कोद्रववरकोदारकप्रियङ्गूणां त्रिगुणमन्नं। चतुर्गुणं व्रीहीणाम्।
पञ्चगुणं शालीनाम् ॥

तिमितमपरान्नं[9] द्विगुणमर्धाधिकं विरूढानाम् ।

पञ्चभागवृद्धिःभृ[10]ष्टानाम्। कळायो द्विगुणः। लाजा भरुजाश्च 115·6
षट्कं तैलमतसीनाम्। निम्बकुशाम्रकापित्थादीनां पञ्चभागः।

---

[1] जाजी. [2] नवेन च इति व्याख्यायां च पाठः. [3] मर्ध. [4] ऽवर. [5] नव भागवृद्धि-श्च । उदारकस्तुल्यः । यवगोधूमाश्च क्षुणाः । तिला यवा मुद्गमाषाश्च घृष्टाः । पञ्चभा-गवृद्धिर्गोधूमः सक्तवश्च । पादोना कलायचमसी । मुद्ग. [6] ना. [7] मधूसराणाम्. [8] मामं. [9] तिमिरमपराणां. [10] भ्र.

116·1 चतुर्भागिकास्तिलकुसुम्भ[1]मधूकेङ्गुदीस्नेहाः ।

कार्पासक्षौमाणां पञ्चपले पल[2]सूत्रम् ।

पञ्चद्रोणे शालीनां च दशा[3]ढकं तण्डुलानां कलभभोजनम्। एकादशकं व्यालानाम्। दशकं औपवाह्यानां। नवकं सान्नाह्यानाम् । अष्टकं पत्तीनाम् । सप्तकं मुख्यानाम् । षट्कं देवीकुमाराणाम् । पञ्चकं राज्ञाम् ॥

अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थं चतुर्भागस्सूपः सूपषोडशो लवणस्यांशः चतुर्भागस्सार्पिषः तैलस्य वा एकमार्यभक्तम् ॥

पुंसः[4]षड्भागस्सूपः अर्धस्नेहमव[5]राणाम् ।

पादोनं स्त्रीणाम् ।

अर्धं बालानाम् ।

मांसपलविंशत्या स्नेहार्धकुडुम्बः[6], पलिको लवणस्यांशः, क्षारपलयोगः, द्विधरणिकः कटुकयोगः, दध्नश्चार्धप्रस्थः ।

तेनोत्तरं व्याख्यातम् ।

शाकानामध्यर्धगुणः । शुष्काणां द्विगुणस्स चैव योगः ।

हस्त्यश्वयोस्तदध्यक्षे विधाप्रमाणं वक्ष्यामः ।

बलीवर्दानां माषद्रोणं यवानां वा पुलाकश्शेषमश्वविधानम् ।

विशेषो घाणपिण्याकतुला कणकुण्डकं दशाढकं वा ।

117·4 द्विगुणं महिषोष्ट्राणाम् ।

---

1 कुसुम्ब. 2 पलं. 3 द्वादश. 4 प्रस्थ. इति व्याख्यायां पाठः. 5 प. 6 बः

अर्धद्रोणं खरपृषतरोहितानाम् । 117·5

आढकमेणकुरङ्गाणाम् ।

अर्धाढकमजैळकवराहाणां द्विगुणं वा आकण्ठ[1]कुण्डकम् ।

प्रस्थौदनश्शुनाम् ।

हंसक्रौञ्चमयूराणामर्धप्रस्थः ।

शेषाणामतो मृगपशुपक्षिव्याळानामेकभक्तादनुमानं ग्राहयेत् ।

अङ्गारान् तुषान् लोहकर्मान्तभित्तिलेप्यानां हार[2]येत् ।

कणिकाः[3] दासकर्मकरसूपकराणामतोऽन्यदौदनिकापूपिकेभ्यः प्रयच्छेत् ।

तुलामानभाण्डं रोचनीदृषन्मुसलोलूखलकुट्टकरोचकयन्त्रपत्रकशूर्पचालनि[4]काकण्डोळीपिटकसंमार्जन्यश्चोपकरणानि ।

मार्जकरक्षकधरकमायकमापकदायकदापकशलाकाप्रतिग्राहकदासकर्मकरवर्गश्च विष्टिः ॥

उच्चैर्धान्यस्य निक्षेपो मूताः क्षारस्य संहताः ।
मृत्काष्ठकोष्ठा[5]स्स्नेहस्य पृथिवी लवणस्य च ॥

इत्यध्यक्षप्रचारे कोष्ठागाराध्यक्षः पञ्चदशोऽध्यायः.
आदितष्षट्त्रिंशः.

## ३४. प्रक. पण्याध्यक्षः.

पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्ग्वर्घान्तरं प्रियाप्रियतां च विद्यात् । 118·4

[1] कण. [2] लेख्यानाहार. [3] कर्णिका. [4] नी. [5] कोष्ठे.

118·4 तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोजकालान् ।

यच्च पण्यं प्रचुरं स्यात्तदेकीकृत्यार्घमारोपयेत् । प्राप्तेऽर्घे वाऽर्घान्तरं कारयेत् ।

स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत् । परभूमिजानामनेकमुखम् ।

उभयं च प्रजानामनुग्रहेण विक्रापयेत् । स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत् ।

अजस्रपण्यानां कालोपरोधं सङ्कुलदोषं वा नोत्पादयेत् ।

बहुमुखं वा राजपण्यं वैदेहकाः कृतार्घं विक्रीणीरन् । छेदानुरूपं च वैधरणं दद्युः ।

षोडशभागो मानव्याजी । विंशतिभागस्तुलामानम् । गण्यपण्यानामेकादशभागः ।

परभूमिजं पण्यमनुग्रहेणावाहयेत्[1] । नाविकसार्थवाहेभ्यश्च परिहारमायतिक्षमं दद्यात् । अनभियोगश्चा[2]र्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः ॥

पण्याधिष्ठातारः पण्यमूल्यमेकमुखं काष्ठ[3]द्रोण्यामेकच्छिद्रापि[4]धानायां निदध्युः । अह्नश्चाष्टमे भागे पण्याध्यक्षस्यार्पयेयुः "इदं विक्रीतमिदं शेषमिति" । तुलामानभाण्डकं[5] चार्पयेयुः ॥

119·7 इति स्वविषये व्याख्यातम् ।

---

[1] वहेयेत्. [2] योगं चा. [3] कोष्ठ. [4] वि. [5] भाण्डं.

परविषये तु—पण्यप्रतिपण्ययोरर्घ[1]मूल्यं च आगमय्य शुल्क-वर्तन्यातिवाहक[2]गुल्मतरदेयभक्तभागव्ययशुद्धमुदयं पश्येत्। असत्युदये भाण्ड[3]निर्वहणेन पण्यप्रतिपण्यार्घेण[4]वा लाभं पश्येत्। ततस्सारपादेन स्थलव्यवहारमध्वना क्षेमेण प्रयोजयेत्। अट-व्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम्। 119'8

आपदि सारमात्मानं वा मोक्षयेत्। आत्मनो वा भूमि-मप्राप्तः सर्वदेयविशुद्धं व्यवहरेत्[5]।

वारिपथे च[6]यानभागकपथ्यदनपण्यप्रतिपण्यार्घप्रमाणयात्रा-कालभयप्रतीकारपण्यपत्तनचारित्राण्युपलभेत ॥

नदीपथे च विज्ञाय व्यवहारं चारित्रतः।
यतो लाभस्ततो गच्छेदलाभं परिवर्जयेत् ॥

इत्यध्यक्षप्रचारे पण्याध्यक्षष्षोडशोऽध्यायः.
आदितस्सप्तत्रिंशः.

---

## ३५. प्रक. कुप्याध्यक्षः.

---

कुप्याध्यक्षो द्रव्यवनपालैः कुप्यमानाययेत्। द्रव्यवनकर्मा-न्तांश्च प्रयोजयेत्। द्रव्यवनच्छिदां च देयमत्ययं च स्थापये-दन्यत्रापद्भयः ॥ 121'1

कुप्यवर्गः—शाकतिनि[7]शधन्वनार्जुनमधूकतिलकसालशिंशु[8]

---

[1] रघं. [2] हिक. [3] भाण्डा. [4] प्रतिपण्यानयनेन.
[5] रेत. [6] वा. [7] तिमि. [8] श.

121·3 पारिभद्रराजादनशिरीषखदिरसरलतालसर्जाश्वकर्णसोमवल्क-कशाम्रप्रियकधवादिस्सारदारुवर्गः ॥

उटजचिमियचव[1]वेणुवंशसातिनकण्टकभाल्लूका[2]दिःवेणुवर्गः॥

वेत्रशोकवल्ली[3] वाशीश्यामलतानागलतादिर्वल्लीवर्गः ॥

मालतीदू[4]र्वार्किशणगवेधुः[5]कातस्यादिः वल्कवर्गः ॥

मुञ्जबल्बजादि रज्जुभाण्डम् ॥

ताळीताळभूर्जानां पत्रम् । किंशुककुसुम्भकुंकुमानां पुष्पम् ॥

कन्दमूलफलादिरौषधवर्गः ॥

काळकूटवत्सनाभहाला[6]हलमेषशृङ्गमुस्ताकुष्ठमहाविषवेल्लितक-गौरार्द्रबालकमार्कटहैमवतकाळिङ्गकदारदकांकोल[7]सारकोष्ट्र[8]का

122·7 दीनि विषाणि । सर्पाः कीटाश्च त एव कुम्भगता विषवर्गः ।

गोधासेरकद्वीपिशिंशुमारसिंहव्याघ्रहस्तिमहिषचमरसृमरख-ड्गगोमृगगवयानां चर्मास्थिपित्तस्नाय्वस्थिदन्तशृङ्गखुरपुच्छा-न्यन्येषां वाऽपि मृगपशुपक्षिव्याळानाम् ।

123·3 कालायसताम्रवृत्तकांस्यसीसत्रपुवैकृन्तकारकूटानि लोहानि ।

विदळमृत्तिकामयं भाण्डम् ।

अङ्गारतुषभस्मानि मृगपशुपक्षिव्याळी[9]वाटाः काष्ठतृणवाटा-श्चेति ।

---

1 चाप. 2 ल्लुका. 3 शोकवल्ली इति व्याख्यापाठः. 4 मू. 5 धु. 6 हला. 7 कोल. 8को ; सारोष्ट्रकादीनि. 9 व्याल.

बहिरन्तश्च[1] कर्मान्ता विभक्तास्सर्वभाण्डिकाः । 123·8

आजीवपुररक्षार्थाः कार्याः कुप्योपजीविना[2] ॥

इत्यध्यक्षप्रचारे कुप्याध्यक्षः सप्तदशोऽध्यायः

आदितोऽष्टत्रिंशः.

## ३६ प्रक. आयुधागाराध्यक्षः.

आयुधागाराध्यक्षः साङ्ग्रामिकं दौर्गकर्मिकं परपुराभिघातिकं चक्रयन्त्रमायुधमावरणमुपकरणं च तज्जातकारुशिल्पिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारयेत् ।

स्वभूमौ[3] च स्थापयेत् ।

स्थानपरिवर्तनमातपप्रदानं[4] च बहुशः कुर्यात् ।

ऊष्मोपस्नेहक्रिमिभिरुपहन्यमानमन्यथा स्थापयेत् ।

जातिरूपलक्षणप्रमाणागममूल्यनिक्षेपैश्चोपलभेत ।

सर्वतोभद्रजामदग्न्यबहुमुखविश्वासघातिसङ्घाटीयानकपर्जन्यकार्धबाहू[5] र्ध्वबाहूनि स्थित[6] यन्त्राणि ।

पञ्चालिक[7] देवदण्डसूकरिकामुसलयष्टिहस्तिवारकतालवृन्तमुद्गरगदास्पृक्तलाकुद्दालास्फाटिमोद्घाटिम[8] शताघ्नि[9] त्रिशूलचक्राणि चलयन्त्राणि ॥ 124·3

शक्तिप्रासकुन्तहाटकाभिण्डिवालशूलतोमरवराहकर्णकणयकर्पणत्रासिकादीनि च हुलमुखानि ।

[1] रन्ताश्च. [2] विनाम्. [3] मिषु. [4] तपप्रवातप्रदानं. [5] न्यकबाहू. [6] स्थिर. [7] पाञ्चालिक. [8] टिमोत्पाटिमोद्घाटिम. [9] घ्नी.

125·3 तालचापदारवशार्ङ्गाणि कार्मुककोदण्डद्रूणा धनूंषि ।

मूर्वार्कशणगवेधु[1] वेणुस्नायूनि ज्याः ।

वेणुशरशलाकादण्डासननाराचाश्च इषवः ।

तेषां मुखानि छेदनभेदनताडनान्यायसास्थिदारवाणि ।

निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः ।

खड्गमाहिषवारणविषाणदारुवेणुमूलानि त्सरवः ।

परशुकुठारपट्टसखनित्रकुद्दालचक्र[2]काण्डच्छेदनाः क्षुरकल्पाः ।

यन्त्रगोष्पणमुष्टिपाषाणरोचनीदृषदश्च आयुधानि[3] ।

लोहचा[4] लिकापट्टकवचसूत्रकं कर्कटशिंशुमारकखड्गिधेनुकहस्तिगोचर्मखुरशृङ्गसङ्घातं वर्माणि शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाणपट्टनागोदारकावेरि[5] चर्महस्तिक[6] तालमूलधमनिकाकवाटकिटिकाप्रतिहतवलाहकान्ताश्च आवराणि ।

126·6 हस्तिरथवाजिनां योग्यभाण्डमालङ्कारिकं सन्नाहकल्पनाश्चोपकरणानि ।

ऐन्द्रजालिकमौपनिषदिकं च कर्म कर्मान्तानां च ।

इच्छामारम्भनिष्पत्तिं प्रयोगं व्याजमुद्देयम्[7] ।

क्षयव्ययौ च जानीयात् कुप्यानामायुधेश्वरः ॥

इत्यध्यक्षप्रचारे आयुधागाराध्यक्षः अष्टादशोऽध्यायः
आदित एकोनचत्वारिंशः.

---

[1] वेधु. [2] 'क्रकच' इति व्याख्याने पाठः. [3] श्वारायुधानि.
[4] लैहजा. [5] पेठि. [6] हास्तिकर्ण. [7] व्याजिमुद्यमम्.

# ३७. प्रक. तुलामानपौतवम्.

पौतवाध्यक्षः पौतवकर्मान्तान् कारयेत् । 127·4

धान्यमाषा दश सुवर्णमाषकः पञ्च वा गुञ्जाः ।

ते षोडश सुवर्णः कर्षो वा ।

चतुःकर्षं पलम् ।

अष्टाशीतिर्गौरसर्षपा रूप्यमाषकः ।

ते षोडश धरणम् । शैब्यानि वा विंशतिः ।

विंशतितण्डुलम् वज्रधरणम् ।

अर्धमाषकः, माषकः, द्वौ, चत्वारः, अष्टौ[1] माषकाः, सुवर्णौ द्वौ, चत्वारः, अष्टौ सुवर्णाः, दश, विंशतिः त्रिंशत्, चत्वारिंशत्, शतमिति ।

तेन धरणानि व्याख्यातानि ।

प्रतिमानान्ययोमयानि मागधमेकलशैलमयानि, यानि वा नोदकमपोहा[2]भ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम् ।

षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तराः दश तुलाः कारयेल्लोहपलादूर्ध्वमेकपलोत्तराः यन्त्रमुभयतः शिक्यं वा ।

पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत् । 128·3 तस्याः पञ्चपालिकं मण्डलं बध्वा समकरणं कारयेत् । ततः कर्षोत्तरं पलं पलोत्तरं दशपलं द्वादश, पञ्चदश, विंशतिरिति[3] कारयेत् । तत आशतादृशोत्तरं कारयेत् । अक्षेषु नान्दीपिनद्धं[4] कारयेत् ।

---

[1] अष्टौ सुवर्णा दश. [2] प्रदेहा. [3] मिति पदानि. [4] कारयेत् । नन्द्रीपिनद्धं.

128·4 द्विगुणलोहां तुलामतष्षण्णवत्यङ्गुलायामां परिमाणीं कारयेत्। तस्स्याः शतपदादूर्ध्वं विंशतिः, पञ्चाशत्, शतमिति पदानि कारयेत्।

विंशतितौलिको भारः।

दशधरणिकं पलम्।

तत्पलशतमायमानी।

पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजनी च।

तासामर्धधरणावरं पलम्। द्विपलावरमुत्तरलोहम्। षडङ्गुलावराश्चायामाः।

पूर्वयोः पञ्चपालिकः प्रयामो मांसलोहलवणमणिवर्जम्।

काष्ठतुला अष्टहस्ता पदवती प्रतिमानवती मयूरपदाधिष्ठिता।

129·4 काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम्। एष प्रदेशो बह्वल्पयोः।

इति तुलाप्रतिमानं व्याख्यातम्।

अथ धान्यमाषद्विपलशतं द्रोणमायमानम्।

सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम्।

पञ्चसप्ततिपलशतं भाजनीयम्।

द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम्।

तेषामाढकप्रस्थकुडुम्बा[1] श्चतुर्भागावराः।

षोडशद्रोणा वारी[2]।

---

[1] डुबा. [2] खारी.

विंशतिद्रोणिकः कुम्भः ।

कुम्भैर्दशभिर्वहः ।

शुष्कसारदारुमयं समं[1] चतुर्भागशिखं मानं कारयेत् । अन्तश्शिखं वा ।

रसस्य तु सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः ।

सपादपणो द्रोणमूल्यम् ।

आढकस्य पादोनः ।

षण्माषकाः प्रस्थस्य ।

माषकः कुडुबस्य ।

द्विगुणं रसादीनां मानमूल्यम् ।

विंशतिपणाः प्रतिमानस्य ।

तुलामूल्यं त्रिभागः ।

चतुर्मासिकं प्रातिवेधनिकं कारयेत् ।

अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः ।

प्रातिवेधनिकं काकणीकमहरहः पौतवाध्यक्षाय दद्युः ।

द्वात्रिंशद्भागस्तप्तव्याजी सर्पिषश्चतष्षाष्टिभागस्तैलस्य ।

पञ्चाशद्भागो मानस्रावो द्रवाणां । 131.1

कुडुबा[2]र्धचतुरष्टभागानि मानानि कारयेत् ।

कुडुम्बा[3]श्चतुराशीतिः वारकस्सर्पिषो मतः ।
चतुष्षष्टिस्तु तैलस्य पादश्च घटिकाऽनयोः ॥

इत्यध्यक्षप्रचारे तुलामानपौतवं एकोनविंशोध्यायः आदितश्चत्वारिंशः.

[1] समयम्. [2—3] डुवा.

## ३८ प्रक. देशकालमानम्.

131·4 मानाध्यक्षो देशकालमानं विद्यात् ।

अष्टौ परमाणवो रथचक्रविप्रुट् ।

ता अष्टौ लिक्षा ।

ता अष्टौ यूकामध्यः ।

ते अष्टौ यवमध्यः ।

अष्टौ यवमध्याः अङ्गुलं; मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाङ्गुलम् ।

चतुरङ्गुलो धनुर्ग्रहः ।

अष्टाङ्गुला धनुर्मुष्टिः ।

द्वादशाङ्गुलो[1] वितस्तिः छायापौरुषम् च ।

चतुर्दसाङ्गुलं शमश्शलः परिरयः पदं च ।

द्विवितस्तिररत्निः प्राजापत्यो हस्तः ।

सधनुर्ग्रहः पौतवविवीतमानम् ।

सधनुर्मुष्टिः किष्कुः कंसो वा ।

द्विच[2]त्वारिंशदङ्गुलस्तक्षणः क्राकचिक[3]किष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम् ।

132·4 चतुःपञ्चाशदङ्गुलः कुप्यवनहस्तः ।

चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च[4] ।

---

[1] ङ्गुला. [2] द्वाच. [3] चीक. [4] नास्ति.

गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानं पौरुषं च अग्नि-चित्यानाम् ।

षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम् ।

दशदण्डो रज्जुः । 133'1

द्विरज्जुकः परिदेशः ।

त्रिरज्जुकं निवर्तनम् ।

एकतो द्विदण्डाधिको बाहुः ।

धनु[1] स्सहस्रं गोरुतम् ।

चतुर्गोरुतं योजनम् ।

इति देशमानं व्याख्यातम् ।

कालमानमत ऊर्ध्वम् ।

त्रुटो[2] लवो निमेषः काष्ठा कला नाळिका[3] मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः ।

द्वौ त्रुटौ[4] लवः ।

द्वौ लवौ निमेषः ।

पञ्च निमेषाः काष्ठा ।

त्रिंशत्काष्ठाः कला ।

चत्वारिंशत्कलाः नाडिका ।

सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भच्छिद्र[5]माढकमंभसो वा नाळिका[6] ।

द्विनाळिका[7] मुहूर्तः ।

[1] द्विधनु [2] तुटो, त्रुटिरिति व्याख्यानुसारी पाठः. [3] नाडिका [4] तुटौ. [5] द्रकामा. [6] नाडिका. [7] द्विनाडिको

पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे[1] मास्याश्वयुजे च मासि भवतः।

ततः परं त्रिभिर्मुहूर्तैरन्यतरष्षण्मासं वर्धते ह्रास[2] ते चेति।

छायायामष्टपौरुष्यामष्टादशभागच्छेदः षट्पौरुष्यां चतुर्दशभागः चतुष्पौरुष्यामष्टभागः द्विपौरुष्यां षड्भागः पौरुष्यां चतुर्भागः अष्टाङ्गुलायां त्रयोदश[3]भागाः च[4]तुरङ्गुलायां अष्टभागाः[4] अच्छायो मध्याह्न इति।

134'2 परावृत्ते दिवसे शेषमेवं विद्यात्।

आषाढे मासि नष्टच्छायो मध्याह्नो भवति।

अतः परं श्रावणादीनां षण्मासानां द्व्यङ्गुलोत्तरा माघादीनां द्व्यङ्गुलावरा छाया इति।

पञ्चदशाहोरात्राः पक्षः।

सोमाप्यायनश्शुक्लः।

सोमावच्छेदनो बहुलः।

द्विपक्षो मासः।

त्रिंशदहोरात्रः प्रकर्ममासः।

सार्धस्सौरः।

अर्धन्यूनश्चान्द्रमासः।

सप्तविंशतिर्नक्षत्रमासः।

द्वात्रिंशत् मलमासः।

पञ्चत्रिंशदश्ववाहायाः।

चत्वारिंशद्धस्तिवाहायाः।

---

[1] चैत्रे चाश्व. [2] ह्रस. [3] त्रयोऽष्ट. [4] नास्ति.

द्वौ मासावृतुः ।

श्रावणः प्रोष्ठपदश्च वर्षाः । 1351

आश्वयुजः कार्तिकश्च शरत् ।

मार्गशीर्षः पौषश्च हेमन्तः ।

माघः फाल्गुनश्च शिशिरः ।

चैत्रो वैशाखश्च वसन्तः ।

ज्येष्ठामूलीय आषाढश्च ग्रीष्मः ।

शिशिराद्युत्तरायणम् ।

वर्षादि दक्षिणायनम् ।

द्व्ययनस्संवत्सरः ।

पञ्चसंवत्सरो युगमिति ।

> दिवसस्य हरत्यर्कष्षष्टिभागमृतौ ततः ।
> करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥
> एवमर्धतृतीयानामब्दानामधिमासकम् ।
> ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम् ॥

इत्यध्यक्षप्रचारे देशकालमानं विंशोऽध्यायः.
आदित एकचत्वारिंशः.

---

## २१ प्रक. शुल्काध्यक्षः

---

शुल्काध्यक्षः शुल्कशाला[1]ध्वजं च प्राङ्मुखं उदङ्मुखं वा महाद्वाराभ्याशे निवेशयेत् ।

---

[1] शालां.

135.5 शुल्कादायिनश्चत्वारः पञ्च वा सार्थोपयातान् वणिजो लिखेयुः—"के कुतस्त्याः कियत्पण्याः क्व चाभिज्ञानमुद्रा वा कृता" इति ।

अमुद्राणामत्ययो देयद्विगुणः ।

कूटमुद्राणां शुल्काष्टगुणो दण्डः ।

भिन्नमुद्राणामत्ययो घटिकास्थाने स्थानम् ।

राजमुद्रापरिवर्तने नामकृते वा सपादपणिकम् वहनं दापयेत् ।

ध्वजमूलोपस्थितस्य प्रमाणमर्घं च वैदेहकाः पण्यस्य ब्रूयुः—

136.3 "एतत्प्रमाणेनार्घेण पण्यमिदं कः क्रेतेति" त्रिरुद्घोषित मर्थिभ्यो दद्यात् । क्रेतृसङ्घर्षे मूल्यवृद्धिस्सशुल्का कोशं गच्छेत् ।

शुल्कभयात्पण्यप्रमाणं मूल्यं वा हीनं ब्रुवतस्तदतिरिक्तं राजा हरेत् । शुल्कमष्टगुणं वा दद्यात् ।

तदेव निविष्टपण्यस्य भाण्डस्य हीनप्रतिवर्णकेनार्घापकर्षेण सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च कुर्यात् ।

प्रतिक्रेतृभयाद्वा पण्यमूल्यादुपरि मूल्यं वर्धयतो मूल्यवृद्धिं राजा हरेत्, द्विगुणं वा शुल्कं कुर्यात् ।

तदेवाष्टगुणमध्यक्षस्य छादयतः ।

तस्माद्विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः । तर्कः फल्गुभाण्डानामानुग्राहिकाणां च ।

137.1 ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः ।

पथिकोत्पथिकास्तद्विद्युः ।

वैवाहिकमन्वायनमौपयानिकं यज्ञकृत्यप्रसवनैमित्तिकं देवेज्याचौलोपनयनगोदानव्रतदक्षिणादिषु क्रियाविशेषेषु भाण्डमुच्छुल्कं गच्छेत् । 137·2

अन्यथावादिनस्स्तेयदण्डः ।[1]

कृतशुल्केनाकृतशुल्कं निर्वाहयतो द्वितीयमेकमुद्रया[2] भित्वा पुटमपहरतो[3] वैदेहकस्य तच्च तावच्च दण्डः ।

शुल्कस्थानाद्गोमयपलालं प्रमाणं कृत्वाऽपहरत उत्तमस्साहसदण्डः ।

शस्त्रवर्मकवचलोहरथरत्नधान्यपशूनामन्यतमानिर्वाह्यं निर्वाहयतो यथावघुषितो दण्डः पण्यनाशश्च ।

तेषामन्यतमस्यानयने बहिरेवोच्छुल्को विक्रयः ।

अन्तपालः सपादपणिकां, वर्तनीं गृह्णीयात् ।

पण्यवहनस्य पणिकामेकखुरस्य, पशूनामर्धपणिकां, क्षुद्रपशूनां पादिकां, अंसभारस्य माषिकाम् ।

नष्टापहृतं च प्रतिविदध्यात् ।

वैदेश्यं सार्थं कृतसारफल्गुभाण्डविचयनमभिज्ञानं मुद्रां च दत्वा प्रेषयेदध्यक्षस्य ।

वैदेहकव्यञ्जनो वा सार्थप्रमाणं राज्ञः प्रेषयेत् । 138·4

तेन प्रदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणमुपदिशेत् सर्वज्ञत्वख्यापनार्थम् । ततस्सार्थमध्यक्षोऽभिगम्य ब्रूयात्—

[1] वादि. [2] मुद्राया. [3] पण्यपुट.

"इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यं एष राज्ञः प्रभावः" इति ।

निगूहितफल्गुभाण्डं शुल्काष्टगुणो दण्डः । सारभाण्डं सर्वापहारः ।

राष्ट्रपीडाकरं भाण्डमुच्छिन्द्यादफलं च यत् ।
महोपकारमुच्छुल्कं कुर्याद्बीजं तु[1] दुर्लभम् ॥

इत्यध्यक्षप्रचारे शुल्काध्यक्ष एकविंशोऽध्यायः
आदितो द्विचत्वारिंशः.

## ४० प्रक. शुल्कव्यवहारः.

138·8 शुल्कव्यवहारः बाह्यमाभ्यन्तरं चातिथ्यम् ।

निष्क्राम्यं प्रवेश्यं च शुल्कम् ।

प्रवेश्यानां मूल्यपञ्चभागः ।

पुष्पफलशाकमूलकन्दपाल्लि[2]क्यबीजशुष्कमत्स्यमांसानां षड्भागं गृह्णीयात् ।

शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत् कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः ।

क्षौमदुकूलक्रिमितानकङ्कटहरितालमनश्शिलाहिङ्गुलुक[3]लोहवर्णधातूनां चन्दनागरुकटुकाकिण्वावरणानां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानामजैळकस्य च दशभागः, पञ्चदशभागो वा ।
139·4

[1] च. [2] वल्लि. [3] लक.

वस्त्र[1]चतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्म- 139·5
मृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः
पञ्चविंशतिभागो वा ।

द्वारादेयं शुल्कपञ्चभागं आनुग्राहिकं वा यथादेशोपकारं स्थापयेत् ।

जातिभूमिषु च पण्यानामविक्रयः ।

खनिभ्यो धातुपण्यादानेषु[2] षट्छतमत्ययः ।

पुष्पफलवाटेभ्यः पुष्पफलादाने चतुष्पञ्चाशत्पणो दण्डः ।

षण्डेभ्यः शाकमूलकन्दादाने पादोनं द्विपञ्चाशत्पणो दण्डः ।

क्षेत्रेभ्यस्सर्वसस्यादाने त्रिपञ्चाशत्पणः ।

पणोऽध्यर्धपणश्च सीतात्ययः ।

अतो नवपुराणानां देशजातिचरित्रतः ।

पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः ॥

इत्यध्यक्षप्रचारे शुल्कव्यवहारो द्वाविंशोऽध्यायः.
आदितस्त्रिचत्वारिंशः.

## ४० प्रक. सूत्राध्यक्षः.

सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं तज्जातपुरुषैः कारयेत् । 140·4
ऊर्णावल्ककार्पासतूलशणक्षौमाणि च। विधवान्यङ्गाकन्याप्रव्रजितादण्डप्रतिकारिणी[3]भी रूपाजीवामातृकाभिर्वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत् ।

[1] वज्र, [2] दाने. [3] दण्डप्रतिकारिणीं इति व्याख्यायाम्. (पदमिदं पुनः प्रयुक्तं प. 115.)

140·6 श्लक्ष्णस्थूलमध्यतां[1] च सूत्रस्य विदित्वा वेतनं कल्पयेत् बहल्पतां च सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात् ।

तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः ।

सूत्रह्रासे वेतनह्रासः द्रव्यसारात् ।

कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारुभिश्च कर्म कारयेत्, प्रतिसंसर्गं च गच्छेत् ।

क्षौमदुकूलक्रिमितानराङ्कवकार्पाससूत्रवानकर्मान्तांश्च प्रयुञ्जानो गन्धमाल्यदानैरन्यैश्चौपग्राहिकैराराधयेत् ।

वस्त्रास्तरणप्रावरणविकल्पानुत्थापयेत् ।

कङ्कटकर्मान्तांश्च तज्जातकारुशिल्पिभिः कारयेत् ।

141·9 याश्चानिष्कासिन्यः प्रोषितविधवा न्यङ्गा कन्यका वाऽऽत्मानं बिभृयुस्ताः स्वदासीभिरनुसार्य[2] सोपग्रहं कर्म कारयितव्याः।

स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत् ।

सूत्रपरीक्षार्थमात्रः प्रदीपः।

स्त्रिया मुखसन्दर्शनेऽन्यकार्यसंभाषायां वा पूर्वस्साहसदण्डः।

वेतनकालातिपातने मध्यमः ।

अकृतकर्मवेतनप्रदाने च ।

---

[1] मध्यस्थतां. [2] स्वदासीभिरनुसाध्य.

गृहीत्वा वेतनं कर्म अकुर्वन्त्याः अङ्गुष्ठसन्दंशनं दापयेत् । भक्षितापहृतावस्कन्दितानां च ।

वेतनेषु च कर्मकराणामपराधतो दण्डः ।

रज्जूवर्त[1]कैश्च पूर्वाकारैश्च[2]स्वयं संसृज्येत ।

भाण्डादीनि च वरत्रादीनि वर्तयेत् ।

सूत्रवल्कमयी रज्जूः वरत्रा वेत्र[3]वैणवीः ।

सान्नाह्या बन्धनीयाश्च यानयुग्यस्य कारयेत् ॥ 145'4

इत्यध्यक्षप्रचारे सूत्राध्यक्षस्त्रयोविंशोऽध्यायः आदितश्चतुश्चत्वारिंशः.

## ४१ प्रक. सीताऽध्यक्षः.

सीताध्यक्षः कृषितन्त्रगुल्म[4]वृक्षायुर्वेदज्ञस्तज्ज्ञसखो वा सर्व- 142'6 धान्यपुष्पफलशाककन्दमूलपा[5]ल्लीक्यक्षौमकार्पासबीजानियथा-कालं गृह्णीयात् ।

बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत्।

कर्षणयन्त्रोपकरणबलीवर्दैश्चैषामसङ्गं कारयेत् ।

कारुभिश्च कर्मारकुट्टाकमेदकरज्जुवर्तकसर्व [6]ग्राहादिभिश्च ।

तेषां कर्मफलविनिपाते तत्फलहानं दण्डः ।

षोडशद्रोणं जाङ्गलानां वर्षप्रमाणमध्यर्धमानू[7]पानां देशवा-[8]

---

[1] रज्जुवर्त. [2] वर्मकारैश्च इति व्याख्याने च पाठः. [3] वैत्र. [4] शुल्व. [5] वा. [6] सर्प. [7] मनू. [8] देशावापानामिति व्या.

144·3 पानामर्धत्रयोदशाश्मकानां त्रयोविंशतिरवन्तीनाममितमपरान्तानां हैमन्यानां च कुल्यावापानां च कालतः ।

वर्षात्रिभागः पूर्वपश्चिममासयोः द्वौ त्रिभागौ मध्यमयोः सुषमा[1]रूपम् ।

तस्योपलब्धिर्बृहस्पतेस्स्थानगमनगर्भाधानेभ्यः शुक्रोदयास्तमयचारेभ्यः सूर्यस्य प्रकृतिवैकृताच्च ।

सूर्याद्बीजसिद्धिः ।

बृहस्पतेस्सस्यानां स्तम्बकारिता ।

शुक्राद्वृष्टिरिति ।

त्रयस्सप्ताहिका मेघा अशीतिः कणशीकराः ।
षष्टिरातपमेघानां एषा वृष्टिस्समाहिता ॥
वातमातपयोगं च विभजन्यत्र वर्षति ।
त्रीन् कर्षकांश्च[2]जनयन् तत्र सस्यागमो ध्रुवः ॥

ततः प्रभूतोदकम[3]ल्पोदकं वा सस्यं वापयेत् ।

शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवरकाः[4] पूर्ववापाः ।

मुद्गमाषशैब्या मध्यवापाः ।

कुसुम्भ[5]मसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः पश्चाद्वापाः।

यथर्तुवशेन वा बीजवापाः ।

वापातिरिक्तमर्धसीतिकाः कुर्युः ।

स्ववीर्योपजीविनो वा चतुर्थपञ्चभागिकाः यथेष्टमनवसितं भागं[6]दद्युरन्यत्र कृच्छ्रेभ्यः स्वसेतुभ्यः ।

---

[1] सुषुमा. [2] करीषांश्च. [3] दम. [4] वराकाः. [5] कुसुम्ब. [6] वासितभागं.

हस्तप्रावर्तिममुदकभागं पञ्चमं दद्युः । 144·5

स्कन्धप्रावर्तिमं च तृतीयम् ।

स्रोतोयन्त्रप्रावर्तिमं च तृतीयम् ।

चतुर्थं नदीसरस्तटाककूपोद्धाटम् ।

कर्मोदकप्रमाणेन केदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत् ।

शाल्यादि ज्येष्ठम् ।

षण्डो मध्यमः ।

इक्षुः प्रत्यवरः । इक्षवो हि[1] बह्वाबाधा व्ययग्राहिणश्च ।

फेनाघातो वल्लीफलानां, परिवाहान्ताः पिप्पलीमृद्वीकेक्षूणां, कूपपर्यन्ताः शाकमूलानां, हरिणी[2]पर्यन्ताः हरि[3]तकानां, पाल्योलपानां, गन्धभैषज्योशीरहीर[4]बेरपिण्डालुकादीनां यथास्वं भूमिषु च स्थाल्या[5] श्च अनूप्याश्चौषधीस्स्थापयेत् ।

तुषारपायनमुष्णशोषणं चासप्तरात्रादिति धान्यबीजानां, त्रिरात्रं वा[6] कोशीधान्यानां, मधुघृतसूकरवसाभिश्शकृद्युक्ताभिः काण्डबीजानां, छेदलेपो मधुघृतेन कन्दानाम्, अस्थि[7]बीजानां शकृदालेपः, शाखिनां गर्तदाहो गोस्थिशकृद्भिः काले दौहृदं[8]च।

प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत्[9] ।

कार्पाससारं निर्मोकं सर्पस्य च समाहरेत् । 145·6

न सर्पास्तत्र तिष्ठन्ति धूमो यत्रैष तिष्ठति ॥

---

[1] इक्षोर्हि. [2] तटाकादे रिक्तीभूत आर्द्रप्रदेशः हरिणी. [3] हरीत. [4] ह्रिरि. [5] स्थल्यां. [6] त्रिरात्रं पञ्चरात्रं वा. [7] अस्ति. [8] दोहदं. [9] पाययेत्.

सर्वबीजानां तु प्रथमवापे सुवर्णोदकसंप्लुतां पूर्वमुष्टिं वापयेत्[1] अमुं च मन्त्रं ब्रूयात्—

146·1 "प्रजापतये काश्यपाय देवाय च नमः सदा ।
सीता मे ऋध्यतां देवी बीजेषु च धनेषु च"

षण्डवाटगोपालकदासकर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात् ।

सपादपणिकं मासं दद्यात् ।

कर्मानुरूपं कारुभ्यो भक्तवेतनम् ।

प्रशीर्णं च पुष्पफलं देवकार्यार्थं व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाहरेयुः ।

राशी[2]मूलमुञ्छवृत्तयः ।

यथाकालं च सस्यादि जातं जातं प्रवेशयेत् ।
न क्षेत्रे स्थापयेत्किञ्चित्पलालमपि पण्डितः ॥
प्रकाराणां[3] समुच्छ्रायान् वलभीर्वा तथाविधाः ।
न संहतानि कुर्वीत न तुच्छानि शिरांसि च ॥
खलस्य प्रकरान्कुर्यान्मण्डलान्ते समाश्रितान् ।
अनग्निकास्सोदकाश्च खले स्युः परिकर्मिणः ॥

इत्यध्यक्षप्रचारे सीताध्यक्षः चतुर्विंशोऽध्यायः
आदितः पञ्चचत्वारिंशः.

---

1 "अमुं च मन्त्रं" इत्यादिः "भक्तवेतनं" इत्यन्तो ग्रन्थः व्याख्यात्रा न व्याख्यातः । 2 राशि. 3 प्रकारा; कुळुमाः इति व्या.

# ४२. प्रक. सुराध्यक्षः.

सुराध्यक्षस्सुराकिण्वव्यवहारान् दुर्गे जनपदे स्कन्धावारे 1471 वा तज्जातसुराकिण्वव्यवहारिभिः कारयेत् ।

एकमुखमनेकमुखं वा विक्रयक्रयवशेन वा षट्छतमत्ययमन्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्, ग्रामादनिर्णयनमसम्पातं च ।

सुरायाः प्रमादभयात्कर्मसु निर्दिष्टानां, मर्यादातिक्रमभयादार्याणां उत्साहभयाच्च तीक्ष्णानां लक्षितमल्पं वा चतुर्भागमर्धकुडुम्बं[1] कुडुम्बमर्धप्रस्थं वेदितज्ञात[2]शौचा निर्हरेयुः ।

पानागारेषु वा पिबेयुरसञ्चारिणः ।

निक्षेपोपनिधिप्रयोगापहृतादीनाम[3]निष्टोपगतानां च द्रव्याणां ज्ञानार्थमस्वामिकं कुप्यं हिरण्यं चोपलभ्य निक्षेप्तारमन्यत्र व्यपदेशेन ग्राहयेत् । अतिव्ययकर्तारमनायतिव्ययं च ।

न चानर्घेण कालिकां वा सुरां दद्यादन्यत्र दुष्टसुरायाः । तामन्यत्र विक्रापयेत् । दासकर्मकरेभ्यो वा वेतनं दद्यात् । वाहनप्रतिपानं सूकरपोषणं वा दद्यात् ।

पानागाराण्यनेककक्ष्याणि विभक्तशयनासनवान्ति पानोद्देशानि गन्धमाल्योदकवन्त्यृतुसुखानि कारयेत् ।

तत्रस्थाः प्रकृत्यौत्पत्तिकौ[4] व्ययौ गूढा विद्युरागन्तूंश्च ।

---

[1] डुब. [2] मर्धप्रस्थं प्रस्थं वेति ज्ञात. [3] हताना. [4] प्रकृतोत्पत्तिकौ, नित्यनैमित्तिकौ इति व्या.

148·2 क्रेतॄणां मत्तसुप्तानामलङ्काराच्छादनाहिरण्यानि च विद्युः । तन्नाशे वणिजस्तच्च तावच्च दण्डं दद्युः ।

वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः पेशलरूपाभिरागन्तूनामवास्त[1]व्यानां च आर्यरूपाणां मत्तसुप्तानां भावं विद्युः ।

मेदकप्रसन्नाऽऽसवारिष्टमैरेयमधूनां—उदकद्रोणं तण्डुलानामर्धाढकं त्रयः प्रस्थाः किण्वस्येति मेदकयोगः ।

द्वादशाढकं पिष्टस्य पञ्च प्रस्थाः किण्वस्य पुत्रकत्वक्फलयुक्तो वा जातिसम्भारः प्रसन्नायोगः ।

कपित्थतुला फाणितं पञ्चतौलिकं प्रस्थो मधुन इत्यासवयोगः । पादाधिको ज्येष्ठः पादहीनः कनिष्ठः ।

चिकित्सकप्रमाणाः प्रत्येकशो विकाराणामरिष्टाः ।

मेषशृङ्गि[2]त्वक्काथाभिषुतो गुडप्रतीवापःपिप्पलीमरिचसम्भारस्त्रिफलायुक्तो वा मैरेयः ।

गुडयुक्तानां वा सर्वेषां त्रिफलासम्भारः । मृद्वीकारसो 149·3 मधु । तस्य स्वदेशो व्याख्यानं कापिशायनं हारहूरकमिति ।

माषकलनीद्रोण[3]मामं सिद्धं वा त्रिभागाधिकतण्डुलं मोरटादीनां कार्षिकभागयुक्तः किण्वाब[4]न्धः ।

पाठालोध्रतेजोवत्येलावालुकमधुमधु[5]रसाप्रियङ्गुदारुहरिद्रामरि[6]चपिप्पलीनां च पञ्चकार्षिकः सम्भारयोगो मेदकस्य ।

---

[1] तूनां वास्त. [2] ङ्गी. [3] द्रौण. [4] किण्वब. [5] मधुकमधु. [6] मरी.

प्रसन्नायाश्च मधुकनिर्यूहयुक्ता कटश[1]र्करावर्णप्रसादिनी[2]च। 149·6

चोच[3]चित्रकविळङ्गगजपिप्पलीनां च कार्षिकः क्रमुकमधुकमुस्तालोध्राणां द्विकार्षिकश्चासवसम्भारः।

दशभागश्चैषां बीजबन्धः।

प्रसन्नायोगश्श्वेतसुरायाः।

सहकारसुरा रसो[4]त्तरा बीजोत्तरा वा महासुरा सम्भारिकी वा। तासां मोरटापलाशत्तुर[5] मेषशृङ्गीकरञ्जक्षीरवृक्षकषायभावितं दग्धकट[6]शर्कराचूर्णं लोध्रचित्रकविळङ्गपाठामुस्ताकळा[7] गयवदारुहरिद्रेन्दीवरशतपुष्पापामार्गसप्तपर्णनिम्बास्फोतकल्कार्धयुक्तमन्तर्नखो मुष्टिः कुम्भीं राजपेयां प्रसादयति। फाणितः पञ्चफालिकश्चात्र रसवृद्धिर्देयः।

कुटुम्बिनः कृत्येषु श्वेतसुरामौषधार्थं वारिष्टमन्यद्वा कर्तुं लभेरन्।

उत्सवसमाजयात्रासु चतुरहस्सौरिको देयः। तेष्वनुज्ञातानां[8] प्रहणान्तं[9] दैवसिकमत्ययं गृह्णीयात्।

सुराकिण्वविचयं स्त्रियो बालाश्च कुर्युः। अराजपण्याः 150·6 पञ्चकं शतं शुल्कं दद्युः। सुरकामेदकारिष्टमधुफलाम्लाम्लशीधूनां च—

> अह्नश्च विक्रयं व्याजीं ज्ञात्वा मानहिरण्ययोः।
> तथा वैधरणं कुर्यादुचितं चानुवर्तयेत्॥

इत्यध्यक्षप्रचारे सुराऽध्यक्षः पञ्चविंशोऽध्यायः

आदितष्षट्चत्वारिंशः.

---

1 कटमश. 2 दनी. 3 चोप. 4 सहकारसुधारसो. 5 पत्तूर इति व्याख्यायां च. 6 कटा. 7 कलिङ्गा. 8 ष्वननुज्ञानां. 9 प्रह्वणान्त.

## ४३ प्रक. सूनाध्यक्षः

सूनाध्यक्षः प्रदिष्टाभयानामभयवनवासिनां च मृगपशुपक्षि-
151·5 मत्स्यानां बन्धवधहिंसायामुत्तमं दण्डं कारयेत् । कुटुम्बिना-
मभयवनपरिग्रहेषु मध्यमम् ।

अप्रवृत्तवधानां मत्स्यपक्षिणां बन्धवधहिंसायां पादोनस
प्तविंशतिपणमत्ययं कुर्यात् । मृगपशूनां द्विगुणम् ।

प्रवृत्तहिंसानामपरिगृहीतानां षड्भागं गृह्णीयात् ।

मत्स्यपक्षिणां दशभागं वाधिकं मृगपशूनां शुल्कं वाधिकम् ।

पक्षिमृगाणां जीवत्षड्भागमभयवनेषु प्रमुञ्चेत् ।

सामुद्रहस्त्यश्वपुरुषवृषगर्दभाकृतयो मत्स्याः सारसा नादे-
यास्तटाककुल्योद्भवा वा । क्रौञ्चोत्क्रोशकदात्यूहहंसचक्रवाक-
जीवञ्जीवकभृङ्गराजचकोरमत्तकोकिलमयूरशुकमदनशारिका वि-
हारपक्षिणो मङ्गल्याश्चान्येपि प्राणिनः पक्षिमृगा हिंसाबाधे-
भ्यो रक्ष्याः । रक्षातिक्रमे पूर्वस्साहसदण्डः ।

मृगपशूनामनास्थिमांसं सद्योहतं विक्रीणीरन् । अस्थिमतः
प्रतिपातं[1] दद्युः । तुलाहीने हीनाष्टगुणम् ।

वत्सो वृषो धेनुश्चैषामवध्याः ।

152·8 घातः पञ्चाशत्को दण्डः । क्लिष्टघातं घातयतश्च ।

---

[1] प्रतिपाकं; प्रतिपातं याव मात्रमस्थि तावच्छुद्धं मांसमधिकं दद्युः इति व्याख्या.

परिसूनमशिरःपादास्थि विगन्धं स्वयंमृतं च न[1] विक्रीणी- 152·9
रम्। अन्यथा द्वादशपणो दण्डः।

दुष्टाः पशुमृगव्याळा मत्स्याश्चाभयचारिणः।
अन्यत्र गुप्तिस्थानेभ्यो वधबन्धमवाप्नुयुः॥

इत्यध्यक्षप्रचारे सूनाध्यक्षः षड्विंशोऽध्यायः
आदितस्सप्तचत्वारिंशः.

## ४४ प्रक. गणिकाऽध्यक्षः.

गणिकाध्यक्षः गणिकान्वयामगणिकान्वयां वा रूपयौवन 153·1
शिल्पसम्पन्नां सहस्रेण गणिकां कारयेत्।

कुटुम्बार्धेन प्रतिगणिकाम्।

निष्पतिता[2] प्रेतयोर्दुहिता भगिनी वा कुटु[3]म्बं भरेत[4]।

तन्माता[5] वा प्रतिगणिकां स्थापयेत्।

तासामभावे राजा हरेत्।

सौभाग्यालङ्कारवृद्ध्या सहस्रेण वारं[6] कनिष्ठं मध्यममुत्तमं वाऽऽरोपयेत्। छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थम्।

सौभाग्यभङ्गे मातृकां कुर्यात्।

निष्क्रयश्चतुर्विंशतिसाहस्रो गणिकायाः।

---

[1] नास्ति. [2] तिका. [3] टु. [4] भरेत तदीयतन्त्रं रिक्थं वा अधितिष्ठेत् इति व्याख्या. [5] माता. [6] नियोगं.

153·6 द्वादशसाहस्रो गणिकापुत्रस्य ।

अष्टवर्षात्प्रभृति राज्ञः कुशीलवकर्म ।

गणिका दासी भग्नभोगा कोष्ठागारे महानसे वा कर्म कुर्यात् ।

अविशन्ती सपादपणावरुद्धा मासवेतनं दद्यात् ।

भोगं दायमायव्ययमायतिं च गणिकायाः निबन्धयेत् । अतिव्ययकर्म च वारयेत् ।

मातृहस्तादन्यत्राभरणन्यासे सपादचतुष्पणो दण्डः ।

स्वापतेयं विक्रयमाधानं[1] नयन्त्याः सपादपञ्चाशत्पणो दण्डः ॥

चतुर्विंशतिपणो वाक्पारुष्ये ।

द्विगुणो दण्डपारुष्ये ।

सपादपञ्चाशत्पणः पणोऽर्धपणश्च कर्णच्छेदने ।

अकामायाः कुमार्या वा साहसे उत्तमो दण्डः । सकामायाः पूर्वः साहसदण्डः ।

गणिकामकामां रुन्धतो निष्पातयतो वा प्राणविदारणेन वा रूपमुपघ्नतः सहस्रं दण्डः । स्थानविशेषेण वा दण्डवृद्धिरानिष्क्रयद्विगुणात्पणसहस्रं वा दण्डः ।

प्राप्ताधिकारां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः ।

154·10 मातृकादुहितृकारूपदासीनां घात उत्तमस्साहसदण्डः ।

सर्वत्र प्रथमेऽपराधे प्रथमः; द्वितीये द्विगुणः; तृतीये त्रिगुणः; चतुर्थे यथाकामी स्यात् ।

[1] नं वा.

राजाज्ञया पुरुषमनाभिगच्छन्ती गणिका शिफासहस्रं लभेत; पञ्चसहस्रं वा दण्डः । 155'2

भोगं गृहीत्वा द्विषत्या भोगद्विगुणो दण्डः ।

वसति भोगापहारे भोगमष्टगुणं दद्यात् अन्यत्र व्याधिपुरुषदोषेभ्यः[1] ।

पुरुषं घ्नत्याश्चितामतापोऽप्सु प्रवेशनं वा ।

गणिकाऽऽभरणार्थं[2] भोगं वाऽपहरतोऽष्टगुणो दण्डः ।

गणिका भोगमायतिं पुरुषं च निवेदयेत् ।

एतेन नटनर्तकगायकवादकवाग्जीवनकुशीलवप्लवकसौभिकचारणानां स्त्रीव्यवहारिणां स्त्रियो गूढाजीवाश्च व्याख्याताः ।

तेषां तूर्यमागन्तुकं पञ्चपणं प्रेक्षावेतनं दद्यात् ।

रूपाजीवा भोगद्वयगुणं मासं दद्युः ।

गीतावाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसंपादनसंवाहनवैशिककलाज्ञानानि गणिका दासी रङ्गोपजीविनीश्च ग्राहयतो राजमण्डलादाजीवं कुर्यात् । गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान्निष्पादयेयुः सर्वताळावचाराणां[3] च । 155'11

संज्ञाभाषान्तरज्ञाश्च स्त्रियस्तेषामनात्मसु ।
चारघातप्रमादार्थं प्रयोज्या बन्धुवाहनाः ॥

इत्यध्यक्षप्रचारे गणिकाध्यक्षस्सप्तविंशोऽध्यायः
आदितोऽष्टचत्वारिंशः

---

[1] पुरुषेभ्यः. [2] भरणमर्थं. [3] तालापचारांश्च इति व्याख्यापाठः.

## ४५ प्रक. नावध्यक्षः.

156·5 नावध्यक्षस्समुद्रसंयाननदीमुखतरप्रचारान् देवसरोविसरोनदीतरांश्च स्थानीयादिष्ववेक्षेत ।

तद्वेलाकूलग्रामाः क्लृप्तं दद्युः ।

मत्स्यबन्धका नौकहाटकं षड्भागं दद्युः ।

पत्तनानुवृत्तं शुल्कभागं वणिजो दद्युः ।

यात्रावेतनं राजनौभिस्सम्पतन्तः ।

शङ्खमुक्ताग्राहिणो नौहाटकान्दद्युः स्वनौभिर्वा तरेयुः ।

अध्यक्षश्चैषां खन्यध्यक्षेण व्याख्यातः ।

पत्तनाध्यक्षनिबन्धं पण्यपत्तनचारित्रं नावध्यक्षः पालयेत् ।

मूढवाताहतां[1] तां पितेवानुगृह्णीयात् ।

उदकप्राप्तं पण्यमशुल्कमर्धशुल्कं वा कुर्यात्। तथा निर्दिष्टाश्चैताः[2] पण्यपत्तनयात्राकालेषु प्रेषयेत् ।

संयातीर्नावः क्षेत्रानुगताः शुल्कं याचेत। हिंस्रिका निर्घातयेत् । अमित्रविषयातिगाः पण्यपत्तनचारित्रोपघातिकाश्च ।

शासकनियामकदात्ररश्मिग्राहकोत्सेचकाधिष्ठिताश्च महानावो हेमन्तग्रीष्मतार्यासु महानदीषु प्रयोजयेत्। क्षुद्रकाः क्षुद्रिकासु वर्षास्राविणीषु ।

बद्धतीर्थाश्चैताः कार्याः राजद्विष्टकारिणां तरणभयात् ।

157·11 अकालेऽतीर्थे च तरतः पूर्वस्साहसदण्डः। काले तीर्थे च अनि

[1] हतानां. [2] यथानिर्दिष्टाश्चैताः.

स्पृष्टतारिणः पादोनसप्तविंशतिपणः तरात्ययः। कैवर्तकाष्ठतृणभा-157·12
रपुष्पफलवाटषण्डगोपालकानामनत्ययस्सम्भाव्यदूतानुपातिनां च
सेनाभाण्डप्रचारप्रयोगाणां च; स्वतरणैस्तरतां; बीजभक्तद्रव्यो-
पस्करांश्चानूपग्रामाणां तारयताम्।

ब्राह्मणप्रव्रजितबालवृद्धव्याधितशासनहरगर्भिण्यो नावध्य-
क्षमुद्राभिस्तरेयुः।

कृतप्रवेशाः पारविषयिकाः सार्थप्रमाणा वा वि[1]शेयुः।

परस्य भार्यां कन्यां वित्तं वाऽपहरन्तं शङ्कितमाविग्नमुद्भाण्डी-
कृतं महाभाण्डेन मूर्ध्नि भारेणावच्छादयन्तं सद्योगृहीतालिङ्गिनं
अलिङ्गिनं वा प्रव्र[2]जितमलक्ष्यव्याधितं भयविकारिणं गूढसारभा-
ण्डशासनशस्त्राग्नियोगं विषहस्तं दीर्घपथिकममुद्रं चोपग्राहयेत्।

क्षुद्रपशुर्मनुष्यश्च सभारो माषकं दद्यात्।
शिरोभारः कायभारो गवाश्वं च द्वौ।
उष्ट्रमाहिषं चतुरः। 159·1
पञ्च लघुयानम्।
षड् गोलिङ्गम्।
सप्त शकटम्।
पण्यभारः पादम्।
तेन भाण्डभारो व्याख्यातः।
द्विगुणो महानदीषु तरः।
क्लृप्तमानूपग्रामा भक्तवेतनं दद्युः।

[1] प्रवि. [2] प्रव्रा.

159'3 प्रत्यन्तेषु तराः शुल्कमातिवाहिकं वर्तनीं च गृह्णीयुः।
निर्गच्छतश्चामुद्रस्य[1] भाण्डं हरेयुः।

अतिभारेणा[2]वेलायामतीर्थे तरतश्च पुरुषोपकरणहीनायामसत्कृतायां[3] वा नावि विपन्नायां नावध्यक्षो नष्टं विनष्टं वाऽभ्याभवेत्।

सप्ताहवृत्तामाषाढीं कार्तिकीं चान्तरा तरः।
कार्मिकप्रत्ययं दद्यान्नित्यं चाह्निकमावहेत्॥

इत्यध्यक्षप्रचारे नावध्यक्ष अष्टाविंशोऽध्यायः
आदित एकोनपञ्चाशः



## ४६ प्रक. गोऽध्यक्षः.

गोऽध्यक्षो वेतनोपग्राहिकं करप्रतिकरं भग्नोत्सृष्टकं भागानुप्रविष्टकं व्रजपर्यग्रं नष्टं विनष्टं क्षीरघृत[4]सञ्जातं चोपलभेत।

गोपालकपिण्डारकदोहकमन्थकलुब्धकाः शतं शतं धेनूनां हिरण्यभृताः पालयेयुः। क्षीरघृतभृता हि वत्सानुपहन्युरिति वेतनोपग्राहिकम्।

जरद्गुधेनुगर्भिणीपष्ठौहीवत्सतरीणां समविभागं रूपशतमेकः पालयेत्। घृतस्याष्टौ वारकान् पणिकं पुच्छं अङ्कचर्म वार्षिकं[5] दद्यादिति करप्रतिकरः।

160'3 व्याधितान्यङ्गानन्यदोहीदुर्दोहापुत्रघ्नीनां च समविभागं रूपशतं पालयन्तस्तज्जातिकं भागं दद्युरिति भग्नोत्सृष्टकम्।

---

[1] मुद्रद्रव्यस्य. [2] रेण. [3] मसंस्कृतायां. [4] तं. [5] वाहीकं.

परचक्राटवीभयादनुप्रविष्टानां पशूनां पालनधर्मेण दशभागं 160·4
दद्युरिति भागानुप्रविष्टकम् ।

वत्सा वत्सतरा दम्या वहिनो वृषा उक्षाणश्च पुङ्गवाः युग-
वाहनशकटवहा वृषभास्सूना महिषाः पृष्ठस्कन्धवाहिनश्च महिषाः
वत्सिका वत्सतरी पष्ठौही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च
गावो महिष्यश्च मासद्विमासजातास्तासामुपजा वत्सा वत्सि-
काश्च । मासद्विमासजातान[1]ङ्कयेत् ।

मासद्विमासपर्युषितमङ्कयेत् । अङ्कं चिह्नं वर्णं शृङ्गान्तरं च
लक्षणमेवमुपजा निबन्धयेदिति व्रजपर्यग्रम् ।

चोरहृतमन्ययूथप्रविष्टमवलीनं वा नष्टम् ।

पङ्कविषमव्याधिजरातोयाधा[2]रावसन्नं वृक्षतटकाष्ठशिलाभिह-
तमीशानव्यालसर्पग्राहदावाग्निविपन्नं विनष्टं प्रमादादभ्याभवेयुः।

एवं रूपाग्रं विद्यात् ।

स्वयं हन्ता घात[3]यिता हर्ता हारयिता च वध्यः ।

परपशूनां राजाङ्केन परिवर्तयिता रूपस्य[4] पूर्वं साहसदण्डं
दद्यात् ।

स्वदेशीयानां चोरहृतं प्रत्यानीय पणितं [5] रूपं हरेत् ।

परदेशीयानां मोक्षयिताऽर्धं हरेत ।

बालवृद्धव्याधितानां गोपालकाः प्रतिकुर्युः । 161·7

---

[1] ता नाङ्कयेत्. [2] हा. [3] घाता. [4] रूपस्य एकैकस्य—व्या. [5] पणिकं.

161·8 लुब्धकश्वगणिभिरपास्तस्तेनव्याळपरबाधभयमृतुविभक्तमरण्यं चारयेयुः ।

सर्पव्याळत्रासनार्थं गोचरानुपातज्ञानार्थं च त्रस्नूनां घण्टातूर्यं च बध्नीयुः ।

समव्यूढतीर्थमकर्दमग्राहमुदकमवतारयेयुः पालयेयुश्च ।

स्तेनव्याळसर्पग्राहगृहीतं व्याधिजराऽवसन्नं च आवेदयेयुरन्यथा रूपमूल्यं भजेरन् ।

कारणमृतस्याङ्कचर्म गोमहिषस्य कर्णलक्षणमजाविकानां पुच्छमङ्कचर्म चाश्वखरोष्ट्राणां वालचर्मवस्तिपित्तस्नायुदन्तखुरशृङ्गास्थीनि चाहरेयुः ।

मांसमार्द्रं शुष्कं वा विक्रीणीयुः ।

उदश्वित् श्ववराहेभ्यो दद्युः ।

किञ्चित्कांस्येन भक्तार्थ[1] माहरेयुः ।

कीलाटो घाणपिण्याकक्लेदार्थः ।

पशुविक्रेता पादिकं रूपं दद्यात् ।

वर्षाशरद्धेमन्तानुभयतः कालं दुह्युः ।

शिशिरवसन्तग्रीष्मानेककालम् ।

द्वितीयकालदोग्धुरङ्गुष्ठच्छेदो दण्डः ।

दोहका[2]लमतिक्रामतस्तत्फलहानं दण्डः ।

162·7 एतेन नस्यदम्ययुगाविङ्गन[3] वर्तनकाला व्याख्याताः ।

---

[1] काञ्चिकां सेनाभक्तार्थं. [2] दोहनका. [3] पिङ्गनं, अंगापिंगनं दान्तेन सहादान्तस्य संयोजनम्. वर्तनं मेधिनीबन्धनभ्रमणं (व्या).

क्षीरद्रोणे गवां घृतप्रस्थः; पञ्चभागाधिको महिषीणां; द्वि-भागाधिकोऽजावीनां; मन्थो वा सर्वेषां प्रमाणं भूमितृणोदक-विशेषाद्धि क्षीरघृतवृद्धिर्भवति । 162·8

यूथवृषं वृषेणावपातयतः पूर्वः साहसदण्डः घातयत उत्तमः ।

वर्णावरोधेन दशतीरक्षा[1] ।

उपनिवेशादिग्विभागे[2] गोप्रचारान् बलान्वयते[3] वा गवां रक्षासामर्थ्याच्च ।

अजादीनां षाण्मासिकीमूर्णां ग्राहयेत् ।

तेनाश्वखरोष्ट्रवराहव्रजा व्याख्याताः ।

बलीवर्दानां नस्याश्व[4] भद्रगतिवाहिनां यवसस्यार्धभारः तृणस्य द्विगुणं; तुला घाण[5]पिण्याकस्य; दशाढकं कणकुण्डकस्य; पञ्चपलिकं मुखलवणं; तैलकुडुम्बो[6] नस्यं; प्रस्थः पानं; मांस-तुला; दध्नश्चाढकं; यवद्रोणं, माषाणां वा पुलाकः; क्षीरद्रोण-मर्धाढकं वा सुरायाः; स्नेहप्रस्थः; क्षारदशफलं; शृङ्गिबेरपलं च प्रतिपानम्। पादोनमश्वतरगोखराणां द्विगुणं महिषोष्ट्राणां कर्म-करबलीवर्दानां पायनार्थानां[7] च। धेनूनां कर्मकालतः फलतश्च विधादानम्। सर्वेषां तृणोदकप्रकाम्यमिति गोमण्डलं व्याख्यातम्। 163·10

पञ्चर्षभं खराश्वानामजावीनां दशर्षभम् ।
शक्यं गो[8]महिषोष्ट्राणां यूथं कुर्याच्चतुर्वृषम् ॥

इत्यध्यक्षप्रचारे गोऽध्यक्ष एकोनत्रिंशोऽध्यायः आदितः पञ्चाशः.

---

[1] दशतीरक्षा, दशवर्गाणां रक्षणं करणीयम्. [2] भागे. [3] यतो. [4] नस्याश्च. [5] तुलां पान. [6] बो. [7] पायनार्थे. [8] इत्थं (त्थं) गो.

## ४७ प्रक. अश्वाध्यक्षः.

164·3 अश्वाध्यक्षः पण्यागारिकं क्रयोपागतमाहवलब्धमाजातं साहाय्यकाग[1]तकं पणस्थितं यावत्कालिकं वाऽश्वपर्यग्रं कुलवयोवर्णचिह्नवर्गागमैर्लेखयेत्। अप्रशस्तन्यङ्गव्याधितांश्चावेदयेत्।

कोशकोष्ठागाराभ्यां च गृहीत्वा मासलाभमश्ववाहाश्चिन्तयेत्।

अश्वविभवेनायतामश्वायाम[2]द्विगुणविस्तारां चतुर्द्वारोपावर्तनमध्यां सप्रग्रीवां प्रद्वारासनफलकयुक्तां वानरमयूरपृषतनकुलचकोरशुकशारिकाभिराकी[3]र्णां शालां निवेशयेत्।

अश्वायामचतुरश्रश्लक्ष्णफलकास्तारं सखादनकोष्ठकं समूत्रपुरीषोत्सर्गमेकैकशः प्राङ्मुखमुदङ्मुखं वा स्थानं निवेशयेत्। शालावशेन वा दिग्विभागं कल्पयेत्। बडबावृषकिशोराणां एकान्तेषु।

बडबायाः प्रजातायास्त्रिरात्रं घृतप्रस्थ[4]पानं; अत ऊर्ध्वं सक्तुप्रस्थः स्नेहभैषज्यप्रतिपानं[5] दशरात्रं; ततः पुलाको यवसमार्तवश्चाहारः। दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः सक्तुकुडुम्बः।[6] क्षीरप्रस्थश्चाहार आषण्मासादिति। ततः परं मासोत्तरमर्धवृद्धिर्यवप्रस्थ आत्रिवर्षात्; द्रोण आचतुर्वर्षादिति; अत ऊर्ध्वं चतुर्वर्षः पञ्चवर्षो वा कर्मण्यः पूर्णप्रमाणः।

165·5 द्वात्रिंशदङ्गुलं मुखमुत्तमाश्वस्य, पञ्चमुखान्यायामः; विंशत्यङ्गुला

---

[1] क्याग. [2] यामां. [3] शारिकी. [4] प्रस्थः. [5] पादनं [6] बः.

जङ्घा, चतुर्जङ्घ उत्सेधः त्र्यङ्गुलावरं मध्यमावरयोः, शताङ्गुलः 165·6
परिणाहः, पञ्चभागावरं मध्यमावरयोः ।

उत्तमाश्वस्य द्विद्रोणं शालिव्रीहियवप्रियङ्गूणामर्धशुष्कमर्धसिद्धं वा मुद्गमाषाणां वा पुलाकः । स्नेहप्रस्थश्च पञ्चपलः लवणस्य मांसं पञ्चाशत्पलिकं रसस्याढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थः क्षारः पञ्चपालिकः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रतिपानं ; दीर्घपथभारक्लान्तानां च खादनार्थं स्नेहप्रस्थोऽनुवासनं कुडुम्बो[1] नस्यकर्मणः यवसस्यार्धभारः तृणस्य द्विगुणः षडरत्निः परिक्षेपः पुञ्जीलग्राहो वा ।

पादावरमेतन्मध्यमावरयोः। उत्तमसमो रथ्यो वृषश्च मध्यमः। मध्यमसमश्चावरः । पादहीनं बडबानां पारशमानां च ।

अतोऽर्धं किशोराणां च इति विधायोगः ।

विधापाचकसूत्रग्राहकचिकित्सकाः प्रतिस्वादभाजः । युद्ध-व्याधिजराकर्मक्षीणाः पिण्डगोचरिकाः स्युरसमरप्रयोग्याः[3] । पौरजानपदानामर्थेन वृषा बडबास्स्वायोज्याः ।

प्रयोग्यानामुत्तमाः काम्भोजकसैन्धवारट्टजवानायुजाः। मध्यमा बाह्लीकपापेयकसौवीरकतैतलाः । शेषाः प्रत्यवराः ।

तेषां तीक्ष्णभद्रमन्दवशेन सान्नाह्यमौपवाह्यकं वा कर्म प्रयोजयेत् । 166·12

[1] बो. [2] पुंजालग्राहे वा तृणस्य भुजद्वयपरिष्वंगग्राह्यः—व्या. [3] योज्याः.

167·1 चतुरश्रं कर्माश्वस्य सान्नाह्यम् ।

वल्गनो नीचैर्गतो लङ्घनो धोरणो नारोष्ट्रश्चौपवाह्याः[1] ।

तत्रोपवेणुको वर्धमानको यमक आलीढप्लुतः पृथगस्तृवचाली[2] च वल्गनः ।

स एव शिरःकर्णविशुद्धो नीचैर्गतः, षोडशमार्गो वा—प्रकीर्णकः प्रकीर्णोत्तरो निषण्णः पार्श्वानुवृत्त ऊर्मिमार्गः शरभक्रीडितश्शरभप्लुतः त्रितालो बाह्यानुवृत्तः पञ्चपाणिस्सिंहायतस्स्वाधूतः क्लिष्टः श्लाघितो[3] बृंहितः पुष्पाभिकीर्णश्चेति नीचैर्गत[4]मार्गाः ।

कपिप्लुतो भेकप्लुत एकप्लुत एकपादप्लुतः कोकिलसंचार्युरस्यो बकचारी च लङ्घनः ।

काङ्को वारिकाङ्को मयूरोऽर्धमयूरो नाकुलोऽर्धनाकुलो वाराहोऽर्धवाराहश्चेति धोरणः ।

संज्ञाप्रतिकारो नारोष्ट्र इति ।

षण्णव द्वादशेति योजनान्यध्वा[5] रथ्यनां पञ्चयोजनान्यध्वा[5]ष्टमानि दशेति पृष्ठवाह्याना[6]मश्वानामध्वा ।

विक्रमो भद्राश्वासो भारवाह्य इति मार्गाः ।

विक्रमो वल्गितमुपकण्ठमुपजवो जवश्च धाराः ।

168·10 तेषां बन्धनोपकरणं योग्याचार्याः प्रतिदिशेयुः । साङ्ग्रामिकं रथाश्वालङ्कारं च सूताः । अश्वानां चिकित्सकाः शरीरह्रासवृद्धिप्रतीकारमृतुविभक्तं चाहारम् ।

---

1 ह्या. 2 पृथगस्तूपचाली; वृथाद्यः पूर्वार्धवल्गनः, त्रिवचाली पश्चार्धवल्गनः—व्या.
3 क्लिङ्गितो 4 गंति. 5 जनान्यच्चाध्वा. 6 वाहिना.

सूत्रग्राहकाश्वबन्धकयावसिकविधापाचकस्थानपालकेशकार- 168·11
जाङ्गलीविदश्च स्वकर्मभिरश्वानाराधयेयुः ।

कर्मातिक्रमे चैषां दिवसवेतनच्छेदनं कुर्यात्। नीराजनोप-
रुद्धं वाहयतश्चिकित्सकोपरुद्धं वा द्वादशपणो दण्डः। क्रिया-
भैषज्यसङ्गेन व्याधिवृद्धौ प्रतीकाराद्द्विगुणो दण्डः । तदवरोधेन[1]
वैलोम्ये पत्रमूल्यं दण्डः ।

तेन गोमण्डलं खरोष्ट्रमहिषमजाविकं च व्याख्यातम् ।

द्विरह्नस्स्नानमश्वानां गन्धमाल्यं च दापयेत् ।
कृष्णसन्धिषु भूतेज्याः शुक्लेषु स्वस्तिवाचनम् ॥
नीराजनामाश्वयुजे कारयेन्नवमेऽहनि ।
यात्रादाववसा[2]ने वा व्याधौ वा शान्तिके रतः ॥

इत्यध्यक्षप्रचारे अश्वाध्यक्षः त्रिंशोऽध्यायः
आदित एकपञ्चाशः.

## ४८ प्रक. हस्त्यध्यक्षः.

हस्त्यध्यक्षो हस्तिवनरक्षां दम्यकर्मशान्तानां हस्तिहस्तिनीकल 169·6
भानां शालास्थानशय्याकर्मविधायवसप्रमाणं कर्मस्वायोगं बन्ध-
नोपकरणं साङ्ग्रामिकमलङ्कारं चिकित्सकानीकस्थौपकस्यायुक्त-
वर्गं चानुतिष्ठेत् ।

1 तदपरोधेन. 2 सा.

170·1 हस्त्यायामद्विगुणोत्सेधविष्कम्भायामां हस्तिनीस्थानाधिकां समग्रीवां कुमारीसङ्गृहां प्राङ्मुखीमुदङ्मुखीं वा शालां निवेशयेत् ।

हस्त्यायामचतुरश्रश्लक्ष्णालानस्तम्भफलकान्तरकं मूत्रपुरीषोत्सर्गस्थानं निवेशयेत् ।

स्थानसम[1]शय्यामर्धापाश्रयां दुर्गे सान्नाह्योपवाह्यानां बहिर्दम्यव्याळानां ।

प्रथमसप्तमावष्टमभागावह्नस्स्नानकालौ, तदनन्तरं विधायाः, पूर्वाह्णे व्यायामकालः, पश्चाह्नः प्रतिपान[2]कालः । रात्रिभागौ द्वौ स्वप्नकालौ, त्रिभागस्संवेशनोत्थानिकः ग्रीष्मे ग्रहणकालः ।

विंशतिवर्षो ग्राह्यः ।

विक्को[3] मूढो[4] मत्कुणो[5] व्याधितो गर्भिणी धेनुका हास्तिनी चाग्राह्याः ।

सप्तारत्निरुत्सेधो नवायामो दश परिणाहः ।

प्रमाणतश्चत्वारिंशद्वर्षो भवत्युत्तमः ।

त्रिंशद्वर्षो मध्यमः ।

पञ्चविंशतिवर्षोऽवरः ।

तयोः पादावरो विधाविधिः ।

171·2 अरत्नौ तण्डुलद्रोणः, अर्धाढकं तैलस्य, सर्पिषस्त्रयः प्रस्थाः, दशपलं लवणस्य, मांसं पञ्चाशत्पलिकं, रसस्याढकं द्विगुणं वा

[1] समां. [2] पादन. [3] बिक्कः. [4] मूढो = हस्तिनीतुल्यदन्तः.
[5] मक्कणो. पा—मकूणो निर्दन्तः—व्या.

दध्नः पिण्डक्लेदनार्थं क्षारं दशपालिकं मद्यस्य आढकं द्विगुणं वा 171·2
पयसः प्रतिपानं गात्रावसेकस्तैलप्रस्थः शिरसोऽष्टभागः प्रादी-
पिकश्च, यवसस्य द्वौ भारौ सपादौ शष्पस्य शुष्कास्यर्धतृतीयो
भारः कडङ्करस्यानियमः ।

सप्तारत्निना तुल्यभोजनोऽष्टारत्निरत्यरालः ।
यथाहस्तमवशेषः षडरत्निः पञ्चारत्निश्च ।
क्षीरयावसिको विक्कः क्रीडार्थं ग्राह्यः ।

सञ्जातलोहिता प्रतिछन्ना संलिप्तपक्षा समकक्ष्याऽव्यति[1]कीर्ण-
मांसा समतल्पतला जातद्रोणिकेति शोभाः ।

शोभावशेन व्यायामं भद्रं मन्द्रं[2] च कारयेत् ।
मृगसङ्कीर्णलिङ्गं च कर्मस्वृतुवशेन वा ॥

इत्यध्यक्षप्रचारे हस्त्यध्यक्ष एकत्रिंशोऽध्यायः
आदितो द्विपञ्चाशः.

---

## हस्त्यध्यक्षे हस्तिप्रचारः.

---

कर्मस्कन्धाः चत्वारः दम्यस्सान्नाह्य औपवाह्यो व्याळश्च ।

तत्र दम्यः पञ्चविधः—स्कन्धगतः स्तम्भगतो वारिगतोऽप-
पातगतो[3] यूथगतश्चेति । तस्योपविचारो विक्ककर्म । 172·3

---

[1] व्याति. [2] मन्दं. [3] ऽवपातगतो ; अपपातगतो गर्तगतः—इति व्या.

172·4 सान्नाह्यस्सप्तक्रियापथः—उपस्थानं संवर्तनं संयानं वधावधो हस्तियुद्धं नागरायणं साङ्ग्रामिकं च। तस्योपविचारः कक्ष्याकर्म ग्रैवेयकर्म यूथकर्म च।

औपवाह्योऽष्टविधः—आचरणः,[1] कुञ्जरौपवाह्यः, धोरणः, आधानगतिकः, यष्ट्युपवाह्यः, तोत्रोपवाह्यः, शुद्धोपवाह्यः, मार्गायुकश्चेति। तस्योपविचारः शारदकर्म हीनकर्म नारोष्ट्रकर्म च।

व्याळ एकक्रियापथः। तस्योपविचार आयम्यैकरक्षः कर्मशङ्कितोऽवरुद्धो विषमः प्रभिन्नः प्रभिन्नविनिश्चयो मदहेतुविनिश्चयश्च।

क्रियाविपन्नो व्याळः।

शुद्धस्सुव्रतो विषमः सर्वदोषप्रदुष्टश्च।

तेषां बन्धनोपकरणमनीकस्थप्रमाणं आलानग्रैवेयकक्ष्यापारायणपरिक्षेपोत्तरादिकं बन्धनं; अङ्कुशवणुयन्त्रादिकमुपकरणं; वैजयन्तीक्षुरप्रमालास्तरणकुथादिकं भूषणं; वर्मतोमरशरावापयन्त्रादिकस्साङ्ग्रामिकालङ्कारः।

चिकित्सकानीकस्थारोहकाधोरणहस्तिपकौपचारिकविधापाचकयावसिकपादपाशिककुटीरक्षकौपशायिकादिरौपस्थायिकवर्गः।

173·10 चिकित्सककुटीरक्षविधापाचकाः प्रस्थौदनं स्नेहप्रसृतिं[2] क्षारलवणयोश्च द्विपलिकं हरेयुः। दशपलं मांसस्यान्यत्र चिकित्सकेभ्यः।

---

[1] रणाः. [2] सृतं.

पथि व्याधिकर्ममदजराऽभितप्तानां चिकित्सकाः प्रतिकुर्युः । 174·3

स्थानस्याशुद्धिर्यवसस्याग्रहणं स्थले शायनमभागे घातः पराऽऽरोहणमकाले यानमभूमावतीर्थेऽवतारणं तरुषण्ड इत्यत्ययस्थानानि । तमेषां भक्तवेतनादाददीत ॥

तिस्रो नीराजनाः कार्याश्चातुर्मास्यर्तुसन्धिषु ।
भूतानां कृष्णसन्धीज्यास्सेनान्यः शुक्लसन्धिषु ॥
दन्तमूलपरीणाहद्विगुणं प्रोत्स्य[1] कल्पयेत् ।
अब्दे द्व्यर्धे नदीजानां पञ्चाब्दे पर्वतौकसाम् ॥

इत्यध्यक्षप्रचारे हस्तिप्रचारे द्वात्रिंशोऽध्यायः
आदितः त्रिपञ्चाशः.

## ४९–५१ प्रक. रथाध्यक्षः. पत्त्यध्यक्षः सेनापतिप्रचारः.

अश्वाध्यक्षेण रथाध्यक्षो व्याख्यातः ।

स रथकर्मान्तान् कारयेत् ।

दशपुरुषो द्वादशान्तरो रथः ।

तस्मादेकान्तरावरा आषडन्तरादिति सप्त रथाः ।

देवरथपुष्यरथसाङ्ग्रामिकपारियाणिकपरपुराभियानिकवैनयिकांश्च रथान् कारयेत् । 175·3

1 प्रोज्झ्य.

175·4 इष्वस्त्रप्रहरणावरणोपकरणकल्पनास्सारथिरथिकरथ्यानां च कर्मस्वायोगं विद्यात्। आकर्मभ्यश्च भक्तवेतनं भृतानामभृतानां च योग्यर[1]क्षानुष्ठानमध्व[2] मानकर्म च।

एतेन पत्त्यध्यक्षो व्याख्यातः। स[3]मौलभृतश्रेणिमित्रामित्राटवीबलानां सारफल्गुतां विद्यात्[3]। निम्नस्थलप्रकाशकूटखनकाकाशदिवारात्रियुद्धव्यायामं च विद्यात्। आयोगमयोगं च कर्मसु।

तदेव सेनापतिस्सर्वयुद्धप्रहरणविद्याविनीतो हस्त्यश्वरथचर्यासम्पुष्टश्चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानं विद्यात्। स्वभूमिं युद्धकालं प्रत्यनीकमभिन्नभेदनं भिन्नसन्धानं संहतभेदनं भिन्नवधं दुर्गवधं यात्राकालं च पश्येत्।

तूर्यध्वजपताकाभिर्व्यूहसंज्ञाः प्रकल्पयेत्।
स्थाने याने प्रहरणे सैन्यानां विनये रतः॥

इत्यध्यक्षप्रचारे रथाध्यक्षः पत्त्यध्यक्षः सेनापतिप्रचारश्च
त्रयस्त्रिंशोऽध्यायः आदितः चतुष्पञ्चाशः

## ५२–५३ प्रक. मुद्राऽध्यक्षः विवीताध्यक्षः.

मुद्राऽध्यक्षो मुद्रां माषकेण दद्यात्।

176·7 समुद्रो जनपदं प्रवेष्टुं निष्क्रामितुं वा लभेत।

[1] योग्यार. [2] मर्थ. [3] नास्ति.

द्वादशपणममुद्रो जानपदो दद्यात् । 177·1

कूटमुद्रायां पूर्वस्साहसदण्डः ।

तिरोजनपदस्योत्तमः ।

विवीताध्यक्षो मुद्रां पश्येत् ।

भयान्तरेषु च विवीतं स्थापयेत् । चोरव्याळभयान्निम्नारण्यानि शोधयेत् ।

अनु[1]दके कूपसेतुबन्धोत्सान् स्थापयेत्, पुष्पफलवाटांश्च ।

लुब्धकश्वगणिनः परिव्रजेयुररण्यानि ।

तस्करामित्राभ्यागमे शङ्खदुन्दुभिशब्दमग्राह्याः कुर्युः । शैलवृक्ष[2]विरूढा वा, शीघ्रवाहना वा अमित्राटवीसञ्चारं च राज्ञो गृहकपोतैर्मुद्रायुक्तैर्हारयेयुः[3] धूमाग्निपरंपरया वा ।

द्रव्यहस्तिवनाजीवं वर्तिनीं चोररक्षणम् ।

सार्थातिवाह्यं गोरक्ष्यं व्यवहारं च कारयेत् ॥

इत्यध्यक्षप्रचारे मुद्राऽध्यक्षो विवीताध्यक्षः चतुस्त्रिंशोऽध्यायः

आदितः पञ्चपञ्चाशः.

## ५४–५५ प्रक. समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयः.

समाहर्ता चतुर्धा जनपदं विभज्य, ज्येष्ठमध्यमकनिष्ठविभा- 178·1

[1] अनू. [2] वृक्षा. [3] येत्.

178·1 गेन ग्रामाग्रं परिहारकमायुधीयं धान्यपशुहिरण्यकुप्यविष्टि(कर) प्रतिकरमिदमेतावदिति निबन्धयेत् ।

तत्प्रदिष्टः पञ्चग्रामीं दशग्रामीं वा गोपश्चिन्तयेत् ।

सीमावरोधेन ग्रामाग्रं कृष्टाकृष्टस्थलकेदारारामषण्डवाटवनवास्तुचैत्यदेवगृहसेतुबन्धश्मशानसत्रप्रपापुण्यस्थानविवीतपथिसङ्ख्यानेन क्षेत्राग्रं; तेन सीम्नां क्षेत्राणां च मर्यादारण्यपथिप्रमाणसम्प्रदानविक्रयानुग्रहपरिहारनिबन्धान् कारयेत् । गृहाणां च करदाकरदसङ्ख्यानेन ।

तेषु चैतावच्चातुर्वर्ण्यमेतावन्तः कर्षकगोरक्षकवैदेहककारुकर्मकरदासाश्चैतावच्च द्विपदचतुष्पदमिदं चैष हिरण्यविष्टिशुल्कदण्ड[1]स्समुत्तिष्ठतीति ।

कलानां[2] च स्त्रीपुरुषाणां बालवृद्धकर्मचरित्राजीवव्ययपरिमाणं विद्यात ।

एवं च जनपदचतुर्भागं स्थानिकः चिन्तयेत् ।

गोपस्थानिकस्थानेषु प्रदेष्टारः कार्यकरणं बलिप्रग्रहं च कुर्युः।

समाहर्तृप्रदिष्टाश्च गृहपतिकव्यञ्जना येषु ग्रामेषु प्रणिहितास्तेषां ग्रामाणां क्षेत्रगृहकुलाग्रं विद्युः । मानसञ्जाताभ्यां क्षेत्राणि भोगपरिहाराभ्यां गृहाणि वर्णकर्मभ्यां कुलानि च । तेषां 179·7 जङ्घाग्रामायव्ययौ च विद्युः । प्रस्थितागतानां च प्रवासावासकारणमनर्थ्यानां च स्त्रीपुरुषाणां चारप्रचारं च विद्युः ।

---

[1] भाण्ड. [2] कुलानां.

एवं वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां खनिसेतु- 179·8
वनकर्मान्तक्षेत्रजानां परिमाणमर्घं च विद्युः ।

परभूमिजातानां वारिस्थलपथोपयातानां सारफल्गुपण्यानां कर्मसु च शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभागभक्तपण्यागार-प्रमाणं विद्युः ।

एवं समाहर्तृप्रदिष्टास्तापसव्यञ्जनाः कर्षक[1]गोरक्षकवैदेहका-नामध्यक्षाणां च शौचाशौचं विद्युः ।

पुराणचोरव्यञ्जनाश्चान्तेवासिनश्चैत्यचतुष्पथशून्या[2]पदोदपान-नदीनिपानतीर्थायतनाश्रमारण्यशैलवनगहनेषु स्तेनामित्रप्रवीरपु-रुषाणां च प्रवेशनस्थानगमनप्रयोजनान्युपलभेरन् ।

समाहर्ता जनपदं चिन्तयेदेवमुत्थितः ।
चिन्तयेयुश्च संस्थास्तास्संस्थाश्चान्यास्स्वयोनयः ॥

इत्यध्यक्षप्रचारे समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्य-ञ्जनप्रणिधयश्च पञ्चत्रिंशोऽध्यायः.

आदितष्षट्पञ्चाशः.

## ५६ प्रक. नागरकप्रणिधिः.

समाहर्तृवन्नागरको नगरं चिन्तयेत् । दशकुलीं गोपो, विंश- 180·6
तिकुलीं चत्वारिंशत्कुलीं वा ।

[1] कर्मक. [2] शून्य.

181·1 स तस्यां स्त्रीपुरुषाणां जातिगोत्रनामकर्मभिः जङ्घाग्रमायव्ययौ च विद्यात् ।

एवं दुर्गचतुर्भागं स्थानिकश्चिन्तयेत् ।

धर्मावसथिनः पाषण्डिपाथिकानावेद्य वासयेयुः ।

स्वप्रत्ययाश्च तपस्विनश्श्रोत्रियांश्च कारुशिल्पिनस्स्वकर्मस्थानेषु स्वजनं वासयेयुः ।

वैदेहकाश्चान्योन्यं स्वकर्मस्थानेषु पण्यानामदेश[1]कालविक्रेतारमस्वकरणं च निवेदयेयुः ।

शौण्डिकपाकमांसिकौदनिकरूपाजीवाः परिज्ञातमावासयेयुः । अतिव्ययकर्तारमत्याहितकर्माणं च निवेदयेयुः ।

चिकित्सकः प्रच्छन्नव्रणप्रतीकारकारयितारमपथ्यकारिणं च गृहस्वामी च निवेद्य (गोपस्था निवेद्य)[2] गोपस्थानिकयोर्मुच्येतान्यथा तुल्यदोषस्स्यात् ।

प्रस्थितागतौ च निवेदयेत् । अन्यथा रात्रिदोषं भजेत् । क्षेमरात्रिषु त्रिपणं दद्यात् ।

पथिकोत्पथिकाश्च बहिरन्तश्च नगरस्य देवगृहपुण्यस्थानवनश्मशानेषु सव्रणमनिष्टोपकरणमुद्भाण्डीकृतमाविग्नमतिस्वप्नमध्वक्लान्तमपूर्वं वा गृह्णीयुः ।

182·3 एवमभ्यन्तरे शून्यनिवेशावेशनशौण्डिकौदनिकपाकमांसिकद्यूतपाषण्डावासेषु विचयं[3] कुर्युः ।

---

1 पण्यानांदेश. 2 नास्ति. 3 विचयं च.

अग्निप्रतीकारं च ग्रीष्मे । मध्यमयोरह्नश्चतुर्भागयोः अष्टभागोऽग्निदण्डः । बहिरधिश्रयणं वा कुर्युः । 182·4

पादः पञ्चघटीनां कुम्भद्रोणी[1]निश्रेणीपरशुशूर्पाङ्कुशकचग्रहणीदृतीनां च अकरणे ।

तृणकटच्छन्नान्यपनयेत् ।

अग्निजीविन एकस्थान् वासयेत् ।

स्वगृहप्रद्वारेषु गृहस्वामिनो वसेयुः । असंपातिनो रात्रौ रथ्यासु कटव्रजास्सहस्रं तिष्ठेयुः । चतुष्पथद्वारे राज[2]परिग्रहेषु च ।

प्रदीप्तमनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः । षट्पणो विक्रयिणः । प्रमादाद्दीप्तेषु चतुष्पञ्चाशत्पणो दण्डः ।

प्रदीपिकोऽग्निना वध्यः ।

पांसुन्यासे रथ्यायामष्टभागो दण्डः ।

पङ्कोदकसन्निरोधे पादः । राजमार्गे द्विगुणः ।

पुण्यस्थानोदकस्थानदेवगृहराजपरिग्रहेषु पणोत्तरा विष्ठादण्डाः मूत्रेष्वर्धदण्डाः ।

भैषज्यव्याधिभयनिमित्तमदण्ड्याः ।

मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः । खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः । मनुष्यप्रेतानां पञ्चाशत्पणः

मार्गविपर्यासे शवद्वारादन्यतश्शवानि[3]र्णयने पूर्वस्साहसदण्डः ।

द्वास्थानां द्विशतम् ।

श्मशानादन्यत्र न्यासे दहने च द्वादशपणो दण्डः । 183·9

[1] श्रेणि. [2] द्वारराज. [3]न्यतश्च नि.

184·1 त्रिषण्णाळिकमुभयतोरात्रं यामतूर्यं; तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनम्[1]। प्रथमपश्चिमयामिकं मध्यमयामिकं द्विगुणं बहिश्चतुर्गुणम्।

शङ्कनीये देशे[2] पूर्वापदाने च गृहीतमनुयुञ्जीत।

राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमस्साहसदण्डः।

सूतिकाचिकित्सकप्रेतप्रदीपयान[3]नागरकतूर्यप्रेक्षाग्निनिमित्तमु[4]द्राभिश्चाग्राह्याः।

चाररात्रिषु प्रच्छन्नविपरीतवेषाः प्रव्राजिता दण्डशस्त्रहस्ता[5]श्च मनुष्या दोषतो दण्ड्याः।

रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः।

स्त्रियं दासीमधिमेहयतां पूर्वस्साहसदण्डः। अदासीं मध्यमः कृतापराधा[6]मुत्तमः। कुलस्त्रियं वधः।

चेतनाचेतनिकं रात्रिदोषमशंसतो नागर[7]कस्य दोषानुरूपो दण्डः। प्रमादस्थाने च।

नित्यमुदकस्थानमार्गभूमि[8]च्छन्नपथवप्रप्राकाररक्षावेक्षणं नष्टप्रस्मृतापसृतानां च रक्षणम्।

बन्धनागारे च बालवृद्धव्याधितानाथानां च[9] जातनक्षत्र-
185·5 पौर्णमासीषु विसर्गः। पुण्यशीलास्समयानुबद्धा वा दोषनिष्क्रयं दद्युः।

---

[1] तालनम्. [2] देशे लिङ्गे. [3] दीपयान. [4] मित्तं मु. [5] हताश्च. [6] वरोधा. [7] रि. [8] भ्रम. [9] नास्ति.

दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत् । 185·6

कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥

अपूर्वदेशाधिगमे युवराजाभिषेचने ।

पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे नागरकप्रणिधिः

षट्त्रिंशोऽध्यायः आदितस्सप्तपञ्चाशः

एतावता कौटिलीयस्यार्थशास्त्रस्य अध्यक्षप्रचारो

द्वितीयमधिकरणं समाप्तम्.

---

# ३. अधि. धर्मस्थीयम्.

## ५७–५८ प्रक. व्यवहारस्थापना विवादपदनिबन्धः.

---

धर्मस्थास्त्रयस्त्रयोऽमात्या जनपदसन्धिसङ्ग्रह[1]द्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ।

तिरोहितान्तरगारनक्तारण्योपध्युपह्वरकृतांश्च व्यवहारान् प्रतिषेधयेयुः । कर्तुः कारयितुश्च पूर्वस्साहसदण्डः । श्रोतॄणामेकैकं प्रत्यर्धदण्डाः । श्रद्धेयानां तु द्रव्यव्यपनयः ।

परोक्षेणाधिकर्णग्रहणमवक्तव्यकरा[2]वा तिरोहितास्सिद्ध्येयुः । 187·4

दायनिक्षेपोपनिधिविवाहयुक्ताः स्त्रीणामनिष्कासिनीनां व्या-

---

[1] जनपदसंग्रह. [2] तरा.

188·1 धितानां चामूढ[1]संज्ञानामन्तरगारकृतास्सिद्ध्येयुः ।

साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृतास्सिद्ध्येयुः ।

सार्थव्रजाश्रमव्याधचाराणां म[2]ध्येष्वरण्यचराणामरण्यकृतास्सिद्ध्येयुः ।

गूढाजीविषु चोपधिकृतास्सिद्ध्येयुः ।

मिथस्समवाये चोपह्वरकृताः सिध्येयुः । अतोऽन्यथा न सिद्ध्येयुः ।

अपाश्रयवद्भिश्च कृताः, पितृमाता[3] पुत्रेण[4] पिता,[5] पुत्रवता निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन, पतिमता पुत्रवत्या च स्त्रिया, दासाहितकाभ्यां, अप्राप्तातीतव्यवहाराभ्यां, अभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्चान्यत्र निसृष्टव्यवहारेभ्यः ।

तत्रापि क्रुद्धेनार्तेन मत्तेनोन्मत्तेनाप[6]गृहीतेन वा कृता व्यवहारा न सिद्ध्येयुः । कर्तृकारयितृश्रोतॄणां पृथग्यथोक्ता दण्डाः । स्वे स्वे तु वर्गे देशे काले च स्वकरणकृतास्संपूर्णचाराश्शुद्धदेशा दृष्टरूपलक्षणप्रमाणगुणास्सर्वव्यवहारास्सिद्ध्येयुः । पश्चिमं त्वेषां[7] करणमादेशाधिवर्जं श्रद्धेयुः[8] ।

189·2 इति व्यवहारस्थापना ।

---

[1] च मूढ. [2] चारणम. [3] 'ितृमता' पाठस्सुनेयः. [4] परतो व्यवहाराज्ञः स्वतन्त्रः पितराव्रृते । जीवतोर्न स्वतन्त्रस्स्याजरयाऽपि समन्वितः ॥ कात्यायनो माधवीयव्यवहारकाण्डे. [5] 'पित्रा' इति सुपठः. [6] व. [7] चैषां. [8] श्रद्धेयम्.

संवत्सरमृतुं मासं पक्षं दिवसं करणमधिकरणमृणं वेदकावेदकयोः कृतसमर्थावस्थयोर्देशग्रामजातिगोत्रनामकर्माणि चाभिलिख्य वादिप्रतिवादिप्रश्नानर्थानुपूर्व्यान्नि[1]वेशयेत् । निविष्टांश्चावेक्षेत । 189·3

निबद्धं पादमुत्सृज्यान्यं पादं सङ्क्रामति; पूर्वोक्तं पश्चिमेनार्थेन नाभिसंबध्यते[2] । परवाक्यमनभिग्राह्यमभिग्राह्यावतिष्ठते । प्रतिज्ञाय देशं "निर्दिश" इत्युक्ते न निर्दिशति[3] । निर्दिष्टोद्देशादन्य[4]देशमुपस्थापयति । उपस्थिते देशेऽर्थवचनं "नैवम्" इत्यपव्ययते । साक्षिभिरवधृतं नेच्छति । असम्भाष्ये देशे साक्षिभिर्मिथस्सम्भाषते ।

इति परोक्तहेतवः ।

परोक्तदण्डः पञ्चबन्धः । स्वयंवादिदण्डो दशबन्धः । पुरुषभृतिरष्टाङ्गः । पथि भक्तमर्थविशेषतः । तदुभयं नियम्यो दद्यात् ।

अभियुक्तो न प्रत्यभियुञ्जीत अन्यत्र कलहसाहससार्थसमवायेभ्यः । न चाभियुक्तेऽभियोगोऽस्ति । अभियोक्ता चेत् प्रत्युक्तस्तदहरेव न प्रति ब्रूयात्, परोक्तस्स्यात् । कृतकार्यविनिश्चयो ह्यभिनियोक्ता[5], नाभियुक्तः । तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति । अत ऊर्ध्वं त्रिपणावरार्ध्यं द्वादशपणपरं दण्डं कुर्यात् । त्रिपक्षादूर्ध्वम[6]प्रतिब्रुवतः परोक्तदण्डं कृत्वा यान्यस्य द्रव्याणि स्युस्ततोऽभियोक्तारं प्रतिपादयेदन्यत्र प्रत्युपकरणेभ्यः । तदेव निष्पततोऽभियुक्तस्य कुर्यात् । अभियोक्तुर्नि[7]ष्पातसमकालः परोक्त- 190·5

[1] पूर्व्यानि. [2] नाभिसन्धत्ते. [3] हीनदेशमदेशं वा निर्दिशति. [4] न्यं. [5] भियोक्ता. [6] दूर्ध्वं प्र. [7] क्तं नि.

190·6 भावः । प्रेतस्य व्यसनिनो वा साक्षिवचनाः सारमभियोक्ता[1] दण्डं दत्वा कर्म कारयेत्; आधिं वा सकामं[2] प्रवेशयेत् । रक्षो घ्नरक्षितं वा कर्मणा प्रतिपादयेत् अन्यत्र ब्राह्मणादिति ।

चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात् ।
नश्यतां सर्वधर्माणां राजा ध[3]र्मप्रवर्तकः ॥
धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः ॥
अत्र[4] सत्य[5]स्थितो धर्मो व्यवहारस्तु[6] साक्षिषु ।
चरित्रं सङ्ग्रहे पुंसां राज्ञामाज्ञा तु शासनम् ॥
राज्ञः स्वधर्मस्स्वर्गाय प्रजा धर्मेण रक्षितुः ।
अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥
दण्डो हि केवलो लोकं परं चेमं च रक्षति ।
राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥
अनुशासद्धि धर्मेण व्यवहारेण संस्थया ।
न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥
संस्थाया[7] धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत्[8] ॥

91·9 शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् ।
न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति[9] ॥

---

[1] साभियोक्ता; साक्षिवचनमसारमभियोक्तारं इति पाठस्साधुरिति भाति ।
[2] अधिवासकामं. [3] राज. [4] तत्र. [5] सत्ये. [6] रोस्तु.
[7] स्थाया. [8] निर्णयेत्. [9] अथशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः.

दृष्टदोषस्स्वयंवादः स्वपक्षापरपक्षगोः । 192·2
अनुयोगार्जवं हेतुश्शपथश्चार्थसाधकः ॥
पूर्वोत्तरार्थव्याघाते साक्षिवक्तव्यकारणे ।
चारहस्ताच्च निष्पाते[1] प्रदेष्टव्यः पराजयः ॥

इति धर्मस्थीये तृतीयाधिकरणे विवादपदनिबन्धः
प्रथमोऽध्यायः आदितोष्टपञ्चाशः.



## ५९. प्रक. विवाहसंयुक्ते विवाहधर्मः स्त्रीधनकल्प आधिवेदनिकम्.

विवाहपूर्वो व्यवहारः ।
कन्यादानं कन्यामलंकृत्य ब्राह्मो विवाहः ।
सहधर्मचर्या प्राजापत्यः ।
गोमिथुनादानादार्षः ।
अन्तर्वेद्यामृत्विजे दानात् दैवः ।
मिथस्समवायात् गान्धर्वः ।
शुल्कदानादासुरः ।
प्रसह्यादानाद्राक्षसः ।
सुप्तादा[2] नात्पैशाचः ।
पितृप्रमाणाश्चत्वारः पूर्वे धर्म्याः । 193·1

[1] तो. [2] प्रमत्तादा.

193·1 मातापितृप्रमाणा शेषाः ।

तौ हि शुल्कहरौ दुहितुः । अन्यतराभावेऽन्यतरो वा । अद्वितीयं[1] शुल्कं स्त्री हरेत सर्वेषां प्रीत्यारोपणमप्रतिषिद्धम् ।

वृत्तिराबध्यं वा स्त्रीधनम् ।

परद्विसहस्रा[2] स्थाप्या वृत्तिः । आबध्यानियमः । तदात्मपुत्रस्नुषाभर्मणि प्रवासप्रतिवि[3]धाने च भार्याया भोक्तुमदोषः । प्रतिरोधकव्याधिदुर्भिक्षभयप्रतीकारे धर्मकार्ये च पत्युः । सम्भूय वा दंपत्योर्मिथुनं प्रजातयोस्त्रिवर्षोपभुक्तं च धार्मिष्ठेषु विवाहेषु नानुयुञ्जीत । गान्धर्वासुरोपभुक्तं सवृद्धिकमुभयं दाप्येत । राक्षसपैशाचोपभुक्तं स्तेयं दद्यात् ।

इति विवाहधर्मः ।

मृते भर्तरि धर्मकामा तदानीमेवास्थाप्याभरणं शुल्कशेषं च लभेत । लब्ध्वा वा विन्दमाना सवृद्धिकमुभयं दाप्येत । कुटु[4]म्बकामा तु श्वशुरपतिदत्तं निवेशकाले लभेत ।

निवेशकालं हि दीर्घप्रवासे व्याख्यास्यामः ।

श्वशुरप्रातिलोम्येन वा निविष्टा श्वशुरपतिदत्तं जीयेत । ज्ञातिहस्तादभिमृष्टाया ज्ञातयो यथागृहीतं दद्युः ।

न्यायोपगतायाः प्रतिपत्ता स्त्रीधनं गोपायेत् ।

पतिदायं विन्दमाना जीयेत । धर्मकामा भुञ्जीत ।

पुत्रवती विन्दमाना स्त्रीधनं जीयेत । तत्तु स्त्रीधनं पुत्रा हरेयुः ।

---

[1] द्वितीयं [2] साहस्रा, [3] साप्रवि. [4] कुटु.

पुत्रभरणार्थं वा विन्दमाना पुत्रार्थं स्फातीकुर्यात् ।　194·5

बहुपुरुषप्रजानां पुत्राणां यथापितृदत्तं स्त्रीधनमवस्थापयेत् ।

कामकारणीयमपि स्त्रीधनं विन्दमाना पुत्रसंस्थं कुर्यात् ।

अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनमायुःक्षया-द्भुञ्जीत । आपदर्थं हि स्त्रीधनं । ऊर्ध्वं दायादं गच्छेत् ।

जीवति भर्तरि सुतायाः पुत्रा दुहितरश्च स्त्रीधनं विभजेरन् । अपुत्रायाः दुहितरः तदभावे भर्ता ।

शुल्कमन्वाधेयमन्यद्वा बन्धुभिर्दत्तं बान्धवा हरेयुः ।

इति स्त्रीधनकल्पः ।

वर्षाण्यष्टावप्रजायमानामपुत्रां वन्ध्यां चाकाङ्क्षेत । दश निन्दुं द्वादश कन्याप्रसविनीम् । ततः पुत्रार्थी द्वितीयां विन्देत । तस्या-तिक्रमे शुल्कं स्त्रीधनमर्थं चाधिवेदनिकं दद्यात् । चतुर्विंशति-पणपरं च[1] दण्डम् ।

शुल्कस्त्रीधनमशुल्कस्त्रीधनास्त[2]त्प्रमाणमाधिवेदनिकमनुरूपां च वृत्तिं दत्वा बह्वीरपि विन्देत । पुत्रार्था हि स्त्रियः ।

तीर्थसमवाये चासां यथाविवाहं पूर्वोढां जीवत्पुत्रां वा पूर्वं गच्छेत् । तीर्थगूहनागमने षण्णवतिर्दण्डः । पुत्रवतीं धर्मकामां वन्ध्यां साधुं[3]नीरजस्कां वा नाकामामुपेयात् । न चाकामः पुरुषः कुष्ठिनीमुन्मत्तां वा गच्छेत् स्त्री तु पुत्रार्थमेवंभूतं वोपगच्छेत् ।　195·2

---

[1] नास्ति.　[2] नायान्त.　[3] निन्दुं.

196·2 नीचत्वं परदेशं वा प्रस्थितो राजकिल्बिषी ।
प्राणाभिहन्ता पतितस्त्याज्यः क्लीबोऽपि वा पतिः ॥

इति धर्मस्थीये तृतीयेऽधिकरणे विवाहसंयुक्ते विवाहधर्मः स्त्रीधनकल्प आधिवेदनिकं[1] द्वितीयोऽध्यायः.
आदित एकोनषष्टितमोऽध्यायः.

## ५९ प्रक. विवाहसंयुक्ते–शुश्रूषाभर्मपारुष्य-द्वेषातिचारोपकारव्यवहारप्रतिषेधाश्च.

द्वादशवर्षा स्त्री प्राप्तव्यवहारा भवति । षोडशवर्षः पुमान् । अत ऊर्ध्वमशुश्रूषायां द्वादशपणः स्त्रिया दण्डः पुंसो द्विगुणः ॥

भर्मण्यायामनिर्दिष्टकालायां ग्रासाच्छादनं वाऽधिकं यथा पुरुषपरिवापं सविशेषं दद्यात् । निर्दिष्टकालायां तदेव सङ्ख्याय बन्धं च दद्यात् । शुल्कस्त्रीधनाधिवेदनि[2]कानामनादाने च ।

श्वशुरकुलप्रविष्टायां विभक्तायां वा नाभियोज्यः पतिः ।

इति भर्म ।

197·2 "नग्ने विनग्ने न्यङ्गेऽपितृकेऽमातृके" इत्यनिर्देशेन विनयग्राहणम् ॥

[1] आध्यावहनिकं. [2] नाध्यावहनि.

वेणुदलरज्जुहस्तानामन्यतमेन वा पृष्ठे त्रिराघातः । तस्याऽतिक्रमे वाग्दण्डपारुष्यदण्डाभ्यामर्धदण्डाः ॥ 197.2

तदेव स्त्रिया भर्तारि प्रसिद्ध[1] मदोषाया[2] ईर्ष्याया बाह्यविहारेषु द्वारेष्वत्ययो यथानिर्दिष्टः ॥

इति पारुष्यं ॥

भर्तारं द्विषती स्त्री सप्तार्तवाऽन्यं कामयमाना[3] तदानीमेव स्थाप्याभरणं निधाय भर्तारं अन्यया सह शयानमनुशयीत ॥

भिक्षुक्यन्वाधि[4] ज्ञातिकुलानामन्यतमे वा भर्ता द्विषत् स्त्रियमेकामनुशयीत ॥

दृष्टि[5]लिङ्गे मैथुनापहारे सवर्णापसर्पोपगमे वा मिथ्यावादी द्वादशपणं दद्यात् ॥

अमोक्ष्या भर्तुरकामस्य द्विषती भार्या । भार्यायाश्च भर्ता । परस्परं द्वेषान्मोक्षः ॥

स्त्रीविप्रकाराद्वा पुरुषश्चेन्मोक्षमिच्छेत् यथागृहीतमस्यै दद्यात् ॥

पुरुषविप्रकाराद्वा स्त्री चेन्मोक्षमिच्छेत् नास्यै यथागृहीतं दद्यात् । अमोक्षो धर्मविवाहानामिति ॥ 198.1

---

[1] सिद्धा. [2] षायां. [3] वान्यमण्डयमाना.

[4] क्यबाधि. [5] दृष्ट.

198·2 प्रतिषिद्धा स्त्री दर्पमद्यक्रीडायां त्रिपणं दण्डं दद्यात् ॥

दिवा स्त्रीप्रेक्षाविहारगमने षट्पणो दण्डः ॥

पुरुषप्रेक्षाविहारगमने द्वादशपणः । रात्रौ द्विगुणः ॥

सुप्तमत्ताप्रव्रजने भर्तुरादाने च द्वारस्य द्वादशपणः ॥

रात्रौ निष्कासने द्विगुणः ॥

स्त्रीपुंसयोर्मैथुनार्थेनाङ्गविचेष्टायां रहश्शील[1] सम्भाषायां वा चतुर्विंशतिपणः स्त्रिया दण्डः ; पुंसो द्विगुणः ॥

केशनीवीदन्तनखावलम्बनेषु पूर्वस्साहसदण्डः ; पुंसो द्विगुणः ॥

शङ्कितस्थाने सम्भाषायां च पणस्थाने शिफादण्डः ; स्त्रीणां ग्राममध्ये चण्डालः पक्षान्तरं पञ्चशिफा दद्यात् । पणिकं वा प्रहारं मोक्षयेत् ॥

इत्यतिचाराः ॥

प्रतिषिद्धयोः स्त्रीपुंसयोरन्योन्योपकारे क्षुद्रकद्रव्याणां द्वादशपणो दण्डः ; स्थूलकद्रव्याणां चतुर्विंशतिपणः ; हिरण्यसुवर्णयोश्चतुष्पञ्चाशत्पणः स्त्रिया दण्डः । पुंसो द्विगुणः ॥ 199·1

त एवागम्ययोरर्धदण्डाः ॥

तथा प्रतिषिद्धपुरुषव्यवहारेषु च ॥

इति प्रतिषेधः ॥

---

1 रहोऽश्लील.

राजद्विष्टाति[1]चाराभ्यामात्मापक्रमणेन च । 199'2

स्त्रीधनानीतशुल्कानामस्वाम्यं जायते स्त्रियः ॥

इति धर्मस्थीये विवाहसंयुक्ते शुश्रूषाभर्मपारुष्यद्वेषातिचारा उपकारव्यवहारप्रतिषेधाश्च तृतीयोऽध्यायः.

आदितष्षष्टितमः.



## ५९ प्रक. विवाहसंयुक्ते–निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासः दीर्घप्रवासश्च.

पतिकुलान्निष्पतितायाः स्त्रियाष्षट्पणो दण्डोऽन्यत्र विप्रकारात् । प्रतिषिद्धायां द्वादशपणः । प्रतिवेशगृहातिगतायाष्षट्पणः।

प्रातिवेशिकभिक्षुकवैदेहकानामवकाशभिक्षापण्यदाने द्वादशपणो दण्डः। प्रतिषिद्धानां पूर्वः साहसदण्डः परिगृहातिगतायां चतुर्विंशतिपणः ॥

परभार्यावकाशदाने शक्यो[2] दण्डोऽन्यत्रापद्भ्यः । वारणाज्ञानयोर्निर्दोषः प्रति[3]विप्रकारात् ॥

"पतिज्ञातिसुखावस्थग्रामिकान्वाधिभिक्षुकीज्ञातिकुलानामन्यतमं पुरुषं गन्तुमदोषः" इत्याचार्याः ॥

"सपुरुषं वा ज्ञातिकुलं कुतो हि साध्वीजनस्य छलं सुखमेतदवबोद्धुम्" इति कौटि[4]ल्यः ॥ 200'3

प्रेतव्याधिव्यसनगर्भनिमित्तमप्रतिषिद्धमेव ज्ञातिकुलगमनम् ॥

[1] द्विष्टाति. [2] शत्यो. [3] पति. [4] ट.

200·3 नि[1]मित्तं वारयतो द्वादशपणो दण्डः । तत्रापि[2] गूहमाना स्त्रीधनं जीयेत । ज्ञातयो वा छादयन्तः शुल्कशेषम् ॥

इति निष्पतनम् ॥

पतिकुलान्निष्पत्य ग्रामान्तरगमने द्वादशपणो दण्डः स्थाप्याभरणलोपश्च ॥

गम्येन वा पुंसा सहप्रस्थाने चतुर्विंशतिपणः; सर्वधर्मलोपश्चान्यत्र भर्मदानतीर्थगमनाभ्यां पुंसः पूर्वः साहसदण्डः। तुल्यश्रेयसोः पापीयसोः मध्यमः । बन्धुरदण्ड्यः । प्रतिषेधेऽर्धदण्डः॥

पथि व्यन्तरे गूढदेशाभिगमने मैथुनार्थेन शङ्कितप्रतिषिद्धाभ्यां वा पथ्यनुसारेण सङ्ग्रहणं[3] विद्यात् ॥

ताळापचारचारणमत्स्यबन्धकलुब्धकगोपालकशौण्डिकानामन्येषां च प्रसृष्टास्त्री[4]काणां पथ्यनुसरणमदोषः ॥

प्रतिषिद्धे वा नयतः पुंसः स्त्रियो वा गच्छन्त्यास्त एवार्धदण्डाः ॥

इति पथ्यनुसरणम् ॥

ह्रस्वप्रवासिनां शूद्रवैश्यक्षत्रियब्राह्मणानां भार्यास्संवत्सरो-
201·1 त्तरं कालमाकांक्षेरन्नप्रजातासंवत्सराधिकं प्रजाताः । प्रतिविहिताः द्विगुणं कालं; अप्रतिविहितास्सुखावस्था बिभृयुः; परं चत्वारि वर्षाण्यष्टौ वा ज्ञातयः; ततो यथादत्तमादाय प्रमुञ्चेयुः॥

---

[1] तन्नि. [2] तत्र हि. [3] ग्रहणं. [4] प्रसृष्टस्त्री.

ब्राह्मणमधीयानं दशवर्षाण्यप्रजाता:[1] ; द्वादश प्रजाता:[2] । राजपुरुषमायु:क्षयादाकाङ्क्षेत । सवर्णतश्च प्रजाता नापवादं लभेत। कुटुम्बर्द्धिलोपे वा सुखावस्थैर्विमुक्ता यथेष्टं विन्देत । जीवितार्थमापद्गता वा धर्मविवाहात्कुमारी परिग्रहीतारमनाख्याय प्रोषितं श्रूयमाणं सप्ततीर्थान्याकाङ्क्षेत । संवत्सरं श्रूयमाणमाख्याय ; प्रोषितमश्रूयमाणं पञ्चतीर्थान्याकाङ्क्षेत दश श्रूयमाणं ; एकदेशदत्तशुल्कं त्रीणि तीर्थान्यश्रूयमाणं ; श्रूयमाणं सप्ततीर्थान्याकाङ्क्षेत। दत्तशुल्कं पञ्चतीर्थान्यश्रूयमाणं; दश श्रूयमाणम्। अन्ततः[3] परं धर्मस्थैर्विसृष्टा यथेष्टं विन्देत । तीर्थोपरोधो हि धर्मवध इति कौटि[4]ल्यः । 201·2

दीर्घप्रवासिनः प्रव्रजितस्य प्रेतस्य वा भार्या सप्ततीर्थान्याकाङ्क्षेत । संवत्सरं प्रजाता । ततः पतिसोदर्यं गच्छेत् । बहुषु प्रत्यासन्नं धार्मिकं भर्मसमर्थं कनिष्ठमभार्यं वा। तदभावेऽप्यसोदर्यं सपिण्डं तुल्यं[5] वा। आसन्नमेतेषां एष एव क्रमः—

एतानुत्क्रम्य दायादान् वेदने जातकर्मणि ।
जारस्त्रीदातृवेत्तारस्संप्राप्तास्सङ्ग्रहात्ययम् ॥ 203·2

इति धर्मस्थीये विवाहसंयुक्ते निष्पतनं पथ्यनुसरणं
ह्रस्वप्रवासः दीर्घप्रवासश्च चतुर्थोऽध्यायः
विवाहसंयुक्तं समाप्तम्
आदित एकषष्टितमः.

---

[1], [2], जाता. [3] ततः. [4] ट. [5] कुल्यं.

## ६० प्रक. दायविभागे—दायक्रमः

203·4 अनीश्वराः पितृमन्तस्स्थितपितृमातृकाः पुत्राः । तेषां ऊर्ध्वं पितृतो दायविभागः पितृद्रव्याणां स्वयमार्जितमविभज्यं अन्यत्र पितृद्रव्यादुत्थितेभ्यः ॥

पितृद्रव्यादविभक्तोपगतानां पुत्राः पौत्रा वा चतुर्थादित्यंशभाजः तावदविच्छिन्नः पिण्डो भवति । विच्छिन्नपिण्डास्सर्वे समं विभजेरन् ॥

अपितृद्रव्या विभक्तपितृद्रव्या वा सहजीवन्तः पुनर्विभजेरन् । यतश्चोत्तिष्ठेत स ऋद्ध्यंशं[1] लभेत ॥

द्रव्यमपुत्रस्य सोदर्या भ्रातरः सहजीविनो वा हरेयुः कन्याश्च रिक्थम् ॥

पुत्रवतः पुत्राः दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः तदभावे पिता धरमाणः; पित्रभावे भ्रातरो भ्रातृपुत्राश्च ॥ अपितृका बहवोऽपि च भ्रातरो भ्रातृपुत्राश्च पितुरेकमंशं हरेयुः ॥

सोदर्याणामनेकपितृकाणां पितृतो दायविभागः पितृभ्रातृ-
204·3 पुत्राणां पूर्वे विद्यमाने नापर[2]मवलम्बन्ते । ज्येष्ठे च कनिष्ठमर्ध[3]ग्राहिणम् ॥

---

[1] द्ध्यंशं. [2] नावर. [3] मर्थं.

जीवद्विभागे पिता नैकं विशेषयेत् । न चैकमकारणान्निर्वि- 201·4 भजेत । पितुरसत्यर्थे ज्येष्ठाः कनिष्ठाननुगृह्णीयुः अन्यत्र मिथ्या-वृत्तेभ्यः ॥

प्राप्तव्यवहाराणां विभागः । अप्राप्तव्यवहाराणां देयविशुद्धं मातृबन्धुषु ग्रामवृद्धेषु वा स्थापयेयुर्व्यवहारप्रापणात् प्रोषि-तस्य वा ॥

सन्निविष्टसममसन्निविष्टेभ्यो नैवेशनिकं दद्युः । कन्याभ्यश्च प्रदानिकम् ॥

ऋणरिक्थयोस्समो विभागः ॥

'उदपात्राण्यपि निष्किञ्चना विभजेरन्' इत्याचार्याः ॥

'छलमेतदिति' कौटि[1]ल्यः । सतोऽर्थस्य विभागो नासतः 'एतावानर्थः सामान्यस्तस्यैतावान् प्रत्यंशः' इत्यनुभाष्य ब्रुवन् साक्षिषु विभागं कारयेत् । दुर्विभक्तमन्योन्यापहृतमन्तर्हितमवि-ज्ञातोत्पन्नं वा पुनर्विभजेरन् ॥

अदायादकं राजा हरेत् स्त्रीवृत्तिप्रेतकार्यवर्जमन्यत्र श्रोत्रि-यद्रव्यात् । तत् त्रैविद्येभ्यः प्रयच्छेत् ॥

पतितः पतिताज्जातः क्लीबश्चानंशाः । जडोन्मत्तान्धकुष्ठि- 205·6 नश्च । सति भार्यार्थे तेषामपत्यमतद्विधं भागं हरेत् । ग्रासा-च्छादनमितरे पतितवर्जाः ॥

[1] ट.

206·2 तेषां च कृतदाराणां लुप्ते प्रजनने सति ।
सृजेयुः बान्धवाः पुत्रांस्तेषामंशं प्रकल्पयेत् ॥

इति धर्मस्थीये दायविभागे दायक्रमः पञ्चमोऽध्यायः
आदितो द्विषष्टितमः.

---

## ६० प्रक. अंशविभागः.

---

एकस्त्रीपुत्राणां ज्येष्ठांशः ॥

ब्राह्मणानामजाः ; क्षत्रियाणामश्वाः ; वैश्यानां गावः ; शूद्राणामवयः ॥

काणलिङ्गास्तेषां मध्यमांशः । भिन्नवर्णाः कनिष्ठांशः । चतुष्पदाभावे रत्नवर्जानां दशानां भागं द्रव्याणामेकं ज्येष्ठो हरेत् । प्रतिमुक्तस्वधापाशो हि भवति ॥

इत्यौशनसो विभागः ॥

पितुः परिवापाद्यानमाभरणं च ज्येष्ठः[1]; शयनासनं भुक्तकांस्यं च मध्यमांशः ; कृष्णं धान्यायसं गृहपरिवापो गोशकटं च कनिष्ठांशः । शेष[2]द्रव्याणामेत[3]द्रव्यस्य वा समो विभागः ॥

आदायादा भगिन्यः मातुः परिवापाद्भुक्तकांस्याभरणभागिन्यः ।

207·1 मानुषहीनो ज्येष्ठस्तृतीयमंशं ज्येष्ठांशाल्लभेत । चतुर्थमना[4]यवृत्तिः ; निवृत्तधर्मकार्यो वा कामाचारस्सर्वं जीयेत ॥

तेन मध्यमकनिष्ठौ व्याख्यातौ ॥

---

[1] ज्येष्ठांशः. [2] शेषाणां. [3] मेक. [4] मन्या.

तयोर्मानुषोपेतो ज्येष्ठांशादर्धं लभेत ॥

नानास्त्रीपुत्राणां तु संस्कृतासंस्कृतयोः कन्याकृतक्रियामात्रे 207·2
चैकस्याः, पुत्रयोर्यमयोर्वा पूर्वजन्मना ज्येष्ठभावः ॥

सूतमागधव्रात्यरथकाराणामैश्वर्यतो विभागः शेषास्तमुपजीवेयुः। अनीश्वरास्समविभागा इति ॥

चातुर्वर्ण्यपुत्राणां ब्राह्मणीपुत्रश्चतुरोंऽशान् हरेत् ॥

क्षत्रियापुत्रस्त्रीनंशान्॥

वैश्यापुत्रो द्वावंशौ ॥

एकं शूद्रापुत्रः ॥

तेन त्रिवर्णद्विवर्णपुत्रविभागः क्षत्रियवैश्ययोर्व्याख्यातः ॥

ब्राह्मणस्यानन्तरापुत्रस्तुल्यांशः; क्षत्रियवैश्ययोरर्धांशः, तुल्यांशो वा मानुषोपेतः ॥

तुल्यातुल्ययोरेकपुत्रस्सर्वं हरेत्। बन्धूंश्च बिभृयात् ॥

ब्राह्मणानां तु पारशवस्तृतीयमंशं लभेत। द्वावंशौ सपिण्डः कुल्यो वाऽऽसन्नः स्वधादानहेतोः। तदभावे पितुराचार्योऽन्तेवासी वा ॥

क्षेत्रे वा जनयेदस्य नियुक्तः क्षेत्रजं सुतम्। 208·2
मातृबन्धुस्सगोत्रो वा तस्मै तत्प्रदिशेद्धनम् ॥

इति धर्मस्थीये दायविभागेंऽशविभागः
षष्ठोऽध्यायः आदितस्त्रिषष्टितमः

## ६० प्रक. पुत्रविभागः.

208·4 "परपरिग्रहे बीजमुत्सृष्टं क्षेत्रिणः" इत्याचार्याः ॥

"माता भस्त्रा यस्य रेतस्तस्यापत्यम्" इत्यपरे ॥

"विद्यमानमुभयम्" इति कौटि[1]ल्यः ॥

स्वयंजातः कृतक्रियायामौरसः । तेन तुल्यः पुत्रिकापुत्रः । सगोत्रेणान्यगोत्रेण वा नियुक्तेन क्षेत्रजातः क्षेत्रजः पुत्रः । जनयितुरसत्यन्यस्मिन् पुत्रे स एव द्विपितृको द्विगोत्रो वा द्वयोरपि स्वधारिक्थभाग्भवति । तत्सधर्मा बन्धूनां गृहे गूढजात स्तु गूढजः । बन्धुनोत्सृष्टोऽपविद्धः संस्कर्तुः पुत्रः । कन्या गर्भः कानीनः । सगर्भोढायास्सहोढः । पुनर्भूतायाः पौनर्भवः॥

स्वयंजातः पितृबन्धूनां च दायादः । परंजात[2]स्संस्कर्तुरेव न बन्धूनाम् ॥

तत्सधर्मा मातापितृभ्यामद्भिर्दत्तो[3] दत्तः । स्वयं बन्धुभिर्वा पुत्रभावोपगत उपगतः । पुत्रत्वेऽधिकृतः कृतकः । परि क्रीतः क्रीत इति ॥

औरसे तूत्पन्ने सवर्णास्तृतीयांशहराः । असवर्णा ग्रासाच्छादनभागिनः ॥

209·3 ब्राह्मणक्षत्रिययोरनन्तरापुत्रास्सवर्णा एकान्तरा असवर्णाः॥

ब्राह्मणस्य वैश्यायामम्बष्ठः । शूद्रायां निषादः पारशवो वा॥

क्षत्रियस्य शूद्रायामुग्रः ॥

---

[1] ट. [2] परजात. [3] मुक्तो.

शूद्र एव वैश्यस्य ॥ 209·3

सवर्णासु चैषामचरितव्रतेभ्यो जाता व्रात्याः ॥

इत्यनुलोमाः ॥

शूद्रादायोगवक्षत्तचण्डालाः ॥

वैश्यान्मागधवैदेहकौ ॥

क्षत्रियात्सूतः ॥

पौराणिकस्त्वन्यस्सूतो मागधश्च ब्रह्मक्षत्राद्विशेषतः[1] ॥

त एते प्रतिलोमाः स्वधर्मातिक्रमाद्राज्ञस्सम्भवन्ति ॥

उग्रान्नैषाद्यां कुटकः[2]। विपर्यये पुल्कसः। वैदेहिकायामम्बष्ठाद्वैणः।

विपर्यये कुशीलवः। क्षत्तायामुग्राच्छ्वपाकः इत्येतेऽन्ये[3]चान्तराळाः ॥

कर्मणा वैण्यो रथकारः। तेषां स्वयोनौ विवाहः। पूर्वापरगामित्वं वृत्तानुवृत्तं च स्वधर्मान्[4] स्थापयेत्। शूद्रसधर्माणो वा अन्यत्र चण्डालेभ्यः ॥

केवलमेवं वर्तमानास्स्वर्गमाप्नोति राजा नरकमन्यथा। सर्वेषामन्तराळानां समो विभागः ॥

देशस्य जात्या सङ्घस्य धर्मो ग्रामस्य वाऽपि यः। 210·6
उचितस्तस्य तेनैव दायधर्मं प्रकल्पयेत् ॥

इति धर्मस्थीये दायविभागे पुत्रविभागः सप्तमोऽध्यायः
दायविभागस्समाप्तः। आदितश्चतुष्षष्टितमोऽध्यायः

---

[1] द्विशेषः [2] कुक्कुटः [3] त्येते चा. [4] धर्मं

## ६१ प्रक. गृहवास्तुकम्.

---

211·1 सामन्तप्रत्यया वास्तुविवादाः । गृहं क्षे[1]त्रमारामस्सेतुबन्धस्तटाकमाधारो वा वास्तुः । कर्णकीलायससम्बन्धोऽनुगृहं सेतुः । यथासेतुभोगं वेश्म कारयेत् ॥

अभूतं[2] वा परकीयाद[3] विक्रम्य ॥

द्वावरत्नी त्रिपदीं वा पादे[4] बन्धं कारयेत् अवस्कर [5]भ्रम मुदपानं पानगृहोचितमन्यत्र सूतिकाकूपादानिर्दशाहादिति ।

तस्यातिक्रमे पूर्वस्साहसदण्डः ॥

तेन बन्धना[6]वघातनकृतं कल्याणकृत्येष्वाचामोदकमार्गाश्च व्याख्याताः ॥

त्रिपदीप्रतिक्रान्तामत्यर्ध[7]मरत्निं वा प्रवेश्य गाढप्रसृतमुदकमार्गं प्रस्रवणं प्रपातं वा कारयेत् । तस्यातिक्रमे चतुष्पञ्चाशत्पणो दण्डः ॥

एकपदी[8]प्रतिक्रान्तमरत्निं वा चाक्रि[9]चतुष्पदस्थानमग्निष्ठं उदञ्जरस्थानं रोचनीं कुट्टनीं वा कारयेत् । तस्यातिक्रमे चतुर्विंशतिपणो दण्डः ॥

212·2 सर्ववास्तुकयोः प्राक्षिप्तकयोर्वा शालयोः किष्कुरन्तरिका त्रिपदी वा । तयोश्चतुरङ्गुलं निव्रा[10]न्तरं समारूढकं वा । किष्कुमात्रमाणिद्वारमन्तरिकायां खण्डफुल्लार्थमसम्पातं कारयेत् ।

---

1 गृहक्षे· 2 अद्भुतं· 3 परकुड्याद· 4 देश· 5 रं 6 तेनेन्धना·
7 मध्यर्ध· 8 पदीं· 9 चक्र· 10 नीप्रा·

प्रकाशार्थमल्पमूर्ध्वं वातायनं कारयेत् । [1]सम्भूय वा गृहस्वामिनो यथेष्टं कारयेयुरनिष्टं वारयेयुः ॥ 212.2

वानलब्ध्याश्चोर्ध्वमाहार्यभोगकटप्रच्छन्नमवमर्शाक्ति[2] वा कारयेत् वर्षाबाधा[3]भयात् । तस्यातिक्रमे पूर्वस्साहसदण्डः ॥

प्रतिलोमद्वा[4]रवातायनबाधायां च अन्यत्र राजमार्गरथ्याभ्यः ॥

खातयोवान[5]प्रणालीनिश्रेण्यवस्कर[6]भागैर्बाहिर्बाधायां भोग निग्रहे च परकुड्यमुदकेनोपघ्नतो द्वादशपणो दण्डः । मूत्रपुरीषोपघाते द्विगुणः ॥

प्रणालीमोक्षो वर्षति । अन्यथा द्वादशपणो दण्डः ॥

प्रतिषिद्धस्य च वसतो निरस्यतश्चावक्रयणं[7] अन्यत्र पारुष्यस्तेयसाहससङ्ग्रहणमिथ्याभोगेभ्यः ॥

स्वयमभिप्रस्थितो वर्षावक्रयशेषं दद्यात् ॥

सामान्ये वेश्मनि साहाय्यमप्रयच्छतस्सामान्यमुपरुन्धतो भोगं च गृहे[8] द्वादशपणो दण्डः । विनाशयतस्तद्द्विगुणः ॥

कोष्ठकाङ्गणवर्जानामग्निकुट्टनशालयोः । 212.3
विवृतानां च सर्वेषां सामान्ये भोग इष्यते ॥

इति धर्मस्थीये वास्तुके गृहवास्तुकं अष्टमोऽध्यायः
आदितः पञ्चषष्टिरध्यायः

---

1 तदवसिते वेश्मनि छादयेत् । सम्भूय· 2 न्नमवमर्शभित्ति· 3 वर्षबाध·
4 माद्वा. 5 खातसोपान· 6 वसर· 7 यिणं· 8 भोगनिग्रहे·

# ६१ प्रक. वास्तुविक्रयः.

213·5 ज्ञातिसामन्तधनिकाः क्रमेण भूमिपरिग्रहान् क्रेतुमभ्याभवेयुः । ततोऽन्ये बाह्यास्सामन्तचत्वारिंशत्कुल्या गृहप्रतिमुखे वेश्म श्रावयेयुः । सामन्तग्रामवृद्धेषु क्षेत्रमारामं सेतुबन्धं तटाकमाधारं वा मर्यादासु यथासेतुभोगं 'अनेनार्घेण कः क्रेता' इति त्रिराघुषितमव्याहतं[1] क्रेता क्रेतुं लभेत ॥

स्वर्गवायोर्वा[2] मूल्यवर्धने मूल्यवृद्धिः सशुल्का कोशं गच्छेत् । विक्रयप्रतिक्रोष्टा शुल्कं दद्यात् ॥

अस्वामिप्रतिक्रोशे चतुर्विंशतिपणो दण्डः । सप्तरात्रादूर्ध्वमनभिसरतः प्रतिक्रुष्टो विक्रीणीत । प्रतिक्रुष्टातिक्रमे वास्तुनि । द्विशतो दण्डः । अन्यत्र चतुर्विंशतिपणो दण्डः ॥

इति वास्तुविक्रयः ॥

सीमविवादं ग्रामयोरुभयोस्सामन्ताः पञ्चग्रामी दशग्रामी वा सेतुभिस्स्थावरैः कृत्रिमैर्वा कुर्यात् ॥

कर्षकगोपालवृद्धकाः पूर्वभुक्तिका वा बाह्यास्सेतूनामनभिज्ञा बहव एको वा निर्दिश्य सीमसेतून् विपरीतवेषाः सीमानं नयेयुः ॥

214·3 उद्दिष्टानां सेतूनामदर्शने सहस्रदण्डः । तदेव नीते सीमापहारिणां सेतुच्छिदां च कुर्यात् ॥

---

[1] षितम.   [2] "स्पर्धितयोर्वा"; अथवा "स्पर्धया वा."

प्रणष्ट[1]सेतुभोगं वा सीमानं राजा यथोपकारं विभजेत्। 214·4

क्षेत्रविवादं सामन्तग्रामवृद्धाः कुर्युः। तेषां द्वैधीभावे यतो बहवश्शुचयोऽनुमता वा ततो नियच्छेयुः। मध्यं वा गृह्णीयुः। तदुभयं परोक्तं वास्तु राजा हरेत्।

प्रणष्टस्वामिकं च यथोपकारं वा विभजेत्। प्रसह्यादाने वास्तुनि स्तेयदण्डः। कारणादाने प्रयासमाजीवं च परिसङ्ख्याय बन्धं दद्यात्। मर्यादापहरणे पूर्वस्साहसदण्डः। मर्यादाभेदे चतुर्विंशतिपणः। तेन तपोवनविवीतमहापथश्मशानदेवकुलयजनपुण्यस्थानविवादा व्याख्याताः।

इति मर्यादास्थापनम्।

सर्व एव विवादास्सामन्तप्रत्ययाः।

विवीतस्थलकेदारषण्डखलवेश्मवाहनकोष्ठानां पूर्वं पूर्वमबाधं[2] सहेत ब्रह्मसोमारण्यदेवयजनपुण्यस्थानवर्जाः।

स्थलप्रदेशाः आधारपरिवाहकेदारोपभ्वभोगैः[3] परक्षेत्रकृष्टबीजहिंसायां यथोपघातं मूल्यं[4] दद्युः। केदारारामसेतुबन्धानां 215·5 परस्परहिंसायां हिंसाद्विगुणो दण्डः।

पश्चान्निविष्टमधरतटाकं नोपरितटाकस्य केदारमुदकेनाप्लावयेत्।

उपरिनिविष्टं नाधरतटाकस्य पूरास्रावं वार[5]येत् अन्यत्र त्रिवर्षोपरतकर्मणः। तस्यातिक्रमे पूर्वस्साहसदण्डः। तटाकवामनं च।

---

[1] प्रणष्टे· [2] माबाधं· [3] रोपभोगैः [4] तमूल्यं· [5] कार·

216·3 पञ्चवर्षोपरतकर्मणः सेतुबन्धस्य स्वाम्यं लुप्येतान्यत्रापद्भ्यः ।
तटाकसेतुबन्धानां नवप्रवर्तने पाञ्चवार्षिकः परिहारः ।
भग्नोत्सृष्टानां चातुर्वार्षिकः ।
समुपारूढानां त्रैवार्षिकः ।
स्थलस्य द्वैवार्षिकः स्वात्माधाने विक्रमे च ।

वातप्र[1] वृत्तिमनन्दि[2] निबन्धायतनतटाककेदारारामषण्डवपानां सस्यपर्ण[3] भागोत्तरिकमन्येभ्यो वा यथोपकारं दद्युः । प्रक्रयावक्रयविभाग[4] भोगनिसृष्टोपभोक्तारश्चैषां प्रतिकुर्युः । अप्रतीकारे हीनाद्विगुणो दण्डः ॥

सेतुभ्यो मुञ्चतस्तोयमपारे षट्पणो दमः ॥
पारे वा तोयमन्येषां प्रमादेनोपरुन्धतः ॥

इति धर्मस्थीये वास्तुके वास्तुविक्रयः सीमाविवादः
मर्यादास्थापनं बाधाबाधिकं नवमोऽध्यायः
आदितः षट्षष्टितमोऽध्यायः ॥



## ६१–६२ प्रक. विवीतक्षेत्रपथहिंसा समयस्यानपाकर्म च.

---

कर्मोदकमार्गमुचितं रुन्धतः कुर्वतोऽनुचितं वा पूर्वस्साहसदण्डः ॥

217·3 सेतुरूप[5] पुण्यस्थानचैत्यदेवायतनानि च परभूमौ निवेशयतः

---

[1] खातप्र· [2] नदी· [3] वर्ण· [4] याधिभाग· [5] कूप·

पूर्वानुवृत्तं धर्मसेतुमाधानं विक्रयं वा नयतो नाययतो वा 217·3
मध्यमस्साहसदण्डः श्रोतॄणामुत्तमः अन्यत्र भग्नोत्सृष्टात् ॥

स्वाम्यभावे ग्रामाः पुण्यशीला वा प्रतिकुर्युः ॥

पथिप्रमाणं दुर्गनिवेशे व्याख्यातम् ॥

क्षुद्रपशुमनुष्यपथं रुन्धतो द्वादशपणो दण्डः। महापशुपथं चतुर्विंशतिपणः। हस्तिक्षेत्रपथं चतुष्पञ्चाशत्पणः। सेतुवनपथं षट्छतः। श्मशानग्रामपथं द्विशतः। द्रोणमुखपथं पञ्चशतः। स्थानीयराष्ट्रविवीतपथं साहस्रः। अतिकर्षणे चैषां दण्डचतुर्था दण्डाः। कर्षणे पूर्वोक्ताः ॥

क्षेत्रिकस्याक्षिपतः क्षेत्रमुपवासस्य वा त्यजतो बीजकाले द्वादशपणो दण्डः अन्यत्र दोषोपनिपाताविषह्येभ्यः ॥

करदाः करदेष्वाधानं विक्रयं वा कुर्युः। ब्रह्मदेयिका[1] ब्रह्मदेयिकेषु[2] अन्यथा पूर्वस्साहसदण्डः।

करदस्य वाऽकरदग्रामं प्रविशतः ॥

करदं तु प्रविशतः सर्वद्रव्येषु प्राकाम्यं स्यात् अन्यत्रागारात्। तदप्यस्मै दद्यात् ॥

अनादेयमकृषतोऽन्यः पञ्चवर्षाण्युपभुज्य प्रयासनिष्क्रयेण दद्यात्। अकरदाः परत्र वसन्तो भोगमुपजीवेयुः ॥

ग्रामार्थेन ग्रामिकं व्रजन्तं[3] उपवासाः पर्यायेणानुगच्छेयुरननुग[4]च्छन्तः पणार्धपणिकं योजनं दद्युः ॥ 218.4

---

[1] दायिका· [2] दयिकेषु· [3] वसन्तं· [4] रनुग·

218·5 ग्रामिकस्य ग्रामादस्तेनपारदारं[1] निरस्यतश्चतुर्विंशतिपणो दण्डः। ग्रामस्योत्तमः ॥

निरस्तस्य प्रवेशो ह्यधिगमेन व्याख्यातः ॥

स्तम्भैस्समन्ततो ग्रामाद्धनुश्शतापकृष्टमुपशालं[2] कारयेत् ॥

पशुप्रचारार्थं विवीतमालवने[3]नोपजीवेयुः ॥

विवीतं भक्षयित्वाव[4]स्रनानामुष्ट्रमाहिषाणां पादिकं रूपं गृह्णीयुः। गवाश्वखराणां चार्धपादिकं। क्षुद्रपशूनां षोडशभागिकम् ॥

भक्षयित्वा निषण्णानामेत एव द्विगुणा दण्डाः। परिवसतां चतुर्गुणाः ॥

ग्रामदेववृषा वा अनिर्दशाहा वा धेनुरुक्षाणो गोवृषाश्चादण्डाः[5]

सस्यलक्षणे सस्योपघातं निष्पत्तितः[6] परिसङ्ख्याय द्विगुणं दापयेत्। स्वामिनश्च नि[7]वेद्य चारयतो द्वादशपणो दण्डः प्रमुञ्चतश्चतुर्विंशतिपणः। पालिनामर्धदण्डः। तदेव षण्डभक्षणे कुर्यात्। वाटभेदे द्विगुणः ॥

वेश्मखलवलयगतानां च धान्यानां भक्षणे हिंसाप्रतीकारं कुर्यात् ॥

219·6 अभयवनमृगाः परिगृहीताः भक्षयन्तः स्वामिनो निवेद्य यथाऽवध्यास्तथा प्रतिषेद्धव्याः ॥

---

1 दारिकं· 2 साल· 3 पने· 4 प· 5 ण्ड्याः· 6 तित.· 7 श्चानि·

पशवो रश्मिप्रतोदाभ्यां वारयितव्याः । तेषामन्यथा हिं- 219·6
सायां दण्डपारुष्यदण्डाः । प्रार्थयमाना दृष्टापराधा वा सर्वो-
पायैर्नियन्तव्याः । इति क्षेत्रपथहिंसा ।

कर्षकस्य ग्राममभ्युपेत्याकुर्वतो ग्राम एवात्ययं हरेत् ।
कर्माकरणे कर्मवेतनद्विगुणं हिरण्यदानं[1] प्रत्यंशद्विगुणं भक्ष्यपे-
यदाने च प्रहव[2]णेषु द्विगुणमंशं दद्यात् ।

प्रेक्षायामनंशदः स्वस्वजनो न प्रेक्षेत । प्रच्छन्नश्रवणेक्षणे
च सर्वहिते च कर्मणि निग्रहेण द्विगुणमंशं दद्यात् ।

सर्वहितमेकस्य ब्रुवतः कुर्युराज्ञाम्। अकरणे द्वादशपणो दण्डः।

तं चेत्सम्भूय वा हन्युः, पृथगेषामपराधाद्विगुणो दण्डः ।
उपहन्तृषु विशिष्टः ब्राह्मणतश्चैषां ज्येष्ठं नियम्येत ।

प्रहव[4]णेषु चैषां ब्राह्मणेनाकामः[5] कुर्युः । अंशं च लभेरन् ।

तेन देशजातिकुलसङ्घानां समयस्यानपाकर्म व्याख्यातम् । 220·3

राजादेशाद्दितान् सेतून् कुर्वतां पथि सङ्क्रमात् । 221·1

ग्रामशोभाश्च रक्षाश्च तेषां प्रियहितं चरेत् ॥

इति धर्मस्थीये वास्तुके विवीतक्षेत्रपथहिंसा दशमोऽध्यायः
वास्तुकं समाप्तम्
समयस्यानपाकर्म च । आदितस्सप्तषष्टितमोऽध्यायः

---

[1] दाने· [2] प्रवहणेषु [3] नस्व· [4] प्रवह· [5] मा:

## ६३. ऋणादानम्.

221·3 सपादपणा धर्म्या मासवृद्धिः पणशतस्य ।

पञ्चपणा व्यावहारिकी ।

दशपणा[1] कान्तारकाणां ।

विंशतिपणा सामुद्राणां । ततः परं कर्तुः कारयितुश्च पूर्वस्साहसदण्डः । श्रोतृणामेकैकं प्रत्यर्धदण्डः ।

राजान्ययोग[2]क्षेमवहे तु धनिकधारणिकयोश्चरित्रमपेक्षेत । धान्यवृद्धिस्सस्यनिष्पत्तावुपार्धावरं मूल्यकृता वर्धेत । प्रक्षेपवृद्धिरुदयादर्धं सन्निधानसन्ना वार्षिकी देया । चिरप्रवासस्तम्भप्रविष्टो वा मूल्यद्विगुणं दद्यात्। अकृत्वा वृद्धिं साधयतो[3] वा मूल्यं वा वृद्धिमारोप्य श्रावयतो बन्धचतुर्गुणो दण्डः । तुच्छचतुरश्रावणायामभूतचतुर्गुणः । तस्य त्रिभागमादाता[4] दद्यात् । शेषं प्रदाता ।

दीर्घसत्रव्याधिगुरुकुलोपरुद्धं बालमसारं वा नर्णम[5] नुवर्धेत। मुच्यमानमृणमप्रतिगृह्णतो द्वादशपणो दण्डः । कारणापदेशेन निवृत्तवृद्धिकमन्यत्र तिष्ठेत् । दशवर्षोपेक्षितमृणमप्रतिग्राह्यमन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः ।

222·5 प्रेतस्य पुत्राः कुसीदं दद्युः । दायादा वा रिक्थहरास्सहग्राहिणः प्रतिभुवो वा । न प्रातिभाव्यमन्यदसारं बालप्रातिभा-

---

[1] याज्ञवल्क्यः II 38. [2] न्यदण्ड. [3] वर्धयतो, [4] या [5] वर्णम.

व्यम् । असङ्ख्यातदेशकालं तु पुत्रा पौत्रा दायादा वा रिक्थं हरमाणा दद्युः । जीवितविवाहभूमिप्रातिभाव्यमसङ्ख्यातदेशकालं तु पुत्राः पौत्रा वा वहेयुः । 222'6

नानर्णसमवाये तु नैको[1] द्वौ युगपदभिवदेयातां अन्यत्र प्रतिष्ठमानात् । तत्रापि गृहीतानुपूर्व्या राजश्रोत्राय[2] द्रव्यं वा पूर्वं प्रतिपादयेत् ।

दंपत्योः पितापुत्रयोः भ्रातॄणां चाविभक्तानां परस्परकृतमृणमसाध्यम् ।

अग्राह्याः कर्मकालेषु कर्षका राजपुरुषाश्च । स्त्री वा प्रतिश्रावणी[3] पतिकृतं ऋणं अन्यत्र गोपालकार्द्धसीति[4] केभ्यः ॥

पतिस्तु ग्राह्यः । स्त्रीकृतं ऋणमप्रतिविधाय प्रोषित इति सम्प्रतिपत्तावुत्तमः । असम्प्रतिंपत्तौ तु साक्षिणः प्रमाणम् ।

प्रात्ययिकाश्शुचयोऽनुमता वा त्रयोऽवरार्थ्याः[5] । पक्षानुमतौ वा द्वौ । ऋणं प्रति न त्वेवैकः ।

प्रतिषिद्धा[6]स्स्यालसहायाबद्ध[7]धनिकधारणिकवैरिन्यङ्गधृतदण्डाः । पूर्वे चाव्यवहार्याः राजश्रोत्रियग्रामभृतकुष्ठिव्रणिनः पतितचण्डालकुत्सितकर्माणोऽन्धबधिरमूकाहंवादिनः स्त्रीराज- 223'6

1 नेकं· 2 श्रोत्रिय· 3 चाप्रतिश्राविणी· 4 गोपालकार्धसीति·
5 पराध्यार्ः· 6 प्रतिविद्धा· 7 हायान्वर्थी·

224'1 पुरुषाश्चान्यत्र स्ववर्गेभ्यः। पारुष्यस्तेयसङ्ग्रहणेषु तु वैरिस्याललसहायवर्जाः। रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्यात् राजतापसवर्जम्।

स्वामिनो भृत्यानामृत्विगाचार्याश्शिष्याणां मातापितरौ पुत्राणां चानिग्रहण[1]साक्ष्यं कुर्युः तेषामितरे वा। परस्पराभियोगे चैषामुत्तमाः। परोक्ता दशबन्धं[2] दद्युरवीराः पञ्चबन्धम्।

इति साक्ष्यधिकारः।

ब्राह्मणोदकुम्भाग्निसकाशे साक्षिणः परिगृह्णीयात्। तत्र ब्राह्मणं ब्रूयात्—"सत्यं ब्रूहीति"। राजन्यं वैश्यं वा—"मा तवेष्टापूर्तफलं कपालहस्तश्शत्रुबलं भिक्षार्थी गच्छे" रिति। शूद्रजन्म—"मरणान्तरे यद्वः पुण्यफलं तद्राजानं गच्छेत्। राज्ञश्च किल्बिषं युष्मान्. अन्यथावादे दण्डश्चानुबन्धः। पश्चादपि ज्ञायेत यथादृष्टश्रुतम्।

एकमन्त्रास्सत्यमवहरतेति" अनवहरतां सप्तरात्रादूर्ध्वं द्वादशपणो दण्डः। त्रिपक्षादूर्ध्वमभियोगं दद्युः।

225'2 साक्षिभेदे यतो बहवः शुचयोऽनुमता वा ततो नियच्छेयुः। मध्यं वा गृह्णीयुः। तद्वा द्रव्यं राजा हरेत्। साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ता बन्धं दद्यात्। अतिरिक्तं वा ब्रूयुस्तदतिरिक्तं राजा हरेत्। बालिश्यादभियोक्तुर्वा दुश्श्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षिप्रत्ययमेव स्यात्।

[1] चानिग्रहे ग.  [2] बन्धनम्.

"साक्षिबालिश्येष्वेव पृथगनुपयोगे देशकालकार्याणां पूर्वमध्यमोत्तमा दण्डाः" इत्यौशनसाः । 225·3

"कूटसाक्षिणो यमर्थमभूतं वा नाशयेयुस्तद्दशगुणं दण्डं[1] दद्यु" रिति मानवाः ।

"बालिश्याद् विसंवादयतां चित्रो घातः" इति बार्हस्पत्याः ।

"न" इति कौटि[2]ल्यः। ध्रुवं हि साक्षिभिश्श्रोतव्यम्। अशृण्वतां चतुर्विंशतिपणो दण्डः ततोऽर्धमब्रुवाणाम्[3] ।

देशकालाविदूरस्थान् साक्षिणः प्रतिपादयेत् ।
दूरस्थानप्रसारान्वा स्वामिवाक्येन साधयेत् ॥

इति धर्मस्थीये ऋणादानं एकादशोध्यायः
आदितो ऽष्टषाष्टितमः.

## ६४ प्रक. औपनिधिकम्.

उपनिधिः ऋणेन व्याख्यातः। परचक्राटविकाभ्यां दुर्गराष्ट्रविलोपे वा, प्रतिरोधकैर्वा ग्रामसार्थव्रजविलोपे, चक्रयुक्ते नाशे वा, ग्राममध्याग्न्युदकाबाधे वा किञ्चिदमोक्षयमाणे कुप्य 226·2 मनिर्हार्यवर्जमेकदेशमुक्तद्रव्ये वा, ज्वालावेगोपरुद्धे वा, नावि निमग्नायां मुषितायां स्वयमुपरूढो नोपनिधिमभ्याभवेत् ॥

[1] नास्ति· [2] ट· [3] मब्रुवाणानां·

226·2 उपनिधिभोक्ता देशकालानुरूपं भोगवेतनं दद्यात् । द्वादशपणं च दण्डम् । उपभोगनिमित्तम् नष्टं [1]वाऽभ्याभवेच्चतुर्विंशतिपणश्च दण्डः । अन्यथा वा निष्पतने ॥

प्रेत[2]व्यसनंगतं वा नोपनिधिमभ्याभवेत् ॥

आधानविक्रयापव्ययनेषु चास्य चतुर्गुणपञ्चबन्धो दण्डः । परिवर्तने निष्पातने वा मूल्यसमः ॥

तेन आधिप्रणाशोपभोगविक्रयाधानापहारा व्याख्याताः ॥

नाधिस्सोपकारः सीदेन्न चास्य मूल्यं वर्धेत । नि[3]रुपकारस्सीदेन्मूल्यं चास्य वर्धेत[3] ॥

[4]उपस्थितस्याधिमप्रयच्छतो द्वादशपणो दण्डः ॥

प्रयोजकासन्निधाने वा ग्रामवृद्धेषु स्थापयित्वा निष्क्रयमाधिं प्रतिपद्येत । निवृत्तवृद्धिको[5]वाऽऽधिस्तत्कालकृतमूल्यस्तत्रैवावातिष्ठेत । अनाशविनाशकरणाधिष्ठितो वा धारणस[6]न्निधाने वा विनाशभयादुद्गतार्घं धर्मस्थानुज्ञातो विक्रीणीत । आधिपालप्रत्ययो वा ॥

227·4 स्थावरस्तु प्रयासभोग्यः फलभोग्यो वा प्रक्षेपवृद्धिमूल्य[7]शुद्धमाजीव[8]ममूल्यक्षयेणोपनयेत् ॥

---

[1] विनष्टं· [2] प्रेतं [3] "निरु—र्धेत" इति पाठस्थाने "अन्यत्र निसर्गात्" इति पाठः· [4] याज्ञवल्क्यः II, 62—64—अत्रास्यार्थशास्त्रस्य याज्ञवल्क्यस्मृतेश्चेतरस्मृत्यसाधारणमानुपूर्वीसाम्यं परिदृश्यते एवमुत्तरत्रापि सूचितस्थलेष्ववगन्तव्यम् [5] वृत्तिको· [6] रण.क· [7] ल्यं· [8] वं मू·

अनिसृष्टोपभोक्ता मूल्यशुद्धमाजीवं बन्धं च दद्यात्। 227·5
शेषमुपनिधिना व्याख्यातम् ॥

एतेनादेशोऽन्वाधिश्च व्याख्यातौ ॥

सार्थेनान्वाधिहस्तो वा प्रदिष्टां भूमिमप्राप्तश्चोरैर्भग्नोत्सृष्टो वा नान्वाधिमभ्याभवेत्। अन्तरे वा मृतस्य दायादोऽपि नाभ्याभवेत्। शेषमुपनिधिना व्याख्यातम् ॥

याचितकमवक्रीतकं वा यथाविधं गृह्णीयुस्तथाविधमेव अर्पयेयुः ॥

भ्रेषोपनिपाताभ्यां देशकालोपरोधि दत्तं नष्टं विनष्टं वा नाभ्याभवेयुः ॥

शेषमुपनिधिना व्याख्यातम् ॥

वैयावृत्यविक्रयस्तु—वैयावृत्यकरा यथादेशकालं विक्रीणानां[1]पण्यं यथाजातमूल्यमुदयं[2] च दद्युः ॥

शेषमुपनिधिना व्याख्यातम् ॥

देशकालातिपातने वा परिहीणं सम्प्रदानकालिकेन अर्घेण मौल्य[3]मुदयं च दद्युः ॥

यथासंभाषितं वा विक्रीणाना नोदयमधिगच्छेयुः मूल्यमेव दद्युः। अर्घपतने वा परिहीणं यथापरिहीण[4]मूल्यमूनं दद्युः॥ 228·5

[1] णाना:· [2] भयं· [3] मूल्य· [4] णं·

228·6 सांव्यवहारिकेषु वा प्रात्ययिकेष्वराजवाच्येषु भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वा मूल्यमपि न दद्युः। देशकालान्तरितानां तु पण्यानां क्षयव्ययशुद्ध[1]मूल्यमुदयं च दद्युः। पण्यसमवायानां च प्रत्यंशम्। शेषमुपनिधिना व्याख्यातम्॥

तेन[2] वैयावृत्यविक्रयो व्याख्यातः॥

निक्षेपश्चोपनिधिना॥

तमन्येन निक्षिप्तमन्यस्यार्पयतो हीयते। निक्षेपापहारे पूर्वापदानं निक्षेप्तारश्च प्रमाणम्॥

अशुचयो हि कारवः। नैषां कारणपूर्वो निक्षेपधर्मः। कारण[3]हीनं निक्षेपमपव्ययमानं गूढभित्तिन्यस्तान् साक्षिणो निक्षेप्ता रहस्यप्रणिपातेन प्रज्ञापयेत्॥

वनान्ते वा मध्यप्रवहणे वि[4]श्वासेन रहसि वृद्धो व्याधितो वैदेहकः कश्चित्कृतलक्षणं[5] द्रव्यमस्य हस्ते निक्षिप्यापगच्छेत्। तस्य प्रतिदेशेन पुत्रो भ्राता वाऽभिगम्य निक्षेपं याचेत। दाने शुद्धिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात्॥

प्रव्रज्याभिमुखो वा श्रद्धेयः कश्चित्कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्य प्रतिष्ठेत। ततः कालान्तरागतो याचेत। दाने शुचिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात्॥

229·6 कृतलक्षणेन वा द्रव्येण प्रत्यानयने तं[6]बालिशजातीयो वा रात्रौ राजदायिकाक्षणभीतः सारमस्य हस्ते निक्षिप्यापगच्छेत्।

1 शुद्धं· 2 एतेन· 3 करण· 4 हणवि· 5 लक्षं· 6 प्रत्यानयेदेनं·

स एनं बन्धनागारगतो याचेत । दाने शुचिरन्यथा निक्षेपं 330·1
स्तेयदण्डं च दद्यात् ॥

अभिज्ञानेन चास्य गृहे जनमुभयं याचेत । अन्यतरादाने यथोक्तं पुरस्तात् ॥

द्रव्यभोगानामागमं चास्यानुयुञ्जीत । तस्य चार्थस्य व्यवहारोपलिङ्गनमभियोक्तुश्चार्थसामर्थ्यम् ॥

एतेन मिथस्समवायो व्याख्यातः ॥

तस्मात्साक्षिमदच्छन्नं कुर्यात्सम्यग्विभाषितम् ।
स्वे परे वा जने कार्यं देशकालाग्रवर्णतः ॥

इति धर्मस्थीये औपनिधिकं द्वादशोऽध्यायः
आदित एकोनसप्ततिः ॥



## ६५ प्रक. दासकल्पः.

उदरदासवर्जमार्यप्राणमप्राप्तव्यवहारं शूद्रं विक्रयाधानं नयत[1]स्स्वजनस्य द्वादशपणो दण्डः । वैश्यं द्विगुणः । क्षत्रियं त्रिगुणः । ब्राह्मणं चतुर्गुणः । परजनस्य पूर्वमध्यमोत्तमवधा दण्डाः क्रेतृश्रोतॄणां च ॥

म्लेच्छानामदोषः प्रजां विक्रेतुमाधातुं वा ॥

न त्वेवार्यस्य दासभावः ॥ 231·1

[1] तरयत

231.2 अथ वाऽऽर्यमाधाय कुलबन्धनत्तूर्याणामापदि निष्क्रयं चाधिगम्य बालं साहाय्यदातारं वा पूर्वं निष्क्रीणीरन् ॥

सकृदात्माधाता निष्पतितः सीदेत् । द्विरन्येनाहितकः । सकृदुभौ परविषयाभिमुखौ ॥

वित्तापहारिणो वा दासस्यार्यभावमपहरतोऽर्धदण्डः। निष्पतितप्रेतव्यसनिनामाधाता मूल्यं भजेत ॥

प्रेतविण्मूत्रोच्छिष्टग्राहिणा[1] माहितस्य नग्नस्तापनं दण्डप्रेषणमतिक्रमणं च स्त्रीणां मूल्यनाशकरम् । धात्रीपरिचारिकार्धसीतिकोपचारिकाणां च मोक्षकरम्। सिद्धमुपचारकस्याभिप्रजातस्य अपक्रमणम् ॥

धात्रीमाहितिकां वाकामां स्ववशामधिगच्छतः पूर्वस्साहसदण्डः । परवशां मध्यमः । कन्यामाहितिकां वा स्वयमन्येन वा दूषयतः मूल्यनाशः शुल्कं तद्द्विगुणश्च दण्डः ॥

आत्मविक्रयिणः प्रजामार्यां विद्यात् ॥

आत्माधिगतं स्वामिकर्माविरुद्धं लभेत, पित्र्यं च दायम् ॥

मूल्येन चार्यत्वं गच्छेत् ॥

तेनोदरदासाहितकौ व्याख्यातौ ॥

232.4 प्रक्षेपानुरूपश्चास्य निष्क्रयः । दण्डप्रणीतः कर्मणा दण्डमुपनयेत् ॥

---

1 ग्राहणा·

आर्यप्राणो ध्वजाहृतः कर्मकालानुरूपेण मूल्यार्धेन वा- 232.4
विमुच्येत ॥

गृहेजातदायागतलब्धक्रीतानामन्यतमं दासमूनाष्टवर्षं वि-
बन्धुमकामं नीचे कर्मणि विदेशे दासीं वा सगर्भामप्रतिविहित-
गर्भभर्मण्यां विक्रयाधानं नयतः पूर्वस्साहसदण्डः क्रेतृश्रो-
तृणां च ॥

दासमनुरूपेण निष्क्रयेणार्यमकुर्वतो द्वादशपणो दण्डः ।
संरोधश्चाकारणात् ॥

दासद्रव्यस्य ज्ञातयो दायादाः । तेषां अभावे स्वामी ॥

स्वामिनस्त[1]स्यां दास्यां जातं समातृकं अदासं विद्यात् ।
गृह्या चेत् कुटुम्बार्थचिन्तनी माता भ्राता भगिनी चास्याः
अदासास्स्युः ॥

दासं दासीं वा निष्क्रीय पुनर्विक्रयाधानं नयतो द्वाद-
शपणो दण्डः अन्यत्र स्वयंवादिभ्यः ॥

इति दासकल्पः ॥

कर्मकरस्य कर्मसम्बन्धमासन्ना विद्युः । यथासंभाषितं
वेतनं लभेत। कर्मकालानुरूपमसंभाषितवेतनम्[2] । कर्षकस्सस्या-
नां, गोपालकस्सार्पिषां वैदेहकः पण्यानामात्मना व्यवहृतानां,
दशभागमसंभाषितवेतनो लभेत ॥

संभाषितवेतनस्तु यथासंभाषितम् ॥ 233.3

---

[1] स्स्वस्यां· [2] तनः·

233.4 कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपरिचारकादिराशाकारिकवर्गस्तु यथाऽन्यस्ताद्विधः कुर्यात्, यथा वा कुशलाः कल्पयेयुः, तथा वेतनं लभेत। साक्षिप्रत्ययमेव स्यात्। साक्षिणामभावे यतः कर्म ततोऽनुयुञ्जीत ॥

वेतनादाने दशबन्धो दण्डः। षट्पणो वा। अपव्ययमाने द्वादशपणो दण्डः पञ्चबन्धो वा ॥

नदीवेगज्वालास्तेनव्यालोपरुद्धः[1] सर्वस्वपुत्रदारात्मदानेनार्तस्त्रातारमाहूय निस्तीर्णः कुशलप्रदिष्टं वेतनं दद्यात् ॥

तेन सर्वत्रार्तदानानुशया व्याख्याताः ॥

लभेत पुंश्चली भोगं सङ्गमस्योपलिङ्गनात्।
अतियाच्ञा तु जीयेत दौर्मत्याविनयेन वा ॥

इति धर्मस्थीये दासकर्मकरकल्पे दासकल्पः कर्मकरकल्पे स्वाम्यधिकारः त्रयोदशोऽध्यायः
आदितस्सप्ततिरध्यायाः

## ६६ प्रक. कर्मकरकल्पः संभूय समुत्थानम्.

गृहीत्वा वेतनं कर्म अकुर्वतो भृतकस्य द्वादशपणो दण्डः संरोधश्चाकरणात् ॥

234.4 अशक्तः कुत्सिते कर्मणि व्याधौ व्यसने वा अनुशयं लभेत परेण वा कारयितुम्। तस्य व्ययं क[2]र्मणा लभेत ॥

---

[1] रुद्धः [2] व्ययक

"भर्ता वा कारयन्नान्यस्त्वया कारयितव्यो मया वा नान्यस्य कर्तव्यम्" इत्यपरे[1] ॥ 234·4

भर्तुरकारयतो भृतकस्याकुर्वतो वा द्वादशपणो दण्डः। कर्मनिष्ठापने भर्तुरन्यत्र गृहीतवेतनो नासकामः कुर्यात् ॥

"उपस्थितमकारयतः कृतमेव विद्यात्" इत्याचार्याः ॥

"न" इति कौटि[2]ल्यः। कृतस्य वेतनं, नाकृतस्यास्ति। स चेदल्पमपि कारयित्वा न[3] कारयेत्। कृतमेव अस्य विद्यात्। देशकालातिपातनेन कर्मणामन्यथा करणे वा न[4] सकामः कृतमनुमन्येत। संभाषितादधिकक्रियायां प्रयासा-न्मोघं[5] कुर्यात् ॥

तेन सङ्घभृता व्याख्याताः। तेषामाधिस्सप्तरात्रमासीत। ततोऽन्यमुपस्थापयेत्। कर्मनिष्पाकं च। न चानिवेद्य भर्तुस्स-ङ्घः किञ्चित्परिहरेत्, अपनयेद्वा। तस्यातिक्रमे चतुर्विंशति-पणो दण्डः। सङ्घेन परिहृतस्यार्धदण्डः ॥

इति भृतकाधिकारः ॥

सङ्घभृतास्संभूयसमुत्थातारो वा यथासंभाषितं वेतनं समं वा विभजेरन् ॥

कर्षकवैदेहका वा सस्यपण्यारम्भपर्यवसानान्तरे सन्नस्य यथाकृतस्य कर्मणः प्रत्यंशं दद्युः। पुरुषोपस्थाने समग्रमंशं दद्युः। संसिद्धे तु धृत[6]पण्ये सन्नस्य तदानीमेव प्रत्यंशं दद्युः। सामान्या हि पथि सिद्धिश्चासिद्धिश्च ॥ 235·6

---

1 इत्यविरोधे भर्तुरकारयतो·  2 ट·  3 नास्ति·  4 ना·
5 प्रयासं· मोघं  6 तूद्धृत·

236·2 प्रक्रान्ते तु कर्मणि स्वस्थस्यापक्रमतो द्वादशपणो दण्डः। न च प्राकाम्यमपक्रमणे॥

चोरं त्वभयपूर्वः[1] कर्मणः प्रसंशेन ग्राहयेद्दद्यात् प्रसंशमभयं च। पुनस्स्तेये प्रवासनमन्यत्र गमनं च महापराधे तु दूष्यवदाचरेत्।

याजकाः स्वप्रचारद्रव्यवर्जं यथासंभाषितं वेतनं समं वा विभजेरन्। अग्निष्टोमादिषु च क्रतुषु दीक्षणादूर्ध्वं याजकस्सन्नः पञ्चममंशं लभेत॥

सोमविक्रयादूर्ध्वं चतुर्थमंशम्॥

मध्यमोपसदः प्रवर्ग्योद्वासनादूर्ध्वं द्वितीयमंशम्[2]।

मयादूर्ध्वमर्धमंशम्।

सुत्ये प्रातस्सवनादूर्ध्वं पादोनमंशम्।

माध्यन्दिनात् सवनादूर्ध्वं समग्रमंशं लभेत। नीता हि दक्षिणा भवन्ति।

बृहस्पतिसवनवर्जं[3] प्रतिसवनं हि दक्षिणा दीयते। तेनाहर्गणदक्षिणा व्याख्याताः।

सन्नानामादशाहोरात्राच्छेषभृताः कर्म कुर्युः। अन्ये वा स्वप्रत्ययाः।

कर्मण्यसमाप्ते तु यजमानस्सीदेत्, ऋत्विजः कर्म समापय्य

1 पूर्वं. 2 लभेत. 3 ववर्जं.

दक्षिणां हरेयुः । असमाप्ते तु कर्मणि याज्यं याजकं वा त्यजतः 237.1
पूर्वस्साहसदण्डः ।

अनाहिताग्निश्शतगुरयज्वा च सहस्रगुः ।
सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः ॥
असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः ।
अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात् ॥

इति धर्मस्थीये दासकर्मकरकल्पे भृतकाधिकारः
संभूयसमुत्थानं चतुर्दशोऽध्यायः
आदित एकसप्ततिः

---

## ६७ प्रक. विक्रीतक्रीतानुशयः.

विक्रीय[1] पण्यमप्रयच्छतो द्वादशपणो दण्डः अन्यत्र दोषोपनिपाताविषह्येभ्यः ।

पण्यदोषो दोषः। राजचोराग्न्युदकबाध उपनिपातः। बहुगुणहीनमार्तकृतं वाऽविषह्यम् ।

वैदेहकानामेकरात्रमनुशयः । कर्षकाणां त्रिरात्रम् । गोरक्षकाणां पञ्चरात्रम् । व्यामिश्राणां उत्तमानां च वर्णानां विवृत्ति-[2]विक्रये सप्तरात्रम् ।

आतिपातिकानां पण्यानामन्यत्राविक्रेयमित्यविरोधेनानुशयो 238.2
देयः । तस्यातिक्रमे चतुर्विंशतिपणो दण्डः, पण्यदशभागो वा ।

---

[1] विक्रय· [2] निवृत्ति·

238·3 क्रीत्वा पण्यमप्रतिगृह्णतो द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः ।

समानश्चानुशयः विक्रेतुरनुशयेन । विवाहानां तु त्रयाणां पूर्वेषां वर्णानां पाणिग्रहणात्सिद्धमुपावर्तनम् । शूद्राणां च प्रकर्मणाम् । वृत्तपाणिग्रहणयोरपि दोषमौपशायिकं दृष्ट्वा सिद्धमुपावर्तनम् । न त्वेवाभिप्रजातयोः ।

कन्यादोषमौपशायिकमनाख्याय प्रयच्छतः कन्यां षण्णवतिर्दण्डः शुल्कस्त्रीधनप्रतिदानं च ।

वरयितुर्वा वरदोषमनाख्याय विन्दतो द्विगुणः । शुल्कस्त्रीधननाशश्च ।

द्विपदचतुष्पदानां तु कुष्ठव्याधितानामशुचीनामुत्साहस्वास्थ्यशुचीनामाख्याने द्वादशपणो दण्डः ।

आ त्रिपक्षादिति चतुष्पदानामुपावर्तनम् ।

आ संवत्सरादिति मनुष्याणाम् । तावता हि कालेन शक्यं शौचाशौचौ ज्ञातुमिति ।

239·2 दाता प्रतिगृहीता च स्यातां नोपहतौ यथा ।

दाने क्रये वाऽनुशयं तथा कुर्युस्सभासदः ॥

इति धर्मस्थीये विक्रीतक्रीतानुशयः पञ्चदशोऽध्यायः

आदितो द्विसप्ततितमः.

# ६८-७० प्रक. दत्तस्यानपाकर्म अस्वामिविक्रयः स्वस्वामिसंबन्धः.

दत्तस्याप्रदानमृणादानेन व्याख्यातम् ।

दत्तमव्यवहार्यमेकत्रानुशये वर्तेत ।

सर्वस्वं पुत्रदारं आत्मानं प्रदायानुशयिनः[1] प्रयच्छेत । धर्मदानमसाधुषु कर्मसु चौपघातिकेषु वा अर्थदानम[2]नुपकारिषु अपकारिषु वा कामदानमनर्हेषु च यथा च[3] दाता प्रतिग्रहीता च नोपहतौ स्यातां तथानुशयं कुशलाः कल्पयेयुः ।

दण्डभयादाक्रोशभयादर्थ[4]भयाद्वा भयदानं प्रतिगृह्णतस्स्तेयदण्डः प्रयच्छतश्च । दोषदानं परहिंसायाम् ।

राज्ञामुपरि दर्पदानं च । तत्रोत्तमो दण्डः ।

प्रातिभाव्यदण्डः शुल्कशेषमास्थिकं[5] सौरिकं कामदानं च नाकामः पुत्रो दायादो वा रिक्थहरो दद्यात् ।

इति दत्तस्यानपाकर्म ॥

अस्वामिविक्रयस्तु—[6]नष्टापहृतमासाद्य स्वामी धर्मस्थेन ग्राहयेत् । देशकालातिपत्तौ वा स्वयं गृहीत्वोपहरेत् । धर्मस्थश्च स्वामिनमनुयुञ्जीत—"कुतस्ते लब्धम्" इति । स चेदाचारक्रमं दर्शयेत, न विक्रेतारं तस्य द्रव्यस्यातिसर्गेण मुच्येत। विक्रेता चेद्दृश्येत, मूल्यं स्तेयदण्डं च । स चेदपसारमधिगच्छेदपसरेदापसारक्षयादिति क्षये मूल्यं स्तेयदण्डं च दद्यात् । 240'4

1 शायिनः· 2 अर्थम· 3 वा· 4 क्रोशादनर्थ· 5 माक्षिकं·

6 याज्ञवल्क्यः २–१६९·

नाष्टिकं च स्वकरणं कृत्वा नष्टप्रत्याहृतं लभेत । स्वकर-
240·5 णाभावे पञ्चबन्धो दण्डः । तच्च द्रव्यं राजधर्म्यं स्यात् ।

नष्टापहृतमनिवेद्योत्कर्षतः स्वामिनः पूर्वः साहसदण्डः ।

शुल्कस्थाने नष्टापहृतोत्पन्नास्ति[1] ष्ठेत् । त्रिपक्षादूर्ध्वमनाभि-
सारं राजा हरेत्, स्वामी वा ।

[2]स्वकरणेन पञ्चपणिकं द्विपद्रूपस्य निष्क्रयं दद्यात्। चतु-
ष्पणिकमेकखुरस्य; द्विपणिकं गोमहिषस्य; पादिकं क्षुद्रप-
शूनां; रत्नसारफल्गुकुप्यानां पञ्चकं शतं दद्यात् ।

परचक्राटवीभृतं तु प्रत्यानीय राजा यथास्वं प्रयच्छेत् ।

चोरहृतमविद्यमानं स्वद्रव्येभ्यः प्रयच्छेत् । प्रत्यानेतुमशक्तो
वा स्वयंग्राहेणाहृतं[3] प्रत्यानीय तन्निष्क्रयं वा प्रयच्छेत् ।

परविषयाद्वा विक्रमेणानीतं यथाप्रदिष्टं राज्ञा भुञ्जीतान्यत्रा-
र्यप्राणेभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्च ।

इत्यस्वामिविक्रयः ॥

स्वस्वामिसंबन्धस्तु—भोगानुवृत्तिरुच्छिन्नदेशानां यथास्व[4]
द्रव्याणाम् ।

यत् स्वं द्रव्यमन्यैर्भुज्यमानं दशवर्षाण्युपेक्षेत, हीयेतास्य अ-
न्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः ।

241·6 विंशतिवर्षोपेक्षितमनु[5]वसितं वास्तु नानुयुञ्जीत ।

[1] न्नं ति. [2] याज्ञवल्क्यः २–१७४. [3] स्वयंग्राहिणाभृतं. [4] यथास्व. [5] मन.

ज्ञातयश्श्रोत्रियाः पाषण्डा वा राज्ञामसान्निधौ परवास्तुषु वि- 242'1
वसन्तो न भोगेन हरेयुः । उपनिधिमाधिं निधिं निक्षेपं स्त्रियं
सीमानं राजश्रोत्रियद्रव्याणि च ।

आश्रमिणः पाषण्डा वा महत्यवकाशे परस्परमबाधमाना वसे-
युः; अल्पां बाधां संहरन्[1] पूर्वागतो वा वासपर्यायं दद्यात् ।
अप्रदाता निरस्येत ।

वानप्रस्थयतिब्रह्मचारिणामाचार्यशिष्यधर्मभ्रातृसमानती-
र्थ्या रिक्थभाजः । क्रमेण विवादपदेषु चैषां यावन्तः पणाः
दण्डाः तावती रात्रीः क्षपणाभिषेकाग्निकार्यमहाकच्छवर्धनानि
राज्ञश्चरेयुः । अहिरण्यसुवर्णाः पाषण्डास्साधवस्ते यथास्वमुप-
वासव्रतैराराधयेयुः अन्यत्र पारुष्यस्तेयसाहससङ्ग्रहणेभ्यः । तेषु
यथोक्ता दण्डाः कार्याः ।

प्रव्रज्यासु यथा[2]चाराद्राजा दण्डेन वारयेत्।
धर्मो ह्यधर्मोपहतः शास्तारं हन्त्युपेक्षितः ॥

इति धर्मस्थीये अस्वामिविक्रयः स्वस्वामिसंबन्धः
षोडशोऽध्यायः आदितस्त्रिसप्ततिः

## ७१ प्रक. साहसम्.

साहसमन्वयवत्प्रसभकर्म ।
निरन्वये स्तेयमपव्ययने[3] च ।

---

[1] सहेरन्. [2] वृथा. [3] व्ययने.

243·1 "रत्नसारफल्गुकुप्यानां साहसे मूल्यसमो दण्डः" इति मानवाः।

"मूल्याद्द्विगुणः" इत्यौशनसाः।

"यथापराधः" इति कौटि[1]ल्यः।

"पुष्पफलशाकमूलकन्दपक्वान्नचर्मवेणुमृद्भाण्डादीनां क्षुद्रकद्रव्याणां द्वादशपणावरश्चतुर्विंशतिपणपरो दण्डः।

कालायसकाष्ठरज्जुद्रव्यक्षुद्रपशुवाटादीनां स्थूलकद्रव्याणां चतुर्विंशतिपणावरोऽष्टचत्वारिंशत्पणपरो दण्डः।

ताम्रवृत्तकंसकाचदन्तभाण्डादीनां स्थूलद्रव्याणां अष्टचत्वारिंशत्पणावरः षण्णवतिपरः पूर्वस्साहसदण्डः।

महापशुमनुष्यक्षेत्रगृहहिरण्यसुवर्णसूक्ष्मवस्त्रादीनां स्थूलकद्रव्याणां द्विशतावरः पञ्चशतपरः मध्यमस्साहसदण्डः।

स्त्रियं पुरुषं वाऽभिषह्य बध्नतो बन्धयतो बन्धं वा मोक्षयतः पञ्चशतावरः सहस्रपर उत्तमः साहसदण्डः" इत्याचार्याः।

यस्साहसं प्रतिपत्तेति कारयाति स गुणं[3] दद्यात्। 'यावद्धिरण्यमुपयोक्ष्यते तावद्दास्यामि' इति स चतुर्गुणं दण्डं दद्यात्।

"य 'एतावद्धिरण्यं दास्यामि' इति प्रमाणमुद्दिश्य कारयाति

243·8 स यथोक्तं हिरण्यं दण्डं च दद्यात्" इति बार्हस्पत्याः।

स चेत्कोपं मदं मोहं वाऽपदिशेत्, यथोक्तवद्दण्डमेनं कुर्यादिति कौटि[4]ल्यः।

---

1, 4 ट. 2 पटा. 3 द्विगुणं.

दण्डकर्मसु सर्वेषु रूपमष्टपणं शतम् । 244·1

शतात्परे तु व्याजीं च विद्यात्पञ्चपणं शतम् ॥

प्रजानां दोषबाहुल्याद्राज्ञां वा भावदोषतः ।

रूपव्याज्यावधर्मिष्ठे धर्म्यानुप्रकृतिस्स्मृता ॥

इति धर्मस्थीये साहसं सप्तदशोऽध्यायः

आदितश्चतुस्सप्ततिः

---

## ७२. प्रक. वाक्पारुष्यम्.

---

वाक्पारुष्यमुप[1]वादः कुत्सनमभिभर्त्सनमिति ।

शरीरप्रकृतिश्रुतवृत्तिजनपदानां शरीरोपवादेन काणखञ्जा-दिभिस्सत्ये त्रिपणो दण्डः । मिथ्योपवादे षट्पणो दण्डः ।

शोभनाक्षिदन्त इति काणखञ्जादीनां स्तुतिनिन्दायां द्वाद-शपणो दण्डः । कुष्ठोन्मादक्लैब्यादिभिः कुत्सायां च ।

सत्यमिथ्यास्तुतिनिन्दासु द्वादशपणोत्तरा दण्डाः तुल्येषु । विशिष्टेषु द्विगुणः । हीनेष्वर्धदण्डः । परस्त्रीषु द्विगुणः । प्रमादमदमोहादिभिरर्धदण्डाः ।

कुष्ठोन्मादयोश्चिकित्सकाः सन्निकृष्टाः पुमांसश्च प्रमाणम् ।

क्लीबभावे स्त्रियः मूत्रफेनं अप्सु विष्ठानिमज्जनं च । 245·2

---

1 मप·

245·3 प्रकृत्यो[1]पवादे ब्राह्मणक्षत्रियवैश्यशूद्रान्तावसायिनामपरेण पूर्वस्य त्रिपणोत्तराः दण्डाः। पूर्वेणापरस्य द्विपणाधराः। कुब्राह्मणादिभिश्च कुत्सायाम्।

तेन श्रुतोपवादः, वाग्जीविनानां कारुकुशीलवानां वृत्त्युपवादः, प्राज्जूणक[2] गान्धारादीनां च जनपदोपवादा व्याख्याताः। यः परं "एवं त्वां करिष्यामि" इति करणेनाभिभर्त्सयदेकरणे, यस्तस्य करणे दण्डः ततोऽर्धदण्डं दद्यात्।

अशक्तः कोपं मदं मोहं वाऽपादिशेत्, द्वादशपणं द[3]द्यात्।

जातवैराशयः शक्तश्चापकर्तुं यावज्जीविका[4]वस्थं दद्यात्।

स्वदेशग्रामयोः पूर्वं मध्यमं जातिसङ्घयोः।
आक्रोशाद्देवचैत्यानां उत्तमं दण्डमर्हति॥

इति धर्मस्थीये वाक्पारुष्यं अष्टादशोऽध्यायः
आदितः पञ्चसप्ततिः

## ७३ प्रक. दण्डपारुष्यम्.

246·3 दण्डपारुष्यं स्पर्शनमवगूर्णं प्रहतमिति[5]।

नाभेरधः कायं हस्तपङ्कभस्मपांसुभिरिति स्पृशतस्त्रिपणो दण्डः।

---

1 त्यु· 2 प्राणक· 3 दण्डं द· 4 ता· 5 तस्योपादिष्टं त्रैविध्यं हीनमध्योत्तमक्रमात्। अपगूरणनिश्शङ्कपातनक्षतदर्शनैः॥' इति विज्ञानेश्वरीये नारदः.

तैरेवामेध्यैः पादष्ठीवनिका[1]भ्यां च षट्पणः छर्दिमूत्रपुरीषादिभिर्द्वादशपणः। नाभेरुपरि द्विगुणाः। शिरसि चतुर्गुणाः समेषु। 246·4

विशिष्टेषु द्विगुणाः। हीनेषु अर्धदण्डाः परस्त्रीषु द्विगुणाः। प्रमादमदमोहादिभिरर्धदण्डाः।

पादवस्त्रहस्तकेशावलम्बनेषु षट्पणोत्तरा दण्डाः[2]।
पीडनावेष्टनाञ्जनभञ्जकर्षणाध्यासनेषु पूर्वस्साहसदण्डः।
पातयित्वाऽपक्रमतोऽर्धदण्डाः।
शूद्रो येनाङ्गेन ब्राह्मणमभिहन्यात्तदस्य छेदयेत्।
अवगूर्णे निष्क्रयः स्पर्शेनार्धदण्डः।
तेन चण्डालाशुचयो व्याख्याताः।

हस्तेनावगूर्णे त्रिपणावरो द्वादशपणपरो दण्डः। पादेन द्विगुणः। दुःखोत्पादनेन द्रव्येण पूर्वस्साहसदण्डः। प्राणाबाधिकेन मध्यमः।

[3]काष्ठलोष्टपाषाणलोहदण्डरज्जुद्रव्याणामन्यतमेन दुःखमशोणितमुपादयत[4]श्चतुर्विंशतिपणो दण्डः। शोणितोत्पादने द्विगुणः अन्यत्र दुष्टशोणितात्।

[5]मृतकल्पमशोणितं घ्नतो हस्तपादपारंचिकं वा कुर्वतः पूर्वस्साहसदण्डः।

[5]पाणिपाददन्तभङ्गे कर्णनासाच्छेदने व्रणविदारणे च अन्यत्र दुष्टव्रणेभ्यः। 247·4

---

[1] ष्ठीविक· [2] याज्ञ· II, 216—220 [3] याज्ञ II, 221; 223; 224. [4] मुत्पादयत· [5] करपाददतो भङ्गे छेदने कर्णनासयोः। मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा॥" इति दण्डपारुष्ये याज्ञवल्क्यः·

247·4 सक्थिग्रीवाभञ्जने नेत्रभेदने वा वाक्यचेष्टाभोजनोपरोधेषु[1] च मध्यमस्साहसदण्डः, समुत्थानव्ययश्च[2] देशकालातिपत्तौ कण्टकशोधनाय नीयते ।

महाजनस्यैकं घ्नतो प्रत्येकं द्विगुणो दण्डः ।

"पर्युषितं[3] कलहेऽनुप्रवेशो वा नाभियोज्य." इत्याचार्याः ।

"नास्त्यपकारिणो मोक्षः" इति कौटि[4]ल्यः ।

"कलहे पूर्वागतो जयत्यक्षममाणो हि प्रधावति" इत्याचार्याः ।

'न' इति कौटि[4]ल्यः । पूर्वं पश्चाद्वाऽऽगतस्य[5] साक्षिणः प्रमाणम् । असाक्षिके घातः कलहोपलिङ्गनं वा ।

घाताभियोगमप्रतिब्रुवतस्तदहरेव पश्चात्कारः ।

कलहे द्रव्यमपहरतो दशपणो दण्डः ।

क्षुद्रकद्रव्यहिंसायां तच्च तावच्च दण्डः ।

स्थूलकद्रव्यहिंसायां तच्च द्विगुणश्च दण्डः ।

वस्त्राभरणहिरण्यसुवर्णभाण्डहिंसायां तच्च पूर्वश्च साहसदण्डः ।

248·7 [6]परकुड्यमभिघातेन क्षोभयतस्त्रिपणो दण्डः । छेदनभेदने षट्पणः प्रतीकारश्च ।

---

1 भोजनोपकारोपरोधेषु· 2 " दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् । दद्यो दण्डं च—" इति याज्ञवल्क्यः· 3 षितः· 4 ट· 5 भिगतस्य· 6 याज्ञ· II,226—9.

[1] दुःखोत्पादनं द्रव्यमस्य वेश्मनि प्रक्षिपतो द्वादशपणो 248·8
दण्डः । प्राणाबाधिकं पूर्वस्साहसदण्डः ।

क्षुद्रपशूनां काष्ठादिभिर्दुःखोत्पादने पणो द्विपणो वा दण्डः । शोणितोत्पादने द्विगुणः ।

महापशूनामेतेष्वेवस्था[2]नेषु द्विगुणो दण्डः, समुत्थानव्ययश्च ।

पुरोवन[3]स्पतीनां पुष्पफलच्छायावतां प्ररोहच्छेदने षट्पणः। क्षुद्रशाखाच्छेदने द्वादशपणः पीनशाखाच्छेदने चतुर्विंशतिपणः । स्कन्धवधे पूर्वस्साहसदण्डः । समुच्छित्तौ मध्यमः ।

पुष्पफलच्छायावद्गुल्मलतास्वर्धदण्डः । पुण्यस्थानतपोवनश्मशानद्रुमेषु च ।

सीमवृक्षेषु चैत्येषु द्रुमेष्वालक्षितेषु च ।
त एव द्विगुणा दण्डाः कार्या राजवनेषु च[4] ॥

इति धर्मस्थीये दण्डपारुष्यं एकोनविंशोऽध्यायः
आदितष्षट्सप्ततिः.

## ७४–७५ प्रक. द्यूतसमाह्वयं प्रकीर्णकानि.

द्यूताध्यक्षो द्यूतमेकमुखं कारयेत् अन्यत्र दीव्यतो द्वादश- 249·7
पणो दण्डः गूढाजीविज्ञापनार्थम्[5] ।

[1]; [4] याज्ञ. II; 229—32. [2] तेष्वेव स्था· [3] पुरोपवनवन.

[5] ‘ द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात् ’ इति याज्ञवल्क्यः.

250·1 "द्यूताभियोगे जेतुः पूर्वस्साहसदण्डः । पराजितस्य मध्यमः । बालिशजातीयो ह्येष जेतुकामः पराजयं न क्षमते" इत्याचार्याः । 'न' इति कौटि[1]ल्यः—पराजितश्च[2] द्विगुणदण्डः क्रियेत, न कश्चन राजानमभिसरिष्यति । प्रायशो हि कितवाः कूटदेविनः ; तेषामध्यक्षाः शुद्धाः काकण्यक्षांश्च[3] स्थापयेयुः ।

काकण्यक्षाणामन्योपधाने द्वादशपणो दण्डः ।

कूटकर्मणि पूर्वस्साहसदण्डः, जितप्रत्यादानमुपधास्तेयदण्डश्च।

जितद्रव्यादध्यक्षः पञ्चकं शतमाददीत, काकण्यक्षारलाशलाकावक्रयमुदकभूमिकर्मक्रयं च । द्रव्याणामाधानं विक्रयं च कुर्यात् ।

अक्षभूमिहस्तदोषाणां चाप्रतिषेधने द्विगुणो दण्डः ।

तेन समाह्वयो व्याख्यातः अन्यत्र विद्याशिल्पसमाह्वयादिति।

प्रकीर्णकं तु याचितकावक्रीत[4]काहितकनिक्षेपकाणां यथादेशकालप्रदाने यामच्छायासमुपवेशसंस्थितीनां वा देशकालातिपातने गुल्मतर[5]देयं ब्राह्मणं साधयतः प्रतिवेशानुप्रवेशयोरुपरि निमन्त्रणे च द्वादशपणो दण्डः ।

[6]सन्दिष्टमर्थमप्रयच्छतो, भ्रातृभार्यां हस्तेन लङ्घयतो, रूपा-

251·2 जीवामन्योपरुद्धां गच्छतः, परवक्तव्यं पण्यं क्रीणानस्य, समुद्रं गृहमुद्भिन्दतः ; सामन्तचत्वारिंशत्कुल्याबाधामाचर[7]तश्चाष्टचत्वारिंशत्पणो दण्डः ।

---

[1] ट. [2] श्चत्. [3] णीरक्षांश्च. [4] कोपक्री. [5] कर.
[6] याज्ञ. II, 235-6 [7] माचरत.

[1]कुलनीवीग्राहकस्यापव्ययने, विधवां छन्दवासिनीं प्रसह्याधिचरतः चण्डालस्यार्यां स्पृशतः, प्रत्यासन्नमापद्यनभिधावतो, निष्कारणमभिधावनं कुर्वतश्शाक्याजीवकादीन् वृषलप्रव्रजितान् देवपितृकार्येषु भोजयतश्शत्यो दण्डः । 251·3

[2]शापथवाक्यानुयोगमनिसृष्टं कुर्वतो, युक्तकर्माणि चायुक्तस्य, क्षुद्रपशुवृषाणां पुंस्त्वोपघातिनो, दास्या गर्भमौषधेन पातयतश्च पूर्वस्साहसदण्डः ।

[3]पितापुत्रयोर्दम्पत्योर्भ्रातृभगिन्योर्मातुलभागिनेययोश्शिष्याचार्ययोर्वा परस्परमपतितं त्यजतस्सार्थाभिप्रयातं ग्राममध्ये वा त्यजतः पूर्वस्साहसदण्डः । कान्तारे मध्यमः । तन्निमित्तं भ्रेषयत उत्तमः सहप्रस्थायिष्वन्येष्वर्धदण्डाः ।

[4]पुरुषमबन्धनीयं बध्नतो बन्धयतो बन्धं वा मोक्षयतो बालमप्राप्तव्यवहारं बध्नतो बन्धयतो वा सहस्रदण्डः ।

पुरुषापराधविशेषेण दण्डविशेषः कार्यः ।

तीर्थकरस्तपस्वी व्याधितः क्षुत्पिपासाध्वक्लान्तास्तिरोजानपदो दण्डखेदी निष्किञ्चनश्चानुग्राह्याः । 252·4

[1] याज्ञ· II, 237· [2] याज्ञ· II, 238–9· अत्र राज्याधिकृतानधिकृतपरौ युक्तायुक्तशब्दौ योग्यायोग्यपरत्वेन याज्ञवल्क्यस्मृतौ प्रयुक्तौ स्तः·
[3] याज्ञ· II, 240· [4] याज्ञ· II, 246·

252·5 देवब्राह्मणतपस्विस्त्रीबालवृद्धव्याधितानामनाथानामनभिसरतां धर्मस्थाः कार्याणि कुर्युः । न च देशकालभोगच्छलेनातिहरेयुः ।

पूज्या विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः ।
एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः ।
समास्सर्वेषु भावेषु विश्वास्या लोकसंप्रियाः ॥

इति धर्मस्थीये द्यूतसमाह्वयं प्रकीर्णकानि विंशोऽध्यायः
आदितस्सप्तसप्ततिरध्यायः
एतावता कौटिल्यस्यार्थशास्त्रस्य धर्मस्थीयं
तृतीयमधिकरणं समाप्तम्.

# ४ अधि. कण्टकशोधनम्.

## ७६ प्रक. कारुकरक्षणम्.

253·1 प्रदेष्टारस्त्रयस्त्रयो वाऽ[1]मात्याः कण्टकशोधनं कुर्युः ।

अर्थ्यप्रतीकाराः कारुशासितारः सन्निक्षेप्तारः स्वचित्त[2]कारवः श्रेणीप्रमाणा निक्षेपं गृह्णीयुः । विपत्तौ श्रेणी निक्षेपं भजेत । निर्दिष्टदेशकालकार्यं च कर्म कुर्युः । अनिर्दिष्टदेशकालकार्यापदेशं कालातिपातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः ।

[1] नास्ति.  [2] स्ववित्त.

अन्यत्र भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वाऽभ्याभवयुः । 253·3
कार्यस्यान्यथाकरणे वेतननाशस्तद्द्विगुणश्च दण्डः ।

तन्तुवाया दशैकादशिकं सूत्रं वर्धयेयुः । वृद्धिच्छेदे छेदद्विगुणो दण्डः सूत्रमूल्यं वा न वेतनं; क्षौमकौशेयानामध्यर्धगुणं; पत्त्रोर्णाकम्बलदुकूलानां द्विगुणं; मानहीने हीनापहीनं वेतनं तद्द्विगुणश्च दण्डः । तुलाहीने हीनचतुर्गुणो दण्डः । सूत्रपरिवर्तने मूल्यद्विगुणः ।

तेन द्विपटवानं व्याख्यातम् ।

ऊर्णातुलायाः पञ्चपलिको विहननच्छेदो रोमच्छेदश्च ॥

रजकाः काष्ठफलकश्लक्ष्णशिलासु वस्त्राणि नेनिज्युः ।

अन्यत्र नेनिजन्तो वस्त्रोपघातं षट्पणं च दण्डं दद्युः ॥

मुद्गराङ्कादन्यद्वासः परिदधानास्त्रिपणं दण्डं दद्युः ।

[1]परवस्त्रविक्रयावक्रयाधानेषु च द्वादशपणो दण्डः । परिवर्तने मूल्यद्विगुणो वस्त्रदानं च । मुकुलावदातं शिलापट्टशुद्धं [2]धौतसूत्रवर्णं प्रमृष्टश्वेततरं चैकरात्रोत्तरं [3]दण्डं दद्युः । 254·8
पञ्चरात्रिकं तनुरागं; षड्रात्रिकं नीलं; पुष्पलाक्षामाञ्जिष्ठारक्तं गुरुपरिकर्मयत्नोपचार्यं जात्यं वासः सप्तरात्रिकं; ततः परं वेतनहानिं प्राप्नुयुः ॥

---

[1] याज्ञ II. 241. [2] द्धं. [3] नास्ति.

255·2 श्रद्धेया रागविवादेषु वेतनं कुशलाः कल्पयेयुः ॥

परार्थ्यानां पणो वेतनं; मध्यमानामर्धपणः; प्रत्यवराणां पादः; स्थूलकानां माषद्विमाषकम्। द्विगुणं रक्तकानाम्। प्रथमनेजने चतुर्भागः क्षयः। द्वितीये पञ्चभागः। तेनोत्तरं व्याख्यातम्।

रजकैस्तन्तुवाया व्याख्याताः।

सुवर्णकाराणामशुचिहस्ताद्रूप्यं सुवर्णमनाख्याय सरूपं क्रीणतां द्वादशपणो दण्डः। विरूपं चतुर्विंशतिपणः। चोरहस्तादष्टचत्वारिंशत्पणः। प्रच्छन्नविरूपं मूल्यहीनक्रयेषु स्तेयदण्डः। कृतभाण्डोपधौ च। सुवर्णान्माषकमपहरतो द्विशतो दण्डः। रूप्यधरणान्माषकमपहरतो द्वादशपणः। तेनोत्तरं व्याख्यातम्। वर्णोत्कर्षमपसाराणां योगं वा साधयतः पञ्चशतो दण्डः। तयोरपचरणे रागस्यापहारं विद्यात्। माषको वेतनं रूप्यधरणस्य। सुवर्णस्याष्टभागः। शिक्षाविशेषेण द्विगुणा वेतनवृद्धिः। तेनोत्तरं व्याख्यातम्।

256·3 ताम्रवृत्तकंसवैकृन्तकारकूटकानां पञ्चकं शतं वेतनम्। ताम्रपिण्डो दशभागः क्षयः। फलहीने हीन दण्डः। तेनोत्तरं व्याख्यातम्।

सीसत्रपुपिण्डो विंशतिभागः क्षयः। काकणी चास्य पलवेतनम्। तेनोत्तरं व्याख्यातम्।

रूपदर्शकस्य स्थितां पणयात्रामकोप्यां कोपयतः को- 256·4
प्यामकोपयतो द्वादशपणो दण्डः। तेनोत्तरं व्याख्यातम्।
कूटरूपं कारयतः प्रतिगृह्णतो निर्यापयतो वा सहस्रं दण्डः।
कोशे प्रक्षिपतो वधः[1]।

क्षरक[2]पांसुधावकाः सारत्रिभागं लभेरन्। द्वौ राजा
रत्नं च। रत्नापहार उत्तमो दण्डः॥

खनिरत्ननिधिनिवेदनेषु षष्ठमंशं निवेत्ता लभते। द्वाद-
शमंशं भृतकः। शतसहस्रादूर्ध्वं राजगामी निधिः। ऊने
षष्ठमंशं दद्यात्॥

पौर्वा[3]पौरुषिकं निधिं जानपदः शुचिस्स्वकरणेन समग्रं
लभेत। स्वकरणाभावे पञ्चशतो दण्डः। प्रच्छन्नादाने
सहस्रम्॥

भिषजः प्राणाबाधिकमनाख्यायोपक्रममाणस्य विपत्तौ पू-
र्वस्साहसदण्डः। कर्मापराधेन[4]विपत्तौ मध्यमः। कर्म[5]वधवै-
गुण्यकरणे दण्डपारुष्यं विद्यात्॥

कुशीलवा वर्षारात्रमेकस्था वसेयुः। कामदानमतिमात्र- 257·6
मेकस्यातिपातं[6] च वर्जयेयुः। तस्यातिक्रमे द्वादशगुणो दण्डः।
कामं देशजातिगोत्रचरणमैथुनावभासेन नर्मयेयुः॥

---

1 'म' कोशात्समुद्धृतम्.

2 रघरक· अधरक. 3 पौर्व· 4 राधेन· 5 मम· 6 पादं·

258·2 कुशीलवैश्चारणादिभि[1]र्भिक्षुकाश्च व्याख्याताः । तेषामयःशूलेन यावतः पणानभिदेयुः[2] तावन्तः शिफाप्रहारा दण्डाः ॥

शेषाणां कर्मणां[3] निष्पत्तिवेतनं शिल्पिनां कल्पयेत् ॥

एवं चोरानचोराख्यान् वणिक्कारुकुशीलवान् ।
भिक्षुकान् कुहकांश्चान्यान्वारयेद्देशपीडनात् ॥

इति कण्टकशोधने चतुर्थाधिकरणे कारुकरक्षणं प्रथमोऽध्यायः
आदितोऽष्टसप्ततिरध्यायः.

## ७७ प्रक. वैदेहकरक्षणम्.

संस्थाध्यक्षः पण्यसंस्थायां पुराणभाण्डानां स्वकरणविशुद्धानामाधानं विक्रयं वा स्थापयेत् ॥

तुलामानभाण्डानि चावेक्षेत, पौतवापचारात् ।

परिमाणीद्रोणयोरर्धपलहीनातिरिक्तमदोषः; पलहीनातिरिक्ते द्वादशपणो दण्डः। तेन पलोत्तरा दण्डवृद्धिर्व्याख्याता ।

258·10 तुलायाः कर्षहीनातिरिक्तमदोषः; द्विकर्षहीनातिरिक्ते षट्पणो दण्डः । तेन कर्षोत्तरा दण्डवृद्धिर्व्याख्याता ।

---

[1] रणाभि, [2] भिवदेयुः [3] कर्मणा

आढकस्यार्धकर्षहीनातिरिक्तमदोषः; कर्षहीनातिरिक्ते त्रि- 259·2
पणो दण्डः। तेन कर्षोत्तरा दण्डवृद्धिर्व्याख्याता।

तुलामानविशेषाणामतोऽन्येषामनुमानं कुर्यात्।

तुलामानाभ्यामतिरिक्ताभ्यां क्रीत्वा हीनाभ्यां विक्रीणा-
नस्य त एव द्विगुणा दण्डाः।

गण्यपण्येष्वष्टभागं पण्यमूल्येष्वपहरतष्षण्णवतिर्दण्डः।

[1] काष्ठलोहमणिमयं रज्जुचर्ममृण्मयं सूत्रवल्करोममयं वा जा-
त्यमित्यजात्यं विक्रयाधानं नयतो मूल्याष्टगुणो दण्डः।

[2] सारभाण्डमित्यसारभाण्डं, तज्जातमित्यतज्जातं राधायुक्त-
मुपाधियुक्तं समुत्परि[3] वर्तिमं वा विक्रयाधानं नयतो हीनमूल्यं
चतुष्पञ्चाशत्पणो दण्डः। पणमूल्यं द्विगुणो द्विपणमूल्यं द्विश-
तः। तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता।

[4] कारुशिल्पिनां कर्मगुणापकर्षमाजीवं विक्रयं क्रयोपघातं 259 10
वा संभूय समुत्थापयतां सहस्रं दण्डः।

वैदेहकानां वा संभूय पण्यमवरुन्धतामनर्घेण विक्रीणतां
क्रीणतां वा सहस्रं दण्डः।

तुलामानान्तरमर्घवर्णान्तरं वा धरकस्य माप[5] कस्य वा पण·

---

[1] याज्ञ· II, 294· [2] याज्ञ· II, 250—251·
[3] समुद्रपरि· [4] याज्ञ 248—9· [5] माय·

260·1 मूल्यादष्टभागं हस्तदोषेणाचरतो द्विशतो दण्डः । तेन द्विशतोत्तरा दण्डवृद्धिर्व्याख्याता ।

[1]धान्यस्नेहक्षारलवणगन्धभैषज्यद्रव्याणां समवर्णोपधाने द्वादशपणो दण्डः ।

यान्निसृष्टमुपजीवेयुः, तदेषां दिवससञ्जातं सङ्ख्याय वणिक् स्थापयेत् । क्रेतृविक्रेत्रोरन्तरपतितमादायादन्यं[2] भवति । तेन धान्यपण्यनिचयांश्चानुज्ञाताः कुर्युः; अन्यथा निचितमेषां पण्याध्यक्षो गृह्णीयात् । तेन धान्यपण्यविक्रये व्यवहरेतानुग्रहेण प्रजानाम् ॥

[3]अनुज्ञातक्रयादुपरि चैषां स्वदेशीयानां पण्यानां पञ्चकं शतमाजीवं स्थापयेत् । परदेशीयानां दशकम् । ततः परमर्घं वर्धयतां क्रये विक्रये वा भावयतां पणशते पञ्चपणाद्द्विशतो दण्डः । तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता ।

संभूयक्रये चैषां अविक्रीतेनान्यं संभूयक्रयं दद्यात् । पण्योपघाते चैषामनुग्रहं कुर्यात् ।

पण्यबाहुल्यात्पण्याध्यक्षः सर्वपण्यान्येकमुखानि विक्रीणीत । तेष्वविक्रीतेषु नान्ये विक्रीणीरन् । तानि दिवसवेतनेन विक्रीणीरन् अनुग्रहेण प्रजानाम् ।

---

[1] याज्ञ. II, 248–249· [2] दन्यत्· [3] याज्ञ· II· 252·

देशकालान्तरितानां तु पण्यानां— 261·4

प्रक्षेपं पण्यनिष्पत्तिं शुल्कं वृद्धिमवक्रयम् ।
व्ययानन्यांश्च सङ्ख्याय स्थापयेदर्घमर्घवित् ॥

इति कण्टकशोधने वैदेहकरक्षणं द्वितीयोऽध्यायः
आदित एकोनाशीतिः



## ७८ प्रक. उपनिपातप्रतीकारः

दैवान्यष्टौ महाभयानि—अग्निरुदकं व्याधिर्दुर्भिक्षं मूषिका व्यालास्सर्पा रक्षांसीति । तेभ्यो जनपदं रक्षेत् ।

ग्रीष्मे बहिरधिश्रयणं ग्रामाः कुर्युः। दशमूलीसङ्ग्रहेणाधिष्ठिता वा। नागरिकप्रणिधावग्निप्रतिषेधो व्याख्यातः। निशान्तप्रणिधौ राजपरिग्रहे च ।

बलिहोमस्वस्तिवाचनैः पर्वसु चाग्निपूजाः कारयेत् ।

वर्षारात्रमनू[1]पग्रामाः पूरवेलामुत्सृज्य वसेयुः। काष्ठवेणुनावश्चापगृह्णीयुः ।

उह्यमानमलाबुदृतिप्लवगण्डिकावेणिकाभिस्तारयेयुः। अनभिसरतां द्वादशपणो दण्डः अन्यत्र प्लवहीनेभ्यः । 262·3

[1] मानू·

पर्वसु च नदीपूजाः कारयेत् ।

मायायोगविदो वेदविदो [1]वर्षमभिचरेयुः ।

262·4 वर्षावग्रहे शचीनाथगङ्गापर्वतमहाकच्छपूजाः कारयेत् ।

व्याधिभयमौपनिषदिकैः प्रती[2]कारैः प्रतिकुर्युः । औषधैश्चिकित्सकाः, शान्तिप्रायश्चित्तैर्वा सिद्धतापसाः ।

तेन मरको व्याख्यातः ।

तीर्थाभिषेचनं महाकच्छवर्धनं गवां श्मशानावदोहनं कबन्धदहनं देवरात्रिं च कारयेत् ।

पशुव्याधिमरके स्थानान्यर्धनीराजनं स्वदैवतपूजनं च कारयेत् ।

दुर्भिक्षे राजा बीजभक्तोपग्रहं[3]कृत्वाऽनुग्रहं कुर्यात् । दुर्गकर्म[4] वा भक्तानुग्रहेण भक्तसंविभागं वा देशनिक्षेपं वा ।

मित्राणि वा व्या[5]पाश्रयेत ।

कर्शनं वमनं वा कुर्यात् ।

निष्पन्नसस्यमन्यविषयं वा सजनपदो यायात् ।

समुद्रसरस्तटाकानि वा संश्रयेत ।

धान्यशाकमूलफलावापान् सेतुषु कुर्वीत ।

263·4 मृगपशुपक्षिव्याळमत्स्यारम्भान् वा ।

---

[1] विदो वा· [2] प्रति· [3] ग्राहं· [4] दुर्गसेतुकर्म· [5] वाप्य·

मूषिकभये मार्जारनकुलोत्सर्जः[1] ॥　　263·5

तेषां ग्रहणहिंसायां द्वादशपणो दण्डः । शुनामनिग्रहे च अन्यत्रारण्यचरेभ्यः ।

स्नुहिक्षीरलिप्तानि धान्यानि विसृजेत्, उपनिषद्योगयुक्तानि वा मूषिककरं वा प्रयुञ्जीत ।

शान्तिं वा सिद्धतापसाः कुर्युः ।

पर्वसु च मूषिकपूजाः कारयेत् ।

तेन शलभपक्षिक्रिमिभयप्रतीकारा व्याख्याताः ।

व्याळभये मदनरसयुक्तानि पशुशवानि प्र[2]सृजेत् । मदनको-　264·1
द्रवपूर्णान्यौदर्याणि वा ।

लुब्धकाः श्वगणिनो वा कूटपञ्जरावपातैश्चरेयुः ।

आवरणिनः शस्त्रपाणयो व्याळानभिहन्युः । अनभिसर्तुर्द्वा-दशपणो दण्डः । स एव लाभो व्याळघातिनः ।

पर्वसु च पर्वतपूजाः कारयेत् ।

तेन मृगपक्षिसङ्घग्राहप्रतीकारा व्याख्याताः ।

[3] सर्पभये मन्त्रैरोषधिभिश्च जाङ्गलीविदश्चरेयुः । संभूय　264.6

---

[1] त्सर्गः.　[2] वि.

[3] ज म कोशाभ्यां समुद्धृतोऽयं पाठः । मं कोशे त्वयं पाठः "विसृजेत्" (207, 16) इत्यनन्तरं पठितोऽस्ति । परं तु "मदन" इत्यादिः "व्याख्याता" इत्यन्तो ग्रन्थस्तत्र न दृश्यते.

264·6 वोपसर्पान् हन्युः । अथर्ववेदविदो वाऽभिचरेयुः । पर्वसु नाग- पूजाः कारयेत् । तेनोदकप्राणिभयप्रतीकारा व्याख्याताः ।

रक्षोभये रक्षोघ्नान्यथर्ववेदविदो मायायोगविदो वा कर्माणि कुर्युः । पर्वसु च वितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागोपहारैः चैत्यपूजाः कारयेत् ।

"[1]वश्चराम" इत्येवं सर्वे भ[2]येष्वहोरात्रं चरेयुः ।

सर्वत्र चोपहतान् पितेवानुगृह्णीयात् ।

मायायोगविदस्तस्माद्विषये सिद्धतापसाः ।
वसेयुः पूजिता राज्ञा[3] दैवापत्प्रतिकारिणः ॥

इति कण्टकशोधने उपनिपातप्रतीकारः तृतीयोऽध्यायः
आदितोऽशीतितमः.

## ७९ प्रक. गूढाजीविनां रक्षा.

समाहर्तृप्रणिधौ जनपदरक्षणमुक्तम् । तस्य कण्टकशोधनं वक्ष्यामः—

समाहर्ता जनपदे सिद्धतापसप्रव्रजितचक्रचरचारणकुहक प्रच्छन्दककार्तान्तिकनैमित्तिकमौहूर्तिकचिकित्सकोन्मत्तमूकब — धिरजडान्धवैदेहककारुशिल्पिकुशीलववेशशौण्डिकापूपिकपाक- 265·3 मांसिकौदनिकव्यञ्जनान् प्रणिदध्यात् । ते ग्रामाणामध्यक्षाणां

[1] चरुं वश्च. [2] सर्वभ. [3] राज्ञः.

च शौचाशौचं विद्युः—यं चात्र गूढाजीविनं शङ्केत,[1] तं सत्रि 265·5
सवर्णेना[2]पसर्पयेत् । धर्मस्थं प्रदेष्टारं वा विश्वासोपगतं सत्री
ब्रूयात्—"असौ मे बन्धुरभियुक्तः ; तस्यायमनर्थः प्रतिक्रियतां
अयं चार्थः प्रतिगृह्यताम्" इति । स चेत्तथा कुर्यात्, "उप-
दाग्राहकः" इति प्रवास्येत ।

तेन प्रदेष्टारो व्याख्याताः ।

ग्रामकूटमध्यक्षं वा सत्री ब्रूयात् "असौ जाल्मः प्रभूत-
द्रव्यस्तस्यायमनर्थः तेनैनमाहारयस्व" इति । स चेत्तथा
कुर्यात् "उत्कोचकः" इति प्रवास्येत ।

कृतकाभियुक्तो वा कूटसाक्षिणोऽभिज्ञाताऽनर्थवैपुल्येन आ-
रभेत । ते चेत्तथा कुर्युः, "कूटसाक्षिणः" इति प्रवा-
स्येरन् ।

तेन कूटपण[3]कारका व्याख्याताः ।

यं वा मन्त्रयोगमूलकर्मभिश्श्माशानिकैर्वा संवनन[4]कारकं
मन्येत, तं सत्री ब्रूयात् "अमुष्य भार्यां स्नुषां दुहितरं वा
कामये । सा मां प्रतिकामयतां अयं चार्थः प्रतिगृह्यताम्"
इति । स चेत्तथा कुर्यात् "संवनन[5]कारकः" इति
प्रवास्येत ।

तेन कृत्याभिचारशीलौ व्याख्यातौ । 266·4

यं वा रसस्य वक्तारं[6] क्रेतारं विक्रेतारं भैषज्याहारव्यव-

[1] विशङ्केत. [2] सत्रिसर्पणेना· [3] कूटश्रावण· [4][5] संवदन. [6] कर्तारं.

266·5 हारिणं वा रसदं मन्येत तं सत्री ब्रूयात्—"असौ मे शत्रुस्तस्योपघातः क्रियतामयं चार्थः प्रतिगृह्यताम्" इति। स चेत्तथा कुर्यात्, "रसदः" इति प्रवास्येत।

तेन मदनयोगव्यवहारी व्याख्यातः।

यं वा नानालोहक्षाराणामङ्गारभस्त्रासंदंशमूषिका[1]धिकरणीत्रिटङ्क[2]मूषाणामभीक्ष्णं क्रे[3]तारं मूषीभ[4]स्मधूमदिग्धहस्तवस्त्रलिङ्गं कर्मारोपकरणसंवर्गं कूटरूपकारकम् मन्येत, तं सत्री शिष्यत्वेन संव्यवहारेण चानुप्रविश्य प्रज्ञापयेत्। प्रज्ञातः "कूटरूपकारकः" इति प्रवास्येत।

तेन रागस्यापहर्ता कूटसुवर्णव्यवहारी च व्याख्यातः॥

आरब्धारस्तु हिंसायां गूढाजीवास्त्रयोदश।
प्रवास्या निष्क्रयार्थं वा दद्युर्दोषविशेषतः॥

इति कन्टकशोधने गूढाजीविनां रक्षा चतुर्थोऽध्यायः
आदित एकाशीतिः

## ८० प्रक. सिद्धव्यञ्जनैर्माणवप्रकाशनम्.

267·3 सत्रिप्रयोगादूर्ध्वं सिद्धव्यञ्जना माणवा माणवविद्याभिः प्रलोभयेयुः प्रस्थाप[5]नान्तर्धानद्वारापोहमन्त्रेण प्रतिरोधकान्, संवननमन्त्रेण पारतल्पिकान्।

[1] मुष्टिका. [2] रगीबिम्लटङ्क. [3] क्षणक्रे. [4] मषीभ. [5] प्रस्वाप.

तेषां कृतोत्साहानां महान्तं सङ्घमादाय रात्रावन्यं ग्राम- 267.4
मुद्दिश्यान्यं ग्रामं कृतकाः स्त्रीपुरुषं गत्वा ब्रूयुः—"इहैव
विद्याप्रभावो दृश्यताम्। कृच्छ्रः परग्रामो गन्तुम्" इति।
ततो द्वारापोहमन्त्रेण द्वाराण्यपोह्य "प्रविश्यताम्" इति।
ब्रूयुः। अन्तर्धानमन्त्रेण जाग्रतामारक्षिणां मध्येन माणवा-
नतिक्रामयेयुः, प्रस्वापनमन्त्रेण प्रस्वापयित्वा रक्षिणश्शय्या-
भिर्माणवैस्सञ्चारयेयुः। संवनन[1] मन्त्रेण भार्याव्यञ्जनाः परेषां
माणवैस्संमोदयेयुः।

उपलब्धविद्याप्रभावाणां पुरश्चरणाद्यादिशेयुरभिज्ञानार्थम्।

कृतलक्षणद्रव्येषु वा वेश्मसु कर्म कारयेयुः अनुप्रविष्टा-
न्वैकत्र ग्राहयेयुः।

कृतलक्षणद्रव्यक्रयविक्रयाधानेषु योगसुरामत्तान्वा ग्राहयेयुः।
गृहीतान् पूर्वापदानसहायाननुयुञ्जीत।

पुराणचोरव्यञ्जना वा चोराननुप्रविष्टास्तथैव कर्म कार-
येयुः ग्राहयेयुश्च। गृहीतान् समाहर्ता पौरजानपदानां दर्श-
येत्—"चोरग्रहणीं विद्यामधीते राजा; तस्योपदेशादिमे
चोरा गृहीताः; भूयश्च ग्रहिष्यामि; वारयितव्यो वस्स्वजनः
पापाचारः" इति।

यं चात्रापसर्पोपदेशेन शम्याप्रतोदादीनामपहर्तारं जा- 268.6
नीयात्, तमेषां प्रत्यादिशेत्, "एष राज्ञः प्रभाव" इति।

[1] संवदन.

268'6 पुराणचोरगोपालकव्याधश्वगणिनश्च वनचोराटविकाननुप्रविष्टाः प्रभूतकूटहिरण्यकुप्यभाण्डेषु सार्थव्रजग्रामेष्वेनानभियोजयेयुः; अभियोगे गूढबलैर्घातयेयुः मदनरसयुक्तेन वा पथ्यादानेन[1] अनुगृहीतलोप्त्रभारानायतगतपरिश्रान्तान्प्रस्वपतः प्रहवणेषु योगसुरामत्तान्वा ग्राहयेयुः ॥

पूर्ववच्च गृहीत्वैनान् समाहर्ता प्ररूपयेत् ।
सर्वज्ञख्यापनं राज्ञः कारयन् राष्ट्रवासिषु ॥

इति कण्टकशोधने सिद्धव्यञ्जनैर्माणवप्रकाशनं
पञ्चमोऽध्यायः आदितो द्व्यशीतिः

## ८१ प्रक. शङ्कारूपकर्माभिग्रहः

सिद्धप्रयोगादूर्ध्वं शङ्कारूपकर्माभिग्रहः। क्षीणदायकुटुम्बमल्प269 4 निर्वेशं विपरीतदेशजातिगोत्रनामकर्मापदेशं प्रच्छन्नवृत्तिकर्माणं मांससुराभक्ष्यभोजनगन्धमाल्यवस्त्रविभूषणेषु प्रसक्तमतिव्ययकर्तारं पुंश्चलीद्यूतशौण्डिकेषु प्रसक्तमभीक्ष्णप्रवासिनमविज्ञातस्थानगमनपण्यमेकान्तारण्यनिष्कुटविकालचारिणं प्रच्छन्ने सामिषे वा देशे बहुमन्त्रसन्निपातं सद्यःक्षतव्रणानां गूढप्रतीकारयितारं अन्तर्गृहं नित्य[2]मभ्यधिगन्तारं कान्तापरं परपरिग्रहाणां परस्त्रीद्रव्यवेश्मनामभीक्ष्णप्रष्टारं कुत्सितकर्मशास्त्रोपकरणसंसर्गं विरात्रे छन्नकुड्यच्छायासञ्चारिणं विरूपद्रव्याणामदेशकाल-

[1] पथ्यादनेन. [2] अन्तर्गृहनित्य.

विक्रेतारं जातवैराशयं हीनकर्मजातिं विगूहमानरूपं लिङ्गेन आलिङ्गिनं लिङ्गिनं वा भिन्नाचारं पूर्वकृतापदानं स्वकर्मभिरपदिष्टं नागरिकं महामात्रदर्शने गूहमानमपसरन्तमनुच्छ्वासोपवेशिनमाविग्नं शुष्कभिन्नस्वरमुखवर्णं शस्त्रहस्त[1]मनुष्यसंपातं त्रासिनं[2] हिंस्रस्तेननिधिनिक्षेपापहारप्रयोगगूढाजीविनामन्यतमं शङ्केतेति शङ्काभिग्रहः ॥

रूपाभिग्रहस्तु—नष्टापहृतमविद्यमानं तज्जातव्यवहारिषु निवेदयेत् । तच्चेन्निवेदितमासाद्य प्रच्छादयेयुः, साचिव्यकरदोषमाप्नुयुः । अजानन्तोऽस्य द्रव्यस्यातिसर्गेण मुच्येरन् । न चानिवेद्य संस्थाध्यक्षस्य पुराणभाण्डानामाधानं विक्रयं वा कुर्युः । तच्चेन्निवेदितमासाद्येत, रूपाभिगृहीतमागमं पृच्छेत् "कुतस्ते लब्धम्" इति । स चेत् ब्रूयात् दायाद्यादवाप्तममुष्माल्लब्धं, क्रीतं कारितमाधिप्रच्छन्नं अयमस्य देशः कालश्चोपसंप्राप्तः; अयमस्यार्घः प्रमाणं क्षण[3]मूल्यं च इति, तस्यागमसमाधौ मुच्येत ॥ 270.3

नाष्टिकश्चेत्तदेव प्रतिसन्दध्यात् । यस्य[4] पूर्वो दीर्घश्च परिभोगश्शुचिर्वा देशस्तस्य द्रव्यमिति विद्यात् । "चतुष्पदानामपि[5] हि रूपलिङ्गसामान्यं भवति, किमङ्ग पुनरेकयोनिद्रव्यकर्तृप्रसूतानां कुप्याभरणभाण्डानाम्" इति । स चेद्ब्रूयात्—"याचितकमवक्रीतकमाहितकं निक्षेपमुपनिधिं वैया- 271.2

1 हस्तं· 2 सम्पातत्रासिनं· 3 क्षणं· 4 तस्य· 5 दद्विपदानामपि·

271·4 वृत्यकर्म वाऽमुष्य" इति। तस्यावसरप्रतिसन्धानेन मुच्येत।
"नैवम्" इत्यपसारो वा ब्रूयात्।

रूपाभिगृहीतः परस्य दानकारणमात्मनः प्रतिग्रहकारणमुपलिङ्गनं वा दायकदापकनिबन्धकप्रतिग्राहकोपदेष्टृभिरुपश्रोतृभिर्वा प्रतिसमानयेत्॥

उज्झितप्रणष्टनिष्पतितोपलब्धस्य देशकाललाभोपलिङ्गनेन शुद्धिः। अशुद्धस्तच्च तावच्च दण्डं दद्यात्। अन्यथा स्तेयदण्डं भजेत॥

इति रूपाभिग्रहः॥

कर्माभिग्रहस्तु—मुषितवेश्मनः प्रवेशनिष्कसनमद्वारेण द्वारस्य सन्धिना बीजेन वा वेधमुत्तमागारस्य जालवातायननीव्र[1]वेधमारोहणावतरणे च कुड्यस्य वेधमपखननं वा गूढद्रव्यनिक्षेपं[2]ग्रहणोपायमुपदेशोपलभ्यमभ्यन्तरच्छेदोत्करपरिमर्दोपकरणमभ्यन्तरकृतं विद्यात्; विपर्यये बाह्यकृतं उभयत उभयकृतम्॥

272·4 अभ्यन्तरकृते पुरुषमासन्नं व्यसनिनं क्रूरसहायं तस्करोपकरणसंसर्गं स्त्रियं वा दरिद्रकुलामन्यप्रसक्तां वा परिचारकजनं वा तद्विधाचारमतिस्वप्नं निद्राक्लान्तमाविक्लान्तमाविग्न[3]शुष्कभिन्नस्वरमुखवर्णमौपस्थित[4]मतिप्रलापिनमुच्चारोहणसंरब्धगात्रं वि

[1] नीप्र· [2] क्षेपण. [3] निद्राक्लान्तमाविन्नं· [4] वर्णमनवास्थित·

लूननिघृष्टभिन्नपाटितशरीरवस्त्रं जातकिण[1] संरब्धहस्तपादं पांसु 272·4
पूर्णकोशनख[2]विलूनभुग्नकेशनखं वा सम्यक्स्नातानुलिप्तं तैलप्रमृ-
ष्टगात्रं सद्योधौतहस्तपादं वा पांसुपिच्छिलेषु तुल्यपादपदानि-
क्षेपं प्रवेशनिष्कासन[3]योर्वा तुल्यमाल्यमद्यगन्धवस्त्रच्छेदविलेपन-
स्वेदं परीक्षेत ॥

पौरं[4] पारदारिकं वा विद्यात् ॥

सगोपस्थानिको बाह्यं प्रदेष्टा चोरमार्गणम् ।
कुर्यान्नागरिकश्चान्तर्दुर्गे निर्दिष्टहेतुभिः ॥

इति कण्टकशोधने शङ्कारूपकर्माभिग्रहः षष्ठोऽध्यायः
आदितस्त्र्यशीतिः.

## ८२ प्रक. आशुमृतकपरीक्षा.

तैलाभ्यक्तमाशुमृतकं परीक्षेत— 273·5

निष्कीर्णमूत्रपुरीषं वातपूर्णकोष्ठत्वक्कं शूनपादपाणिमुन्मीलि-
ताक्षं सव्यञ्जनकण्ठं पीडननिरुद्धोच्छ्वासहतं विद्यात् ॥

तमेव सङ्कुचितबाहुसक्थिमुद्बन्धहतं विद्यात् ॥

शूनपाणिपादोदरमपगताक्षमुद्वृत्तनाभिमवरोपितं विद्यात् ॥

निस्तब्धगुदाक्षं सन्दष्टजिह्वमाध्मातोदरमुदकहतं विद्यात् ॥

शोणितानुसिक्तं भग्नभिन्नगात्रं काष्ठैरश्मभिर्वा हतं 274·1
विद्यात् ॥

[1] किरण. [2] नखं. [3] निष्कसन. [4] चारं,

274·2 संभग्नस्फुटितगात्रं वि[1]क्षिप्तं विद्यात् ॥

श्यावपाणिपाददन्तनखं शिथिलमांसरोमचर्माणं फेनोपदिग्धमुखं विषहतं विद्यात् ॥

तमेव सशोणितदंशं सर्पकीटहतं विद्यात् ॥

विक्षिप्तवस्त्रगात्रमतिवान्तविरिक्तं मदनयोगहतं विद्यात् ॥

अतोऽन्यतमेन कारणेन हतं हत्वा वा दण्डभयादुद्बन्धनिकृत्तकण्ठं विद्यात् ॥

विषहतस्य भोजनशेषं पयोभिः[2] परीक्षेत । हृदयादुद्धृत्याग्नौ प्रक्षिप्तं चिटचिटायदिन्द्रधनुर्वर्णं वा विषयुक्तं विद्यात् ॥

दग्धस्य हृदयमदग्धं दृष्ट्वा वा तस्य परिचारकजनं वा दण्डपारुष्यादतिमा[3]र्गेत ॥

दुःखोपहतमन्यप्रसक्तं वा स्त्रीजनं दायनिवृत्तिस्त्रीजनाभिमन्तारं वा बन्धुम् । तदेव हतोद्बन्धस्य परीक्षेत ॥

स्वयमुद्बन्धस्य वा विप्रकारमयुक्तं मार्गेत ॥

275·2 सर्वेषां वा स्त्रीदायाद्यदोषः, कर्मस्पर्धा प्रतिपक्षद्वेषःपण्यसंस्था[4]समवायो वा विवादपदानामन्यतमद्वा रोषस्थानं; रोषनिमित्तो घातः[5] ॥

1 गात्रमव. 2 वयोभिः. 3 पारुष्यातिलब्ध मा॰ 4 संस्थ. 5 निमित्तोपघातः.

स्वयमादिष्टपुरुषैर्वा चोरैरर्थनिमित्तं सादृश्यादन्यवैरिभिर्वा 275·3 हतस्य घातमासन्नेभ्यः परीक्षेत । येनाहूतस्सहस्थितः प्रस्थितो हतभूमिमानीतो वा, तमनुयुञ्जीत । ये चास्य हतभूमावासन्नचरास्तानेकैकशः पृच्छेत् 'केनायमिहानीतो वा[1] कस्सशस्त्रः सङ्गूहमान उद्विग्नो वा युष्माभिर्दृष्टः" इति । ते यथा ब्रूयुस्तथाऽनुयुञ्जीत ॥

अनाथस्य शरीरस्थमुपभोगं परिच्छदम् ।
वस्त्रं वेषं विभूषां वा दृष्ट्वा तद्व्यवहारिणः ॥
अनुयुञ्जीत संयोगं निवासं वासकारणम् ।
कर्म च व्यवहारं च ततो मार्गणमाचरेत् ॥
रज्जुशस्त्रविषैर्वाऽपि कामक्रोधवशेन यः ।
घातयेत्स्वयमात्मानं स्त्री वा पापेन मोहिता ॥
रज्जुना[2] राजमार्गे तां चण्डालेनापकर्षयेत् ।
न श्मशानविधिस्तेषां न संबन्धिक्रियास्तथा ॥
बन्धुस्तेषां तु यः कुर्यात्प्रेतकार्यक्रियाविधिम् ।
तद्गतिं स चरेत्पश्चात्स्वजनाद्वा प्रमुच्यते ॥
संवत्सरेण पतति पतितेन समाचरन् । 276·1
याजनाध्यापनाद्यौनात्तैश्चान्योऽपि समाचरन् ॥

इति कण्टकशोधने आशुमृतकपरीक्षा
सप्तमोऽध्यायः आदितश्चतुरशीतिः.

---

[1] हतो वा. [2] रज्जुना.

## ८३ प्रक. वाक्यकर्मानुयोगः.

276·3 [1]मुषितसन्निधौ बाह्यानामभ्यन्तराणां च साक्षिण[2]मभिशस्तस्य देशजातिगोत्रनामकर्मसारसहायनिवासाननुयुञ्जीत । तांश्चापदेशैः प्रतिसमानयेत् । ततः पूर्वस्याह्नः प्रचारं रात्रौ निवासं च "आग्रहणादिति" अनुयुञ्जीत । तस्याव[3]सारप्रतिसन्धाने शुद्धस्स्यात् । अन्यथा कर्मप्राप्तः ॥

त्रिरात्रादूर्ध्वमग्राह्यः शङ्कितकः, पृच्छाभावादन्यत्रोपकरणदर्शनात् ॥

"अचोरश्चोरः[4]" इत्यभिव्याहरतश्चोरसमो दण्डः; चोरं प्रच्छादयतश्च ॥

चोरेणाभिशस्तो वैरद्वेषाभ्यामपदिष्टकः शुद्धस्स्यात् । शुद्धं परिवासयतः पूर्वस्साहसदण्डः ॥

शङ्कानिष्पन्नमुपकरणमन्त्रिसहायरूपवैयावृत्यकरान्निष्पादयेत् । कर्मणश्च प्रदेशद्रव्यादा[5]नांशविभागैः प्रतिसमानयेत् । एतेषां कारणानां अनभिसन्धाने विप्रलपन्तमचोरं विद्यात् । दृश्यते ह्यचोरोऽपि चोरमार्गे यदृच्छया; सन्निपाते चोरवेषशस्त्रभाण्डसामान्येन गृह्यमाणो दृष्टः चोरभाण्डस्योपवासेन

277·3 वा यथा हि माण्डव्यः कर्मक्लेशभयादचोरः "चोरोऽस्मि" इति ब्रुवाणः । तस्मात्समाप्तकरणं नियमयेत् ॥

---

[1] याज्ञ II, 271-272. [2] णा. [3] तस्याप. [4] अचोरं चोर. [5] द्रव्यदा.

मन्दावधानं[1] बालं वृद्धं व्याधितं मत्तमुन्मत्तं क्षुत्पिपासाध्वक्लान्तमत्याशितमात्मकाशितं दुर्बलं वा न कर्म कारयेत् ॥ 277.4

तुल्यशीलपुंश्चलीप्रापाविक[2]कथावकाशभोजनदातृभिरपसर्पयेत् । एवमतिसन्दध्यात् । यथा वा निक्षेपापहारे व्याख्यातम् ॥

आप्तदोषं कर्म कारयेत् ॥

न त्वेव स्त्रियं गर्भिणीं सूतिकां वा मासावरप्रजाताम् ।

स्त्रियास्त्वर्धकर्म वाक्यानुयोगो वा ॥

ब्राह्मणस्य सत्रिपरिग्रहः श्रुतवतस्तपस्विनश्च । तस्यातिक्रम उत्तमो दण्डः कर्तुः कारयितुश्च कर्मणा व्यापादनेन च ॥

व्यावहारिकं कर्मचतुष्कं—षड् दण्डाः सप्त कशाः, द्वावुपरिनिबन्धौ, उदकनालीका[3] च ॥

परं पापकर्मणां नववेत्रलताः, द्वादशकं द्वावूरौ, वेष्टौ विंशतिर्नक्तमाललताः द्वात्रिंशत्तलाः, द्वौ वृश्चिकबन्धौ, उल्लम्बने चले सूचीहस्तस्य, यवागूपीतस्य एकपर्वदहनमङ्गुल्याः स्नेहपीतस्य प्रतापनमेकमहः, शिशिररात्रौ बल्बजाग्रशय्याचेत्यष्टादशकं कर्म । तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च खरपट्टादाहमयेत्[4] ॥

दिवसान्तरमेकैकं च कर्म कारयेत् ॥

पूर्वकृतापदानं प्रतिज्ञाया अपहरन्तमेकदेशमदृष्टद्रव्यं कर्मणा 278.9

[1] मन्दापराधं. [2] प्रावापिक. [3] नालिका. [4] दागमयेत्.

278·9 रूपेण वा गृहीतं राजकोशमप[1] स्तृणन्तं कर्मवध्यं वा राजवचनात्समस्तं व्यस्तमभ्यस्तं वा कर्म कारयेत् ॥

सर्वापराधेष्वपीडनीयो ब्राह्मणः । [2]तस्याभिशस्ताङ्को ललाटे स्याद्व्यवहारपतनाय ॥

स्तेये श्वा ।

मनुष्यवधे कबन्धः ।

गुरुतल्पे भगम् ।

सुरापाने मद्यध्वजः ॥

ब्राह्मणं पापकर्माणमुद्घुष्याङ्ककृतव्रणम् ।
कुर्यान्निर्विषयं राजा वासयेदाकरेषु वा ॥

इति कण्टकशोधने वाक्यकर्मानुयोगः अष्टमोऽध्यायः
आदितः पञ्चाशीतिः

## ८४ प्रक. सर्वाधिकरणरक्षणम्.

समाहर्तृप्रदेष्टारः पूर्वमध्यक्षाणामध्यक्षपुरुषाणां च नियमनं कुर्युः ॥

खनिसारकर्मान्तेभ्यस्सारं रत्नं वाऽपहरतश्शुद्धवधः ॥

279.6 फल्गुद्रव्यकर्मान्तेभ्यः फल्गुद्रव्यमुपस्करं वा पूर्वस्साहसदण्डः ॥

---

[1] मव.  [2] याज्ञ. II, 249.

पण्यभूमिभ्यो वा राजपण्यं माषमूल्यादूर्ध्वमापादमूल्यादि 279·6
त्यपहरतो द्वादशपणो दण्डः । आद्विपादमूल्यादिति चतु-
र्विंशतिपणः । आत्रिपादमूल्यादिति षट्त्रिंशत्पणः । आप-
णमूल्यादित्यष्टचत्वारिंशत्पणः । आद्विपणमूल्यादिति पूर्व-
स्साहसदण्डः । आचतुष्पणमूल्यादिति मध्यमः । आष्टपण-
मूल्यादित्युत्तमः । आदशपणमूल्यादिति वधः ॥

कोष्ठपण्यकुल्या[1]युधागारेभ्यः कुप्यभाण्डोपस्करापहारेष्वर्ध-
मूल्येष्वेत एव दण्डाः ॥

कोशभाण्डागाराक्षशाला[2]भ्यश्चतुर्भागमूल्येष्वेत एव द्विगुणा
दण्डाः ॥

चोराणामभिप्रधर्षणे चित्रो घात इति राजपरिगृहेषु[3]व्या-
ख्यातम् ॥

बाह्येषु तु प्रच्छन्नमहानि क्षेत्रखलवेश्मापणेभ्यः कुप्यभाण्ड-
मुपस्करं वा माषमूल्यादूर्ध्वमापादमूल्यादित्यपहरतस्त्रिपणो द-
ण्डः; गोमयप्रदेहेन वा प्रलिप्यावघोषणं[4] शराव[4] मेखलया
वा । आपणमूल्यादिति द्वादशपणः; मुण्डनं प्रव्राजनं वा ।
आद्विपणमूल्यत्रिपादमूल्यादिति नवपणः; गोमयं भस्म वा
प्रलिप्यावघोषणं शरावमेखलया वा । आपणमूल्यादिति द्वादशप 280·4
णः;[5] मुण्डनं प्रव्राजनं वा । आद्विपणमूल्यादिति चतुर्विंशतिपणः,

---

[1] कुप्या. [2] राध्यक्षशाला. [3] ग्रेहेषु.

[4] आद्विपादमूल्यादिति षट्पणः । गोमयभस्मना वा प्रलिप्यावघोषणम् । आत्रि-
पादमूल्यादिति नवपणः । गोमयभस्मना वा प्रलिप्यावघोषणम् । शराव.

[5] चतुर्विंशतिपणः.

280·4 मुण्डनमिष्टकाशकलेन प्रव्राजनं वा। [1]आचतुष्पणमूल्यादिति षट्त्रिंशत्पणः। आपञ्चपणमूल्यादिति अष्टचत्वारिंशत्पणः। आदशपणमूल्यादिति पूर्वस्साहसदण्डः। आविंशतिपणमूल्यादिति द्विशतः। आत्रिंशत्पणमूल्यादिति पञ्चशतः। आचत्वारिंशत्पणमूल्यादिति साहस्रः। आपञ्चाशत्पणमूल्यादिति वधः।

प्रसह्य दिवा रात्रौ वाऽन्तर्याममेव हरतो[2]र्धमूल्येष्वेत एव द्विगुणा दण्डाः। प्रसह्य दिवा रात्रौ वा सशस्त्रस्यापहरतश्चतुर्भागमूल्येष्वेत एव दण्डाः॥

कुटुम्बाध्यक्षमुख्यस्वामिनां कूटशासनमुद्राकर्मसु पूर्वमध्यमोत्तमवधा दण्डाः; यथाऽपराधं वा।

धर्मस्थश्चेद्विवदमानं पुरुषं तर्जयति, भर्त्सयत्यपसारयति, अभिग्रसते वा, पूर्वमस्मै साहसदण्डं कुर्यात्। वाक्पारुष्ये द्विगुणम्॥

पृच्छ्यं न पृच्छत्यपृच्छ्यं पृच्छति, पृष्ट्वा वा विसृजति शिक्षयति स्मारयति, पूर्वं ददाति वेति, मध्यममस्मै साहसदण्डं कुर्यात्। देयं देशं न पृच्छति, अदेयं देशं पृच्छति कार्यमदेशे, नातिवाहयति, छलेनातिहरति, कालहरणेन श्रान्तमपवाहयति, मार्गापणं[3]वाक्यमुत्क्रमयति; मतिसाहाय्यं[4] साक्षिभ्यो ददाति; 281·6 तारि[5]तानुशिष्टं कार्यं पुनरपि गृह्णाति; उत्तममस्मै साहसदण्डं कुर्यात्॥

---

[1] आत्रिपणमूल्यादिति चत्वारिंशत्पणः मुण्डनमिष्टकाशकलेन प्रव्राजनं च। आ चतुष्पण. [2] र्यामितमहरतो; र्याममेवापहरतो. [3] मार्गापन्नं. [4] मतिसहायं. [5] कारि.

पुनरपराधे द्विगुणं; स्थानाद्व्यपरोहणं[1] च ॥

लेखकश्चेदुक्तं न लिखत्यनुक्तं लिखति दुरुक्तमुपलिखति, सूक्तमुल्लिखत्यर्थानां[2] विकल्पयतीति, पूर्वमस्मै साहसदण्डं कुर्यात्; यथाऽपराधं वा ॥ 281·6

धर्मस्थः प्रदेष्टा वा हैरण्यमदण्डचं[3] क्षिपति क्षेपद्विगुणमस्मै दण्डं कुर्यात्। हीनातिरिक्ताष्टगुणं वा शरीरदण्डं क्षिपति, शारीरमेव दण्डं भजेत। निष्क्रयद्विगुणं वा। यं वा भूतमर्थं नाशयत्यभूतमर्थं करोति तदष्टगुणं दण्डं दद्यात् ॥

धर्मस्थीयाच्चारकान्निसारयतो बन्धनागाराच्छय्यासनभोजनोच्चारसञ्चारं[4] रोधबन्धनेषु त्रिपणोत्तरा दण्डाः कर्तुः कारयितुश्च ॥ 282·5

चारकादभियुक्तं मुञ्चतो निष्पातयतो[5] वा मध्यमः साहसदण्डः अभियोगदानं च। बन्धनागारात्सर्वस्वं वधश्च। बन्धनागाराध्यक्षस्य संरुद्धक[6]मनाख्याय चारयतश्चतुर्विंशतिपणो दण्डः। कर्म कारयतो द्विगुणः। स्थानान्यत्वं गमयतोऽन्नपानं वा रुन्धतष्षण्णवतिर्दण्डः परिक्लेशयत उत्कोटयतो वा मध्यमस्साहसदण्डः। घ्नतस्साहस्रः ॥

परिगृहीतां दासीमाहितिकां वा संरुद्धिकामधिचरतः पूर्वस्साहसदण्डः। चोरडामरिकाभार्यां मध्यमः। संरुद्धिकामार्यामुत्तमः। संरुद्धस्य वा तत्रैव घातः। तदेवाक्षण- 283·2

[1]नाद्यवरोपणं. [2]मुल्लिखत्यर्थोत्पत्तिं वा. [3]रण्यदण्डं. [4]सभारः. [5]निष्पातयितुर्वा. [6]सरुद्धक.

283·3 गृहीतायामार्यायां विद्यात्। दास्यां पूर्वस्साहसदण्डः ॥

चारकमभित्त्वा, निष्पातयतो मध्यमः; भित्त्वा वधः, बन्धनागारात्सर्वस्वं वधश्च ॥

एवमर्थचरान् पूर्वं राजा दण्डेन शोधयेत्।
शोधयेयुश्च शुद्धास्ते पौरजानपदान् दमैः[1] ॥

इति कण्टकशोधने सर्वाधिकरणरक्षणं नवमोऽध्यायः
आदितष्षडशीतिः.

---

## ८५ प्रक. एकाङ्गवधनिष्क्रयः.

तीर्थ[2]घातग्रन्थिभेदेऽर्थचराणां[3] प्रथमेऽपराधे संदंशच्छेदनं चतुष्पञ्चाशत्पणो वा दण्डः। द्वितीये—छेदनं पणस्य शत्यो वा दण्डः। तृतीये—दक्षिणहस्तवधश्चतुश्शतो वा दण्डः। चतुर्थे—यथाकामी वधः ॥

पञ्चविंशतिपणावरेषु कुक्कुटनकुलमार्जारश्वसूकरस्तेयेषु हिंसायां वा चतुष्पञ्चाशत्पणो दण्डः। नासाग्रच्छेदनं वा। चण्डालारण्यचराणामर्धदण्डाः ॥

284·3 पाशजालकूटापपात्रेषु[4] बन्धानां[5] मृगपशुपक्षिव्यालमत्स्यानामादाने तच्च तावच्च दण्डः ॥

---

[1]जनैः. [2]याज्ञ. II, 274. [3]भेदोर्ध्वकराणां. [4]टावपातेषु. [5]बद्धानां.

मृगद्रव्यवनान्मृगद्रव्यापहारे शत्यो दण्डः । बिम्बविहार 284·4
मृगपक्षिस्तेये हिंसायां वा द्विगुणो दण्डः ॥

कारुशिल्पिकुशीलवतपस्विनां क्षुद्रकद्रव्यापहारे शत्यो दण्डः।
स्थूलकद्रव्यापहारे द्विशतः । कृषिद्रव्यापहारे च ॥

दुर्गमकृतप्रवेशस्य प्रविशतः प्राकारच्छिद्राद्वा निक्षेपं गृही-
त्वाऽपसरतः कन्धरावधो[1] द्विशतो वा दण्डः ॥

चक्रयुक्तं नावं क्षुद्रपशुं वाऽपहरत एकपादवधः त्रिशतो
वा दण्डः ॥

कूटकाकण्यक्षाराळशलाकाहस्तविषमकारिण एकहस्तवध-
श्चतुश्शतो वा दण्डः ॥

स्तेनपारदारिकयोस्साचिव्यकर्मणि स्त्रियास्सङ्गृहीतायाश्च
कर्णनासाच्छेदनं पञ्चशतो वा दण्डः; पुंसो द्विगुणः ॥

[2]महापशुमेकं दासं दासीं वाऽपहरतः प्रेतभाण्डं वा
विक्रीणानस्य द्विपादवधः षट्छतो वा दण्डः ॥

[3]वर्णोत्तमानां गुरूणां च हस्तपादलङ्घने [4]राजयानवाह-
नाद्यारोहणे चैकहस्तपादवधः सप्तशतो वा दण्डः ॥

शूद्रस्य [5]ब्राह्मणवादिनो देवद्रव्यमवस्तृणतो [6]राजद्विष्टमा 285·4
दिशतो [7]द्विनेत्रभेदिनश्च योगाञ्जनेनान्धत्वमष्टशतो वा दण्डः ॥

---

[1] काण्डरावधो. [2,3,4,5,6,7] याज्ञ. II, 302-304.

285·5 [1]चोरं पारदारिकं वा मोक्षयता [2]राजशासनमूनमतिरिक्तं वा लिखतः कन्यां दासीं वा सहिरण्यमपहरतः [3]कूटव्यवहारिणो [4]विमांसविक्रयिणश्च वामहस्तद्विपादवधो नवशतो वा दण्डः । मानुषमांसविक्रये वधः । देवपशुप्रतिमामनुष्यक्षेत्रगृहहिरण्यसुवर्णरत्नसस्यापहारिण उत्तमो दण्डः शुद्धवधो वा ॥

पुरुषं चापराधं च कारणं गुरुलाघवम् ।
अनुबन्धं तदात्वं च देशकालौ समीक्ष्य च ॥
उत्तमावरमध्यत्वं प्रदेष्टा दण्डकर्मणि ।
राज्ञश्च प्रकृतीनां च कल्पयेदन्तरान्वितः[5] ॥

इति कण्टकशोधने एकाङ्गवधनिष्क्रयो दशमोऽध्यायः
आदितः सप्ताशीतिः.

## ८६ प्रक. शुद्धश्चित्रश्च दण्डकल्पः.

कलहे घ्नतः पुरुषं चित्रो घातः । सप्तरात्रस्यान्तः मृते शुद्धवधः । पक्षस्यान्तरुत्तमः । मासस्यान्तः पञ्चशतः समुत्थानव्ययश्च ॥

286·4 शस्त्रेण प्रहरत उत्तमो दण्डः । मदेन हस्तवधः । [6]वधे वधः ॥

---

1,2 याज्ञ. II, 295. 3,4 याज्ञ. II, 297. 5 दन्तराऽस्थितः.
6 मोहेन द्विशतः । वधे.

प्रहारेण गर्भं पातयत उत्तमो दण्डः । भैषज्येन मध्यमः । 286·5
परिक्लेशेन पूर्वस्साहसदण्डः ॥

प्रसभस्त्रीपुरुषघातकाधीसारकनिग्राहकावघोषकावस्वन्दकोपवेधकान् पथि वेश्मप्रतिरोधकान् राजहस्त्यश्वरथानां हिंसकान् स्तेनान्वा शूलानारोहयेयुः[1] ॥

यश्चैनान् दहेदपनयेद्वा स तमेव दण्डं लभेत साहसमुत्तमं वा ॥

[2]हिंस्रस्तेनानां भक्तवासोपकरणाग्निमन्त्रदानवैयावृत्यकर्मसूत्तमो दण्डः । परिभाषणमविज्ञाने । हिंस्रस्तेनानां पुत्रदारमसमन्त्रं विसृजेत् समन्त्रमाददीत ॥

राज्यकामुकमन्तःपुरप्रधर्षकमटव्यमित्रोत्साहकं दुर्गराष्ट्रदण्डकोपकं वा शिरोहस्तप्रादीपिकं घातयेत् ॥

ब्राह्मणं तमपः[3] प्रवेशयेत् ॥

मातृपितृपुत्रभ्रात्राचार्यतपस्विघातकं वा त्वक्छिरःप्रादीपिकं घातयेत् । तेषामाक्रोशे जिह्वाच्छेदः ; अङ्गाभिरदने तदङ्गान्मोच्यः ॥

यदृच्छाघाते पुंसः, पशुयूथस्तेये[4] च शुद्धवधः ॥

दशावरं च यूथं विद्यात् ॥

उदकधारणं सेतुं भिन्दतस्तत्रैवाप्सु निमज्जनम् । अनुदकमुत्तमः साहसदण्डः । भग्नोत्सृष्टकं मध्यमः ॥ 287·10

---

[1] रोप. [2] याज्ञ. II, 276. [3] तमः. [4] यूथाश्वस्तेये.

287·11 विषदायकं पुरुषं स्त्रियं च पुरुषघ्नीमपः प्रवेशयेत् ॥

अगर्भिणीं गर्भिणीं मासावरप्रजातां पतिगुरुप्रजाघातिकां अग्निविषदां सन्धिच्छेदिकां वा गोभिः पाटयेत् ॥

विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनादीपिकमग्निना दाहयेत् ॥

राजकोशकमन्त्रभेदकयोरनिष्टप्रवृत्तिकस्य ब्राह्मणमहानसावलेहिनश्च जिह्वामुत्पाटयेत् ॥

प्रहरणावरणस्तेनमनायुधीयमिषुभिर्घातयेत् । आयुधीयस्योत्तमः ॥

मेढ्रफलोपघातिनस्तदेव छेदयेत् ॥

जिह्वानासोपघाते[1] संदंशवधः ॥

एते शास्त्रेष्वनुगताः क्लेशदण्डा महात्मनाम् ।

अक्लिष्टानां तु पापानां धर्म्यश्शुद्धवधस्स्मृतः ॥

इति कण्टकशोधने शुद्धश्चित्रश्च दण्डकल्प एकादशोऽध्यायः आदितोऽष्टाशीतिः.

## ८७ प्रक. कन्याप्रकर्म.

288·9 सवर्णामप्राप्तफलां कन्यां प्रकुर्वतो हस्तवधश्चतुश्शतो वा दण्डः । मृतायां वधः ॥

[1] जिह्वानसोरुपघाते

प्राप्तफलां प्रकुर्वतो मध्यमप्रदेशिनीवधो द्विशतो वा दण्डः, 289·2
पितुश्चापहीनं दद्यात् ॥

न च प्राकाम्यमकामायां लभेत ॥

सकामायां चतुष्पञ्चाशत्पणो दण्डः ; स्त्रियास्त्वर्धदण्डः ॥

परशुल्कोपधायां[1] हस्तवधश्चतुश्शतो वा दण्डः शुल्कदानं च॥

सप्तार्तवप्रजातां पराणामूर्ध्वमलभमानां[2] प्रकृत्य प्रकामी
स्यात् न च पितुरपहीनं दद्यात् । ऋतुप्रतिरोधिभिः स्वाम्या-
दपक्रामति ॥

त्रिवर्षप्रजातार्तवायास्तुल्यो गन्तुमदोषः । ततः परमतु-
ल्योऽप्यनलङ्कृतायाः[3] । पितृद्रव्यादाने स्तेयं भजेत ॥

परमुद्दिश्यान्यस्य विन्दतो द्विशतो दण्डः ॥

न च प्राकाम्यमकामायां लभेत ॥

कन्यामन्यां दर्शयित्वाऽन्यां प्रयच्छतश्शत्यो दण्डस्तुल्यायां;
हीनायां द्विगुणः ॥

प्रकर्मण्यकु[4]मार्याश्चतुष्पञ्चाशत्पणो दण्डः । शुल्कव्ययक-
र्मणि[5] च प्रतिदद्यात् । अवस्थाय तज्जातं पश्चात्कृता द्विगुणं 290·3
दद्यात् । अन्यशोणितोपधाने द्विशतो दण्डः । मिथ्याभिशं-
सिनश्च । पुंसः शुक्लव्ययकर्मणि[6] च जीयेत ॥

---

[1] परशुल्कावरुद्धायां. [2] वरणादूर्ध्वमलभमानः. [3] याज्ञ II, 287.
[4] प्रकर्मकु. [5,6] कर्मणी.

290·4 न च प्राकाम्यमकामायां लभेत ॥

स्त्री प्रकृता सकामा समाना द्वादशपणं दद्यात्, प्रकर्त्री द्विगुणं । अकामायाश्शत्यो दण्डः आत्मरागार्थं[1] शुल्कदानं च । स्वयं प्रकृता राजदास्यं गच्छेत् ॥

बहिर्ग्रामस्य प्रकृतायां मिथ्याभिशंसिने च द्विगुणो दण्डः ॥ प्रसह्य कन्यामपहरतो द्विशतः ; ससुवर्णामुत्तमः ॥

बहूनां कन्यापहारिणां पृथग्यथोक्ता दण्डाः ॥

गणिकादुहितरं प्रकुर्वतश्चतुष्पञ्चाशत्पणो दण्डः ; शुल्क[2]-मातुर्भोगष्षोडशगुणः ॥

दासस्य दास्या वा दुहितरमदासीं प्रकुर्वतश्चतुर्विंशतिपणो दण्डः शुल्काबध्यदानं च । निष्क्रया[3]नुरूपां दासीं प्रकुर्वतो द्वादशपणो दण्डः वस्त्राबध्यदानं च ॥

साचिव्यावकाशदाने कर्तृसमो दण्डः ॥

प्रोषितपतिका[4]मपचरन्तीं पतिबन्धुस्तत्पुरुषो वा सङ्गृह्णीयात् । सङ्गृहीता पतिमाकांक्षेत । पतिश्चेत् क्षमेत, विसृज्येतोभयं । अक्षमायां स्त्रियः कर्णनासाच्छेदनं वधं जारश्च प्राप्नुयात् ॥

291·5 [5]जारं चोर इत्यभिहरतः पञ्चशतो दण्डः । हिरण्येन मुञ्चतस्तदष्टगुणः ।

[1] आत्मारागार्थं. [2] शुल्कं. [3] निष्क्रीया. [4] पतिता. [5] याज्ञ. II, 301.

[1]केशाकेशिकं सङ्ग्रहणं उपलिङ्गनाद्वा शरीरोपभोगानां त- 291·7
ज्जातेभ्यः स्त्रीवचनाद्वा ॥

परचक्राटवीहृतामोघप्रव्यूढामरण्येषु दुर्भिक्षे वा त्यक्तां प्रेतभावोत्सृष्टां वा परस्त्रियं निस्तारयित्वा यथासंभाषितं समुपभुञ्जीत। जातिविशिष्टा[2]मकामामपत्यवतीं निष्क्रयेण दद्यात्॥

चोरहस्तान्नदीवेगाद्दुर्भिक्षाद्देशविभ्रमात् ।
निस्तारयित्वा कान्तारं नष्टां[3] सक्तां मृतेति वा ॥
भुञ्जीत स्त्रियमन्येषां यथासंभाषितं नरः ।
न तु राजप्रतापेन प्रमुक्तां स्वजनेन वा ॥
न चोत्तमां न चाकामां पूर्वापत्यवतीं न च ।
ईदृशीं च न रूपेण[4] निष्क्रयेणोप[5]वाहयेत् ॥

इति कण्टकशोधने चतुर्थेऽधिकरणे कन्याप्रकर्म द्वादशोऽध्यायः
आदित एकोननवतिः.



## ८८ प्रक. अतिचारदण्डः.

ब्राह्मणमपेयमभक्ष्यं वा संग्रासयत उत्तमो दण्डः। क्षत्रियं, 292·4
मध्यमः। वैश्यं पूर्वस्साहसदण्डः। शूद्रं, चतुष्पञ्चाशत्पणो
दण्डः ।

[1] याज्ञ. II, 283. [2] विश्लिष्टा. [3] कान्तारान्नष्टाम्. [4] चानुरूपेण, [5] येणाप.
[6] याज्ञ. II, 296.

292·5 स्वयं ग्रसितारो निर्विषयाः कार्याः।

परगृहाभिगमने दिवा पूर्वस्साहसदण्डः। रात्रौ मध्यमः।

दिवा रात्रौ वा सशस्त्रस्य प्रविशत उत्तमोदण्डः।

भिक्षुकवैदेहकौ मत्तोन्मत्तौ बलादापादे चातिसन्निकृष्टाः प्रवृत्तप्रवेशाश्चादण्ड्याः, अन्यत्र प्रतिषेधात्।

स्ववेश्मनोऽपि रात्रा[1] दूर्ध्वं परिवार्यमारोहतः पूर्वस्साहसदण्डः। परवेश्मनो मध्यमः। ग्रामारामवाटभेदिनश्च।

ग्रामेऽन्यतः[2] सार्थिका ज्ञातसारा वसेयुः। मुषितं प्रवासितं चैषामनिर्गतं रात्रौ ग्रामस्वामी दद्यात्। ग्रामान्तरेषु वा मुषितं प्रवासितं विवीताध्यक्षो दद्यात्। अविवीतानां चोररज्जुकः। तथाऽप्यगुप्तानां सीमावरोधेन विचयं दद्युः। असीमावरोधे पञ्चग्रामी दशग्रामी वा।

दुर्बलं वेश्म, शकटमनुत्तब्धमूर्ध्वस्तम्भशस्त्रमनपाश्रयमप्रतिच्छन्नं श्वभ्रं कूपं कूटावपातं वा कृत्वा हिंसायां दण्डपारुष्यं विद्यात्।

वृक्षच्छेदने दम्यरश्मिहरणे चतुष्पदानामदान्तसेवने वा

293·7 [3] काष्ठलोष्टपाषाणदण्डबाणबाहुविक्षेपणेषु याने हास्तिने[4] च। सङ्घट्टने च "अपेहि" इति प्रक्रोशन्नदण्ड्यः।

हस्तिना रोषितेन हतो द्रोणान्नमद्यकुम्भं[5] माल्यानुलेपनं दन्तप्रमार्जनं च पटं दद्यात्। अश्वमेधावभृथस्नानेन तुल्यो

---

[1] नो विरात्रा. [2] मेष्वन्यतः. [3] याज्ञ. II, 198—200. [4] हास्तिना.
[5] द्रोणान्नं कुम्भं.

हस्तिना वध इति पादप्रक्षाळनम् । उदासीनवधे यातुरुत्त मो दण्डः ॥ 294·1

शृङ्गिणा दंष्ट्रिणा वा हिंस्यमानममोक्षयतस्स्वामिनः पूर्वस्साहसदण्डः । प्रतिक्रुष्टस्य द्विगुणः ॥

[1]शृङ्गिदंष्ट्रिभ्यामन्योन्यं घातयतस्तच्च तावच्च दण्डः । देवपशुमृषभमुक्षाणं गोकुमारीं वा वाहयतः पञ्चशतो दण्डः । प्रवासयत उत्तमः ॥

लोमदोहवाहनव्रजनोपकारिणां[2] क्षुद्रपशूनामादाने तच्च तावच्च दण्डः; प्रवासने च अन्यत्र देवपितृकार्येभ्यः ॥

[3]छिन्ननस्यमभग्नयुगं तिर्यक्प्रतिमुखागतं प्रत्यासरद्वा चक्रयुक्तं यातपशुमनुष्यसंबाधे वा हिंसायामदण्ड्यः, अन्यथा यथोक्तं मानुषप्राणिहिंसायां दण्डमभ्याभवेत् । अमानुषप्राणिवधे प्राणिदानं च ॥

बाले यातरि, यानस्थः स्वामी दण्ड्यः; अस्वामिनि यानस्थः प्राप्तव्यवहारो वा याता । बालाधिष्ठितमपुरुषं वा यानं राजा हरेत् ॥

कृत्याभिचाराभ्यां यत्परमापादयेत्, तदापादयितव्यः। कामं भार्यायामनिच्छन्त्यां कन्यायां वा दारार्थिना[4] भर्तरि भार्याया वा संवननकरणं; अन्यथा हिंसायां मध्यमस्साहसदण्डः 295·2

[1] याज्ञ. II, 300 [2] प्रजननोपकारिणां. [3] याज्ञ. II, 299. [4] वार्थिना.

293·5 मातापित्रोर्भगिनीं मातुलानीमाचार्याणीं[1] स्नुषां दुहितरं भगिनीं वाऽभिचरतः[2] लिङ्गच्छेदनं वधश्च। सकामा तदेव लभेत। दासपरिचारकाहितकभुक्ता च। ब्राह्मण्यामगुप्तायां, क्षत्रियस्योत्तमः, सर्वस्वं वैश्यस्य; शूद्रः कटाग्निना दह्येत। सर्वत्र राजभार्यागमने कुम्भीपातः[3] ॥

श्वपाकीगमने कृतकबन्धाङ्कः परविषयं गच्छेत्, श्वपाकत्वं वा। शूद्रश्वपाकस्य भार्यागमने वधः स्त्रियाः कर्णनासाच्छेदनम् ॥

प्रव्रजितागमने चतुर्विंशतिपणो दण्डः। सकामा तदेव लभेत ॥

[4]रूपाजीवायाः प्रसह्योपभोगे द्वादशपणो दण्डः॥

[4]बहूनामेकामधिचरतां पृथक्चतुर्विंशतिपणो दण्डः ॥

[5]स्त्रियमयोनौ गच्छतः पूर्वस्साहसदण्डः; पुरुषमधिमेहतश्च ॥

मैथुने द्वादशपणः तिर्यग्योनिष्वनात्मनः।
दैवतप्रतिमानां च गमने द्विगुणस्स्मृतः ॥

296·8 [6]अदण्ड्यदण्डने राज्ञो दण्डस्त्रिंशद्गुणोऽम्भसि।
वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः परम् ॥

---

1 र्याणां. 2 धिचरतः. 3 पाकः. 4 याज्ञ. II, 291. 5 याज्ञ. II, 293. 6 याज्ञ II, 307.

तेन तत्पूयते पापं राज्ञो दण्डापचारजम् । 296·9
शास्ता हि वरुणो राजा मिथ्या व्याचरतां नृषु ॥

इति कण्टकशोधने अतिचारदण्डः त्रयोदशोऽध्यायः
आदितः नवतिः

एतावता कौटिल्यस्यार्थशास्त्रस्य कण्टकशोधनं
चतुर्थमधिकरणं समाप्तम्.

---

# ५ अधि. योगवृत्तम्.

## ८९ प्रक. दाण्डकर्मिकम्.

---

दुर्गराष्ट्रयोः कण्टकशोधनमुक्तम् ॥

राजराज्ययोर्वक्ष्यामः—

राजानमवगृह्योप[1]जीविनः शत्रुसाधारणा वा ये मुख्या-स्तेषु गूढपुरुषप्रणिधिः कृत्यपक्षोपग्रहो वा सिद्धिः यथोक्तं पुर-स्तादुपजापोपसर्पो वा यथा च पारग्रामिके वक्ष्यामः ॥

राज्योपघातिनस्तु वल्लभास्संहत्या[2] वा ये मुख्याः प्रका-मशक्याः प्रतिषेद्धुं दूष्याः, तेषु धर्मरुचिरुपांशुदण्डं प्रयु-ञ्जीत । दूष्यं महामात्रभ्रातरं सत्कृतं[3] सत्री प्रोत्साह्य रा- 297·4
जानं दर्शयेत् । तं राजा दूष्यद्रव्योपभोगातिसर्गेण दूष्ये

---

[1] मवध्योप. [2] स्संहता. [3] असत्कृतं.

297·4 विक्रमयेत् । शस्त्रेण रसेन वा विक्रान्तं तत्रैव घातयेत्, "भ्रातृघातकोऽयम्" इति ॥

तेन पारशवः परिचारिकापुत्रश्च व्याख्यातौ । दूष्य[1]महामात्रं वा सत्त्रिप्रोत्साहितो भ्राता दायं याचेत । तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानमन्यत्र वा वसन्तं तं[2] तीक्ष्णो हत्वा ब्रूयात्—"हतोऽयं दायकामुकः" इति । ततो हतपक्षं परिगृह्येतरं निगृह्णीयात् ॥

दूष्यसमीपस्था वा सत्त्रिणो भ्रातरं दायं याचमानं घातेन परिभर्त्सयेयुः । तं रात्राविति—समानम् ॥

दूष्यमहामात्रयोर्वा यः पुत्रः पिता[3] वा पुत्रस्य दारानधिचरति भ्राता वा भ्रातुस्तयोः कापटिकमुखः कलहः पूर्वेण व्याख्यातः ॥

दूष्यमहामात्रमपुत्रमात्मसंभावितं वा सत्त्री—"राजपुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसि" इत्युपजपेत्[4] । प्रतिपन्नं राजा रहसि पूजयेत्—"प्राप्तयौवराज्यकालं त्वां महामात्रभयान्नाभिषिञ्चामि" इति । तं सत्त्री महामात्रवधे योजयेत् । विक्रान्तं तत्रैव घातयेत्—"पितृघातकोऽयं" इति ॥

298·6 भिक्षुकी वा दूष्यभार्यां सांवननकी[5]भिरौषधीभिस्संवास्य रसेनातिसंदध्यात् । इत्याप्यप्रयोगं[6] दूष्यमहामात्रमटव्यां पर-

---

[1] दूष्यं. [2] नास्ति. [3] पुत्रः पितुः पिता. [4] पचरेत्.
[5] सांवादनकी [6] इत्याद्यः प्रयोगः.

ग्रामं वा हन्तुं, कान्तारव्यपाहिते[1] वा देशे राष्ट्रपालमन्तपालं वा स्थापयितुं नागरस्थानं वा कुपितमप[2]गृहीतुं, सार्थातिवाह्यं प्रत्यन्ते वा सप्रत्यादेयमादातुं फल्गुबल[3]तीक्ष्णयुक्तं[4] प्रेषयेत्। रात्रौ दिवा वा युद्धे प्रवृत्ते तीक्ष्णाः प्रतिरोधकव्यञ्जना वा हन्युः "अभियोगे हतः" इति ॥ 298·7

यात्राविहारगतो वा दूष्यमहामात्रान् दर्शनायाह्वयेत्। ते गूढशस्त्रैस्तीक्ष्णैस्सह प्रविष्टा मध्यमकक्षायामात्मविचयमन्तःप्रवेशनार्थं दद्युः। ततो दौवारिकाभिगृहीतास्तीक्ष्णा "दूष्यप्रयुक्ताः स्मः" इति ब्रूयुः। ते तदभि[5]विख्याप्य दूष्यान् हन्युः। तीक्ष्णस्थाने चान्ये वध्याः ॥

बहिर्विहारगतो वा दूष्यान् आसन्नावासान् पूजयेत्। तेषां देवीव्यञ्जना वा दुस्त्री रात्रावावासेषु गृह्येतेति—समानं पूर्वेण ॥

दूष्यमहामात्रं वा सूदो भक्षकारो वा "ते शोभनः" इति स्तवेन भक्ष्यभोज्यं याचेत। बहिर्वा क्वचिदध्वगतं[6] पानीयं तदुभयं रसेन योजयित्वा प्रतिस्वादने तावेवोपयोजयेत्। तदभिविख्याप्य "रसदाविति" घातयेत् ॥

अभिचारशीलं वा सिद्धव्यञ्जनो गोधाकूर्मकर्कटकुटानां[7] लक्षण्यानामन्यतमप्रकाशनेन मनोरथानवाप्स्यतीति ग्राहयेत्। 299·5

[1] व्यवहिते. [2] मव. [3] बलं. [4] युक्तः [5] तदपि.
[6] गतः. [7] कर्कटककूटानां.

299·5 प्रतिपन्नं कर्माणि रसेन लोहमुसलैर्वा घातयेत्—"कर्मण्यापदा-हतः" इति ॥

चिकित्सकव्यञ्जनो वा दौरामिक[1]मसाध्यं वा व्याधिं दूष्यस्य स्थापयित्वा भैषज्याहारयोगेषु रसेनातिसन्दध्यात् ॥

सूदाराळिकव्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसन्दध्युः इत्युपनिषत्प्रतिषेधः ॥

उभयदूष्यप्रतिषेधस्तु—यत्र दूष्यः प्रतिषेद्धव्यस्तत्र दूष्यमेव फल्गुबलतीक्ष्णयुक्तं प्रेषयेत्—"गच्छामुष्मिन् दुर्गे राष्ट्रे वा सैन्यमुत्थापय ; हिरण्यं वा । वल्लभाद्वा हिरण्यमाहारय ; वल्लभकन्यां वा प्रसह्यानय ; दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मणामन्यतमद्वा कारय ; राष्ट्रपालमन्तपालं वा ; यश्च त्वा प्रतिषेधयेन्न वा ते साहाय्यं दद्यात्, स बन्धव्यस्स्यात्" इति । तथैव इतरेषां प्रेषयेत् "अमुष्याविनयः प्रतिषेद्धव्यः" इति । तमेतेषु कलहस्थानेषु कर्मप्रतिघातेषु वा विवदमानं तीक्ष्णाश्शस्त्रं पातयित्वा प्रच्छन्नं हन्युः । तेन दोषेणेतरे नियन्तव्याः ।

300·6 पुराणां ग्रामाणां कुलानां वा दूष्याणां सीमाक्षेत्रफल[2]वेश्ममर्यादासु द्रव्योपकरणसस्यवाहनहिंसासु प्रेक्षाकृत्योत्सवेषु वा समुत्पन्ने कलहे तीक्ष्णैरुत्पादिते वा तीक्ष्णाश्शस्त्रं पात-

[1] दौरात्मिक. [2] खल.

यित्वा ब्रूयुः "एवं क्रियन्ते येऽमुना कलहायन्ते" इति। तेन दोषेणेतरे नियन्तव्याः। 300·6

येषां वा दूष्याणां जातमूलाः कलहाः तेषां क्षेत्रखलवेश्मान्यादीपयित्वा बन्धुसम्बन्धिषु वाहनेषु वा तीक्ष्णाः शस्त्रं पातयित्वा तथैव ब्रूयुः "अमुना [1] प्रयुक्ताः स्मः" इति। तेन दोषेणेतरे नियन्तव्याः।

दुर्गराष्ट्रदूष्यान् वा सत्रिणः परस्परस्यावेशनिकान् [2] कारयेयुस्तत्र रसदा रसं दद्युस्तेन दोषेणेतरे नियन्तव्याः।

भिक्षुकी वा दूष्यराष्ट्रमुख्यं दूष्यराष्ट्रमुख्यस्य भार्या स्नुषा दुहिता वा कामयत इत्युपजपेत् [3]। प्रतिपन्नस्याभरणमादाय स्वामिने दर्शयेत्—"असौ ते मुख्यो यौवनोत्सिक्तो भार्यां स्नुषां दुहितरं वाऽभिमन्यते" इति। तयोः कलहो रात्राविति समानम्।

दूष्यदण्डोपनतेषु तु युवराजः सेनापतिर्वा किञ्चिदुपकृत्यापक्रान्तो विक्रमेत। ततो राज [4] दूष्यदण्डोपनतानेव प्रेषयेत् फल्गुबलतीक्ष्णयुक्तानिति समानास्सर्वे एव योगाः।

तेषां च पुत्रेष्वनुक्षिपत्सु [5] यो निर्विकारः स पितृदायं लभेत। 301·4 एवमस्य पुत्रपौत्राननुवर्तते राज्यमपास्तपुरुषदोषमिति।

---

[1] आत्मना· [2] रस्यै वशामिकां. [3] इत्युपाजपेत्. [4] राजा. [5] नुक्षियत्सु.

301·5 स्वपक्षे परपक्षे वा तूष्णीं दण्डं प्रयोजयेत् ।
आयन्सां[1] च तदात्वे च क्षमावानविशङ्कितः ॥

इति योगवृत्ते पञ्चमाधिकरणे दण्डकार्मिकं[2] प्रथमोध्यायः
आदित एकनवतिः

## १० प्रक कोशाभिसंहरणम्.

कोशमकोशः प्रत्युत्पन्नार्थकृच्छ्रं[3] सङ्गृह्णीयात् । जनपदं महान्तमल्पप्रमाणं वा देवमातृकं प्रभूतधान्यं धान्यस्यांशं तृतीयं चतुर्थं वा याचेत। यथासारं मध्यमवरं वा दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मोपकारिणं प्रत्यन्त[4]मल्पप्राणं वा न याचेत । धान्यपशुहिरण्यादि निविशमानाय दद्यात् । चतुर्थमंशं धान्यानां बीजभक्तशुद्धं च हिरण्येन क्रीणीयात् । अरण्यजातं श्रोत्रियस्वं च परिहरेत् । तदप्यनुग्रहेण क्रीणीयात् । तस्याकरणे वा समाहर्तृपुरुषा ग्रीष्मे कर्षकाणामुद्वापं कारयेयुः । प्रमदापन्न[5]स्यात्ययं द्विगुणमुदाहरन्तो बीजकाले बीजलेख्यं कुर्युः । निष्पन्ने हरितपक्वादानं वरयेयुः[6] अन्यत्र शाककटभङ्गमुष्टिभ्याम्। देवपितृपूजादानार्थं गवार्थं वा भिक्षुकग्रामभृतकार्थं च राशिमूलं परिहरेयुः ।

302·2 स्वसस्यापहारिणः प्रतिपात्रो[7]ऽष्टगुणः । परसस्यापहारिणः पञ्चाशद्गुणः सीतात्ययः । स्ववर्गस्य बाह्यस्य तु वधः ।

---

[1] आयत्यां. [2] कार्मिकं. [3] कृच्छ्रः. [4] व्यत्यस्त. [5] प्रमदावस्कन्न.
[6] वारयेयुः. [7] प्रतिपातो.

चतुर्थमंशं धान्यानां षष्ठं वन्यानां तूललाक्षाक्षौमवल्ककार्पा- 302·3
सरौमकौशेयकौषध[1]गन्धपुष्पफलशाकपण्यानां काष्ठवेणुमांसवल्लू-
राणां च गृह्णीयुः। दन्ताजिनस्यार्धम्। अनिसृष्ट[2]विक्रीणानस्य
पूर्वस्साहसदण्डः।

इति कर्षकेषु प्रणयः ॥

सुवर्णरजतवज्रमणिमुक्ताप्रवाळाश्वहस्तिपण्याः पञ्चाशत्कराः।
सूत्रवस्त्रताम्रवृत्तकंसगन्धभैषज्यसीधु[3]पण्याश्चत्वारिंशत्कराः। धा-
न्यरसलोहपण्याः शकटव्यवहारिणश्च त्रिंशत्कराः। काचव्यव-
हारिणो महाकारवश्च विंशतिकराः। क्षुद्रकारवो वर्धकिपोषका-
श्च दशकराः। काष्ठवेणुपाषाणमृद्भाण्डपक्वान्नहरितपण्याः प-
ञ्चकराः। कुशीलवा रूपाजीवाश्च वेतनार्धं दद्युः। हिरण्य-
करकर्मण्यानाहारयेयुः; न चैषां कञ्चिदपराधं परिहरेयुः। ते
ह्यपरिगृहीतमभिनीय विक्रिणीरन्।

इति व्यवहारिषु प्रणयः ॥

कुक्कुटसूकरमर्धं दद्यात्। क्षुद्रपशवष्षड्भागम्। गोमहिषा-
श्वतरखरोष्ट्राश्च दशभागम्। बन्धकिपोषका राजप्रेष्याभिः
परमरूपयौवनाभिः कोशं संहरेयुः ॥

इति योनिपोषकेषु प्रणयः ॥

सकृदेव न द्विः प्रयोज्यः। तस्याकरणे वा समाहर्ता का- 303·4

[1] कौषढ (ध). [2] तदनिसृष्टं. [3] शीधु.

303·4 यैमपादिश्य पौरजानपदान् भिक्षेत। योगपुरुषाश्चात्र पूर्वमतिमात्रं दद्युः। एतेन प्रदेशेन राजा पौरजानपदान् भिक्षेत। कापटिकाश्चैनानल्पं प्रयच्छतः कुत्सयेयुः। सारतो वा हिरण्यमाढ्यान्याचेत। यथोपकारं वा स्ववशा वा यदुपहरेयुः स्थानछत्रवेष्टनविभूषाश्चैषां हिरण्येन प्रयच्छेत्। पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं देवद्रव्यं वा कृत्यकराः प्रेतस्य दग्धगृहस्य वा हस्ते न्यस्तामित्युपहरेयुः॥

देवताध्यक्षो दुर्गराष्ट्रदेवतानां यथास्वमेकस्थं कोशं कुर्यात्। तथैव चाहरेत्[1]। दैवतचैत्यं सिद्धपुण्यस्थानमौपपादिकं[2] वा रात्रावुत्थाप्य यात्रासमाजाभ्यामाजीवेत्। चैत्योपवनवृक्षेण वा देवताभिगमनमनार्तवपुष्पफलयुक्तेन ख्यापयेत्। मनुष्यकरं वा वृक्षे रक्षोभयं रूपयित्वा सिद्धव्यञ्जनाः पौरजानपदानां हिरण्येन प्रतिकुर्युः। सुरङ्गायुक्ते वा कूपे नागमनियतशिरस्कं हिरण्योपहरणे[3] दर्शयेत्। नागप्रतिमायामन्तश्छिद्रायां चैत्रच्छिद्रे वल्मीकच्छिद्रे वा सर्पदर्शनमाहारेण प्रतिबन्धसंज्ञं कृत्वा श्रद्दधानाना[4]दर्शयेत्। अश्रद्दधानानामाचमनप्रोक्षणेषु रसमुपचाय्य[5] देवताभिशापं ब्रूयात्। अभित्यक्तं वा दंशयित्वा योगदर्शनप्रतीकारेण वा कोषाभिसंहरणं कुर्यात्॥

305·1 वैदेहकव्यञ्जनो वा प्रभूतपण्यान्तेवासी व्यवहरेत। स यदा पण्यमूल्ये निक्षेपप्रयोगैरुपचितस्स्यात्तदैनं रात्रौ मोषयेत्॥

1 चावहरेत्. 2 स्थानमौमवार्दिकं. 3 हारेण. 4 नानां. 5 रसमवपाद्य.

एतेन रूपदर्शकः सुवर्णकारश्च व्याख्यातौ ॥ 305·2

वैदेहकव्यञ्जनो वा प्रख्यातव्यवहारः प्रवहणनिमित्तं याचितकमवक्रीतकं वा रूप्यसुवर्णभाण्डमनेकं गृह्णीयात् । समाजे वा सर्वपण्यसन्दोहेन प्रभूतं हिरण्यसुवर्णमृणं गृह्णीयात् । प्रतिभाण्डमूल्यं च । तदुभयं रात्रौ मोषयेत् ।

साध्वीव्यञ्जनाभिः स्त्रीभिर्दूष्यानुन्मादयित्वा तासामेव वेश्मस्वभिगृह्य सर्वस्वान्याहरेयुः ॥

दूष्यकुल्यानां वा विवादे प्रत्युत्पन्ने रसदाः प्रणिहिता रसं दद्युः । तेन दोषेणेतरे पर्यादातव्याः ॥

दूष्यमभित्यक्तोप[1] श्रद्धेयापदेशं पण्यं हिरण्यनिक्षेपमृणप्रयोगं दायं वा याचेत । दासशब्देन वा दूष्यमालम्बेत । भार्यामस्य स्नुषां दुहितरं वा दासीशब्देन भार्याशब्देन वा । तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्—"हतोऽयमित्थं कामुकः" इति । तेन दोषेणेतरे पर्यादातव्याः ॥

सिद्धव्यञ्जनो वा दूष्यं जम्भकविद्याभिः प्रलोभयित्वा ब्रूयात् "अक्षयं हिरण्यं राजद्वारिकं स्त्रीहृदयमरिव्याधिकमायुष्यं पुत्रीयं वा कर्म जानामि" इति । प्रतिपन्नं चैत्यस्थाने रात्रौ प्रभूतसुरामांसगन्धमुपहारं कारयेत् । एकरूपं चात्र 306·1

[1] वा.

306·1 हिरण्यं पूर्वं निखातं प्रेताङ्गं प्रेतशिशुर्वा यत्र निहितस्स्यात् ततो हिरण्यमस्य दर्शयेदत्यल्पमिति च ब्रूयात्। "प्रभूतहिरण्यहेतोः पुनरुपहारः कर्तव्यः इति, स्वयमेवैतेन हिरण्येन श्वोभूते प्रभूतमौपचारिकं[1] क्रीणीहीति"। तेन[2] हिरण्येनौपहारिकक्रये गृह्येत ॥

मातृव्यञ्जनाया वा पुत्रो मे त्वया हत इत्यवरूपिता स्यात्। संसिद्धमेवास्य रात्रियोगे वनयागे वनक्रीडायां वा प्रवृत्तायास्तीक्ष्णा[3] विशस्याभित्यक्त[4]मीतनयेयुः।

दूष्यस्य वा भृतकव्यञ्जनो वेतनहिरण्ये कूटरूपं प्रक्षिप्य प्ररूपयेत्।

कर्मकारव्यञ्जनो वा गृहे कर्म कुर्वाणस्तेन कूटरूपकारकोपकरणमपनिदध्यात्।

चिकित्सकव्यञ्जनो वा गदमगदापदेशेन प्रत्यासन्नो वा दूष्यस्य सत्री प्रणिहितमभिषेकभाण्डममित्रशासनं च कापटिकमुखेन आचक्षीत, कारणं च ब्रूयात्। एवं दूष्येष्वधार्मिकेषु च वर्तेत। नेतरेषु।

307·3 पक्वं पक्वमिवारामात् फलं राज्यादवाप्नुयात्।
आमच्छेदभयादामं वर्जयेत्कोपकारकम् ॥

इति योगवृत्ते पञ्चमेऽधिकरणे कोशाभिसंहरणं द्वितीयोऽध्यायः
आदितो द्विनवतिः.

---

[1] हारिकं. [2] स तेन. [3] या तीक्ष्णा. [4] भिव्यक्त.

# ९१ प्रक. भृत्यभरणीयम्.

दुर्गजनपदशक्त्या भृत्यकर्म समुदायपादेन[1] स्थापयेत् । कार्यसाधनसहेन वा भृत्यलाभेन शरीरमवेक्षेत । न धर्मार्थौ पीडयेत् । 307·5

ऋत्विगाचार्यमन्त्रिपुरोहितसेनापतियुवराजराजमातृराजमहिष्योऽष्टचत्वारिंशत्साहस्राः । एतावता भरणेनानास्वाद्य[2]त्वमकोपकं चैषां भवति ।

दौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातारश्चतुर्विंशतिसाहस्राः । एतावता कर्मण्या भवन्ति ।

कुमारकुमारमातृनायकाः पौरव्यावहारिककार्मान्तिकमन्त्रिपरिषद्राष्ट्रान्तपालाश्च द्वादशसाहस्राः । स्वामिपरिबन्धबलसहाया ह्येतावता भवन्ति ।

श्रेणीमुख्या हस्त्यश्वरथमुख्याः प्रदेष्टारश्च अष्टसाहस्राः । स्ववर्गानुकर्षिणो ह्येतावता भवन्ति ।

पत्त्यश्वरथहस्त्यध्यक्षाः द्रव्यहस्तिवनपालाः चतुस्साहस्राः । रथिकानीकचिकित्सकाश्वदमकवर्धकयो योनिपोषकाश्च द्विसाहस्राः ।

कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकसूतमागधाः पुरोहितपुरुषास्सर्वाध्यक्षाश्च साहस्राः । 308·5

[1] समुदायपा (पा) देन. [2] नास्पद्य.

308·6 शिल्पवन्तः पादाताः सङ्ख्यायकलेखकादिवर्गः पञ्चशताः। कुशीलवास्त्वर्धतृतीयशताः। द्विगुणवेतनाश्चैषां तूर्यकराः। कारुशिल्पिनो विंशतिशतिकाः।

चतुष्पदद्विपदपरिचारकपारिकर्मिकोपस्थायिकपालकविष्टिबन्धकाष्षष्टिवेतनाः।

आर्य[1]युक्तारोहकमाणवकशैलखनकास्सर्वोपस्थायिन आचार्या विद्यावन्तश्च पूजावेतनानि यथार्हं लभेरन् पञ्चशतावरं सहस्रपरम्।

दशपणिको योजने दूतः मध्यमः; दशोत्तरे द्वि[2]गुणवेतन आयोजनशतादिति।

समानविद्येभ्यस्त्रिगुणवेतनो राजा राजसूयादिषु क्रतुषु राज्ञस्सारथिः साहस्रः।

कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनास्साहस्राः।

ग्रामभृतकसत्त्रितीक्ष्णरसदभिक्षुक्यः पञ्चशताः।

चारसञ्चारिणः तृतीय[3]शताः प्रयासवृद्धवेतना वा।

शतवर्गसहस्रवर्गाणामध्यक्षा भक्तवेतनलाभमादेशं विक्षेपं च कुर्युः। अविक्षेपो राजपरिग्रहदुर्गराष्ट्ररक्षावेक्षणेषु च नित्यमुख्यास्स्युरनेकमुख्याश्च।

309·7 कर्मसु मृतानां पुत्रदारा भक्तवेतनं लभेरन्। बालवृद्धव्याधिताश्चैषामनुग्राह्याः। प्रतव्याधितसूतिकाकृत्येषु चैषामर्थमानकर्म कुर्यात्।

---

[1] कार्य.
[2] दशोत्तरद्वि.
[3] अर्धतृतीय.

अल्पकोशः कुप्यपशुक्षेत्राणि दद्यात्; अल्पं च हिरण्यम्। 309·8
शून्यं वा निवेशयितुमभ्युत्थितो हिरण्यमेव दद्यात्; न ग्रामं ग्रामसजातिव्यवहारस्थापनार्थम्। एतेन भृतानां च[1] विद्याकर्मभ्यां भक्तवेतनविशेषं च कुर्यात्। षष्टिवेतनस्याढकं कृत्वा हिरण्यानुरूपं भक्तं कुर्यात्

पत्त्यश्वरथद्विपाः सूर्योदये बहुस्सन्धिदिवसवर्जं शिल्पयोग्याः कुर्युः। तेषु राजा नित्ययुक्तस्स्यादभक्ष्णं चैषां शिल्पदर्शनं कुर्यात्। कृतनरेन्द्राङ्कं शस्त्रावरणमायुधागारं प्रवेशयेत्। अशस्त्राश्चरेयुरन्यत्र मुद्रानुज्ञातात्। नष्टं विनष्टं वा द्विगुणं दद्यात्। विध्वस्तगणनां च कुर्यात्। सार्थिकानां शस्त्रावरणमन्तपाला गृह्णीयुः समुद्रमवचारयेयुर्वा। यात्रामभ्युत्थितो वा सेनामुद्योजयेत्। ततो वैदेहकव्यञ्जनास्सर्वपण्यान्यायुधीयेभ्यो यात्राकाले द्विगुणप्रत्यादेयानि दद्युः। एवं राजपण्यविक्रयो[2] वेतनप्रत्यादानं च भवति॥

एवमवेक्षितायव्ययः कोशदण्डव्यसनं नावाप्नोति।

इति भक्तवेतनविकल्पः।

सत्रिणश्चायुधीयानां वेश्याः कारुकुशीलवाः। 310·9
दण्डवृद्धाश्च जानीयुश्शौचाशौचमतन्द्रिताः॥

इति योगवृत्ते पञ्चमेऽधिकरणे भृत्यभरणीयं तृतीयोध्यायः
आदितस्त्रिणवतिः.

---

[1] भृतानामभृतानां च [2] पण्ययोगविक्रयो·

# १२ प्रक. अनुजीविवृत्तम्

310·11 लोकयात्रावित् राजानमात्मद्रव्यप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत[1] । यं वा मन्येत यथा—"अहमाश्रयेप्सुरेवमसौ विनयेप्सुराभिगामिकगुणयुक्तः" इति ॥

द्रव्यप्रकृतिहीनमप्येनमाश्रयेत । न त्वेवानात्मसम्पन्नम् । अनात्मवान् हि नीतिशास्त्रद्वेषादनार्थ्यसंयोगाद्वा प्राप्यापि महदैश्वर्यं न भवति । आत्मवति लब्धावकाशः शास्त्रानुयोगं दद्यात् । अविसंवादाद्धि स्थानस्थैर्यमवाप्नोति । मतिकर्मसु पृष्टः तदात्वे च आयत्यां च धर्मार्थसंयुक्तं समर्थं प्रवीणवदपरिषद्भीरुः कथयेत् । ईप्सितः पणेत—धर्मार्थानुयोगं "अविशिष्टेषु बलवत्संयुक्तेषु दण्डधारणं, बलवत्संयोगे तदात्वे च दण्डधारणमिति, न कुर्याः; पक्षं वृत्तिं गुह्यं च मे नोपहन्याः; संज्ञया च त्वां कामक्रोधदण्डनेषु वारयेयम्" 311·4 इति । आदिष्टः प्रदिष्टायां भूमावनुज्ञातः प्रविशेत् । उपविशेच्च पार्श्वतस्सन्निकृष्टः विप्रकृष्टः परासनं, विगृह्य कथनमसभ्यप्र[2]त्यक्षमश्रद्धेयमनृतं च वाक्यमुच्चैरनर्माणि हासं वातष्ठीवने च शब्दवती न कुर्यात् । मिथः कथनमन्येन, जनवादे द्वन्द्वकथनं, राज्ञो वेषमुद्धतकुहकानां च, रत्नातिशयप्रकाशाभ्यर्थनं एकाक्ष्योष्ठनिर्भोगं भ्रुकुटीकर्म, वाक्यापक्षेपणं च ब्रुवति; बलवत्संयुक्तविरोधं स्त्रीभिः स्त्रीदर्शिभिस्सामन्तदूतैर्द्वेष्यपक्षावक्षिप्तानर्थ्यैश्च प्रतिसंसर्गमेकार्थचर्यां सङ्घातं च वर्जयेत् ॥

[1] येत्. [2] मसभ्यमप्र.

अहीनकालं राजार्थे स्वार्थं प्रियहितैस्सह । 312·2
परार्थदेशकाले च ब्रूयाद्धर्मार्थसंहितम् ॥

पृष्टः प्रियहितं ब्रूयान्न ब्रूयादहितं प्रियम्।
अप्रियं वा हितं ब्रूयाच्छृण्वतोऽनुमतो मिथः ॥

तूष्णीं वा प्रतिवाक्ये स्यात् द्वेष्यादींश्च न वर्णयेत् ।
अप्रिया अपि दक्षास्स्युः तद्भावाद्ये[1] बहिष्कृताः ॥

अनर्थ्यांश्च प्रिया दृष्ट्वा[2] चित्ताज्ञानानुवर्तिनीः ।
अलिहास्येष्वभिहसेद्धोरहासांश्च वर्जयेत् ॥

परात्सङ्क्रामयेद्धोरं न च घोरं परे वदेत् ।
तितिक्षेतात्मनश्चैव क्षमावान् पृथिवीसमः ॥

आत्मारक्षा हि सततं पूर्वं कार्या विजानता ।
अग्नाविव हि संप्रोक्ता वृत्ती राजोपजीविनाम् ॥

एकदेशं दहेदग्निः शरीरं वा परं गतः । 312·6
सपुत्रदारं राजा तु घातयेद्वर्धयेत वा ॥

इति योगवृत्ते अनुजीविवृत्तं चतुर्थोऽध्यायः
आदितश्चतुर्णवतिः.



[1] वान्ये. [2] दृष्टा. [3] उच्चैः प्रहसनं खासं ष्ठीवनं कुत्सनं तथा । जृम्भणं गात्रभङ्गं च पर्वास्फोटं च वर्जयेत् ॥ इति का. ५ सर्गे.

## १३ प्रक. समयाचारिकम्.

313·1 नियुक्तः कर्मसु व्ययविशुद्धमुदयं दर्शयेत् ॥

आभ्यन्तरं बाह्यं गुह्यं प्रकाश्यमात्ययिकमुपेक्षितव्यं वा कार्यं "इदमेवम्" इति शेषयेच्च[1] ॥

मृगयाद्यूतमद्यस्त्रीषु प्रसक्तं चानुवर्तेत । प्रशंसाभिरासन्नश्चास्य व्यसनोपघाते प्रयतेत । परोपजापातिसन्धानोपाधिभ्यश्च रक्षेत् । इङ्गिताकारौ चास्य लक्षयेत् ।

कामद्वेषहर्षदैन्यव्यवसायभयद्वन्द्वविपर्यासमिङ्गिताकाराभ्यां हि मन्त्रसंवरणार्थमाचरति ।

प्रज्ञादर्शने प्रसीदति । वाक्यं प्रतिगृह्णाति । आसनं ददाति । विविक्तो दर्शयते । शङ्कास्थाने नातिशङ्कते । कथायां रमते । परिज्ञाप्येष्ववेक्षते । पथ्यमुक्तं सहते । स्मयमानो नियुङ्क्ते । हस्तेन स्पृशति । श्लाघ्ये नोपहसति । परोक्षं गुणं ब्रवीति । भक्ष्येषु स्मरति । सह विहारं याति । व्यसनेऽभ्यवपद्यते । तद्भक्तीन् पूजयति । गुह्यमाचष्टे । मानं वर्धयति । अर्थं करोति । अनर्थं प्रतिहन्ति इति तुष्टज्ञानम् ॥

एतदेव विपरीतमतुष्टस्य ॥

313·4 भूयश्च वक्ष्यामः—सन्दर्शने कोपः, वाक्यस्याश्रवणप्रतिषेधौ, आसनचक्षुषोरदानं, वर्णस्वरभेदः, एकाक्षिभ्रुकुट्यो-

---

[1] विशेषयेच्च,

ष्ठनिर्भेदः, स्वेदश्वासस्मितानामस्थानोत्पत्तिः, परिमन्त्रणं, अकस्माद्व्रजनं[1], वर्धनं अन्यस्य, भूमिगात्रविलेपनं[2], अन्यस्योपतोदनं, विद्यावर्णदेशकुत्सा, समदोषनिन्दा, प्रतिदोषनिन्दा, प्रतिलोमस्तवः, सुकृतानपेक्षणं[3], दुष्कृतानुकीर्तनं, प्रविष्टा[4]वधानः अतिस्रागः, मिथ्याभिभाषणं, राजदर्शिनां च तद्वृत्तान्यत्वं, वृत्तिविकारं चावेक्षेताप्यमानुषाणाम् ॥ 313·5

"अयमुच्चैः सिञ्चतीति" कात्यायनः ॥

"प्रवव्राज क्रौञ्चोऽपसव्यम्" इति कणिङ्को भारद्वाजः ॥

"तृणमतिदीर्घम्" इति नारायणः ॥

"शीता शाटीति" घोटमुखः ॥

"हस्ती प्रत्यौक्षीदिति" किञ्जल्कः ॥

"रथाश्वं प्राशंसीत्[5]" इति पिशुनः ॥

"प्रतिवरणे शूनम्[6]" इति पिशुनपुत्रः ॥

अर्थमानाप[7]क्षेपे च परित्यागः । स्वामिशीलमात्मनश्च किल्बिषमुपलभ्य वा प्रतिकुर्वीत मित्रमुपकृष्टं वाऽस्य गच्छेत् ॥

तत्रस्थो दोषनिर्घातं मित्रैर्भर्तरि चाचरेत् । 314·10
ततो भर्तरि जीवे वा मृते वा पुनराव्रजेत् ॥

इति योगवृत्ते समयाचारिकं पञ्चमोऽध्यायः
आदितः पञ्चनवतिः.

---

1 द्राजिनं. 2 विलेखनं. 3 तानवेक्षणं. 4 पृष्ठा.
5 प्राशंसेत्. 6 प्रतिरवणे शुनः. 7 व.

## १४, १५ प्रक. राज्यप्रतिसंधानमेकैश्वर्यं च.

315·1 राजव्यसनमेवममात्यः प्रतिकुर्वीत। प्रागेव मरणाबाधभयाद्राज्ञः प्रियहितोपग्रहेण मासाद्विमासान्तरं दर्शनं स्थापयेत्। "देशपीडापहममित्रापहमायुष्यं पुत्रीयं वा कर्म राजा साधयति" इत्यपदेशेन राजव्यञ्जनमनुरूपवेलायां प्रकृतीनां दर्शयेत्, मित्रामित्रदूतानां च। तैश्च यथोचितां संभाषां अमात्यमुखो गच्छेत्[1]। दौवारिकान्तर्वंशिकमुखश्च यथोक्तं राजप्रणिधिमनुवर्तयेत्। अपकारिषु च हेडं प्रसादं वा प्रतिकान्तं[2] दर्शयेत्। प्रासादमेवोपकारिषु। आप्तपुरुषाधिष्ठितौ दुर्गप्रत्यन्तस्थौ वा कोशदण्डावेकस्थौ कारयेत्। तुल्य[3] कुमारमुख्यांश्चान्यापदेशेन॥

यश्च मुख्यः पक्षवान् दुर्गाटवीस्थो वा वैगुण्यं भजेत तमुपग्राहयेत्। बाह्याबाधां[4] वा यात्रां प्रेषयेत् मित्रकुलं वा॥

यस्माच्च सामन्तादाबाधां[5] पश्येत्तमुत्सवविवाहहस्तिबन्धनाश्वपण्यभूमिप्रदानापदेशेन अवग्राहयेत्॥

स्वमित्रेण वा ततः सन्धिमदूष्यं कारयेत्॥

आटविकामित्रैर्वा वैरं ग्राहयेत्।

तत्कुलीनमवरुद्धं वा भूम्येकदेशेनोपग्राहयेत्॥

316·2 कुल्यकुमारमुख्योपग्रहं कृत्वा वा कुमारमभिषिक्तमेव दर्शयेत्। दाण्डकर्मिकवद्वा राज्यकण्टकानुद्धृत्य राज्यं कारयेत्॥

[1] यच्छेत्. [2] प्रकृतिकान्तं. [3] कुल्य. [4] बह्वाबाधां. [5] दाबाधं.

यदि वा कश्चिन्मुख्यः सामन्तादीनामन्यतमः कोपं भजेत, तं "एहि राजानं त्वा करिष्यामि" इत्यावाहयित्वा घातयेत्। आपत्प्रतीकारेण वा साधयेत्। 316·3

युवराजे वा क्रमेण राज्यभारमारोप्य राजव्यसनं ख्यापयेत्।

परभूमौ राजव्यसने मित्रेणामित्रव्यञ्जनेन शत्रोस्सन्धिमवस्थाप्यापगच्छेत्। सामन्तादीनामन्यतमं वाऽस्य दुर्गे स्थापयित्वापगच्छेत्। कुमारमभिषिच्य वा प्रतिव्यूहेत। परेणाभियुक्तो वा यथोक्तमापत्प्रतीकारं कुर्यात्॥

एवमेकैश्वर्यममात्यः[1] कारयेदिति—कौटि[2]ल्यः॥

"नैवम्" इति भारद्वाजः—"प्रम्रियमाणे राजन्यमात्यः कुल्यकुमारमुख्यान् परस्परं मुख्येषु वा विक्रामयेत्[3]। विक्रान्तं प्रकृतिकोपेन घातयेत्। कुल्यकुमार[4]मुख्यानुपांशुदण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात्। राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग पुनरमात्यप्रकृतिर्ह्येकप्रग्रहो राज्यस्य। तत्स्वयमुपस्थितं नावमन्येत। स्वयमारूढा हि स्त्री त्यज्यमानाऽभिशपतीति लोकप्रवादः॥

कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम्। 317·2
दुर्लभस्स पुनस्तस्य कालः कर्म चिकीर्षतः॥

---

[1] मात्यं. [2] ट. [3] विक्रमयेत. [4] प्रकृतिकुमार.

317·3 "प्रकृतिकोपकर्माधार्मिष्ठमनैकान्तिकं चैतत्" इति कौटि[1]ल्यः—राजपुत्रमात्मसम्पन्नं राज्ये स्थापयेत् । संपन्नाभावे व्यसनिनं कुमारं राजकन्यां गर्भिणीं देवीं वा पुरस्कृत्य महामात्रान् सन्निपात्य ब्रूयात्—"अयं वो निक्षेपः, पितरमस्यावेक्षध्वं सत्त्वाभिजनमात्मनश्च; ध्वजमात्रोऽयं, भवन्त एव स्वामिनः; कथं वा क्रियाम्[2]" इति । तथा ब्रुवाणं योगपुरुषा ब्रूयुः—"कोऽन्यो भवत्पुरोगादस्माद्राज्ञश्चातुर्वर्ण्यमर्हति पालयितुम्" इति । तथोत्यमात्यः कुमारं राजकन्यां गर्भिणीं देवीं वाऽधिकुर्वीत । बन्धुसम्बन्धिनां मित्रामित्रदूतानां च दर्शयेत् । भक्तवेतनविशेषममात्यानामायुधीयानां च कारयेत् । "भूयश्चाऽयं वृद्धः करिष्यति" इति ब्रूयात् । एवं दुर्गराष्ट्रमुख्यानाभाषेत । यथार्हं च मित्रामित्रपक्षम् । विनयकर्मणि च कुमारस्य प्रयतेत । कन्यायां समानजातीयादपत्यमुत्पाद्य वाऽभिषिञ्चेत् । मातुश्चित्तक्षोभभयात्कुल्यमल्पसत्त्वं छात्रं च लक्षण्यमुपनिदध्यात् । ऋतेन[3] चैनां रक्षेत् । न चात्मार्थं कश्चिदुत्कृष्टमुपभोगं कारयेत् । राजार्थं तु यानवाहनाभरणवस्त्रस्त्रीवेश्मपरिवापान् कारयेत्—

318·1 यौवनं (स?) च याचेत विश्रमं चित्तकारणात् ।
परित्यजेदतुष्यन्तं तुष्यन्तं चानुपालयेत् ॥
निवेद्य पुत्ररक्षार्थं गूढासार[4] परिग्रहान् ।
अरण्यं दीर्घसत्रं वा सेवेतारुच्यतां गतः ॥

[1] ट. [2] क्रियताम्. [3] ऋ ौ. [4] गूढसार.

मुख्यैरवगृहीतं वा राजानं तत्प्रियाश्रितः । 318·3
इतिवृत्त[1] पुराणाभ्यां बोधयेदर्थशास्त्रवित् ॥
सिद्धव्यञ्जनरूपो वा योगमास्थाय पार्थिवम् ।
लभेत लब्ध्वा दूष्येषु दाण्डकर्मिकमाचरेत् ॥

इति योगवृत्ते पञ्चमेऽधिकरणे राज्यप्रतिसन्धानं एकैश्वर्यं षष्ठोऽध्यायः.

आदितष्षण्णवतिः । एतावता कौटिलीयस्यार्थशास्त्रस्य योगवृत्तं पञ्चममधिकरणं समाप्तम्.



# ६. अधि. मण्डलयोनिः.

## ९६ प्रक. प्रकृतिसम्पदः.

स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि[2] प्रकृतयः ॥ 319·1

तत्र स्वामिसम्पत्—महाकुलीनो दैवबुद्धिस्सत्त्वसम्पन्नो वृद्धदर्शी धार्मिकस्सत्यवागविसंवादकः कृतज्ञः स्थूललक्षो महोत्साहोऽदीर्घसूत्रश्शक्यसामन्तो दृढबुद्धिरक्षुद्रपारिषत्को विनयकाम इत्याभिगामिका गुणाः ॥

शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः ॥

शौर्यममर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः ॥

प्रज्ञा[3] प्रगल्भः स्मृतिमतिबलवानुदग्रः स्ववग्रहः कृतशिल्पो व्य-

---

[1] इतिहास. [2] दण्डमित्रामित्राणि. [3] वाग्मी.

सने[1] दण्डनाद्युपकारापकारयोर्दृष्टप्रतीकारी ह्रीमानापत्प्रकृत्यो- र्विनियोक्ता दीर्घदूरदर्शी देशकालपुरुषकारकार्यप्रदानस्सन्धि- विक्रमत्यागसंयमपणपरच्छिद्रविभागी संवृतादीनाभिहास्याजि- ह्मभ्रुकुटीक्षणः कामक्रोधलोभस्तम्भचापलोपतापपैशुन्यहीनः श- क्यस्मितोदग्राभिभाषी वृद्धोपदेशाचार इत्यात्मसम्पत् ॥

320·2 अमात्यसम्पदुक्ता पुरस्तान्मध्ये चान्ते च ॥

स्थानवानात्मधारणः परधारणश्चापादि स्वारक्षस्स्वाजीवः शत्रुद्वेषी शक्यसामन्तः पङ्कपाषाणोषरविषमकण्टकश्रेणी- व्यालमृगाटवीहीनः कान्तस्सीताखनिद्रव्यहस्तिवनवान् गव्यः पौरुषेयो गुप्तगोचरः पशुमान् अदेवमातृको वारिस्थलपथा- भ्यामुपेतः सारचित्रबहुपण्यो दण्डकरसहः कर्मशीलकर्षकोऽबा- लिशस्वाम्यवरवर्णप्रायो भक्तशुचिमनुष्य इति जनपदसम्पत् ॥

दुर्गसम्पदुक्ता पुरस्तात् ॥

धर्माधिगतः पूर्वैः स्वयं वा हेमरूप्यप्रायश्चित्रस्थूलरत्नाहि- रण्यो दीर्घामप्यापदमनायातिं सहेतेति कोशसम्पत् ॥

पितृपैतामहो नित्यो वश्यस्तुष्टभृतपुत्रदारः प्रवासेष्वविसं- वादितः सर्वत्राप्रतिहतो दुःखसहो बहुयुद्धस्सर्वयुद्धप्रहरण- विद्याविशारदः सहवृद्धिक्षयिकत्वादद्वैध्यः क्षत्रप्राय इति दण्डसम्पत् ॥

321·2 पितृपैतामहं नित्यं वश्यमद्वैध्यं महल्लघुसमुत्थमिति मित्र- सम्पत् ॥

[1] अव्यसने.

अराजबीज[1]लुब्धः क्षुद्रपरिषत्को विरक्तप्रकृतिरन्यायवृत्ति रयुक्तो व्यसनी निरुत्साहो दैवप्रमाणो यत्किञ्चनकार्यगतिर- ननुबन्धः क्लीबो नित्यापकारी चेत्यमित्रसम्पत् । एवंभूतो हि शत्रुस्सुखः समुच्छेत्तुं भवति ॥ 321·3

अरिवर्जाः प्रकृतयः सप्तैतास्स्वगुणोदयाः ।
उक्ताः प्रत्यङ्गभूतास्ताः प्रकृता राजसम्पदः ॥
सम्पादयत्यसम्पन्नाः प्रकृतीरात्मवान्नृपः ।
विवृद्धाश्चानुरक्ताश्च प्रकृतीर्हन्त्यनात्मवान् ॥
ततस्सदुष्टप्रकृतिश्चातुरन्तोऽप्यनात्मवान् ।
हन्यते वा प्रकृतिभिर्याति वा द्विषतां वशम् ॥
आत्मवांस्त्वल्पदेशोऽपि युक्तः प्रकृतिसम्पदा ।
नयज्ञः पृथवीं कृत्स्नां जयत्येव न हीयते ॥

इति मण्डलयोनौ षष्ठेऽधिकरणे प्रकृतिसम्पदः
प्रथमोऽध्यायः आदितस्सप्तनवतिः.

## ९७ प्रक. शमव्यायामिकम्.

शमव्यायामौ योगक्षेमयोर्योनिः ॥

कर्मारम्भाणां योगाराधनो व्यायामः । कर्मफलोपभोगानां क्षेमाराधनश्शमः ॥

शमव्यायामयोर्योनिष्षाड्गुण्यम् ॥ 322·4

[1] अराजबीजी.

322·5 क्षयस्स्थानं वृद्धिरित्युदयाः। तस्य मानुषं नयापनयौ दैवमयानयौ॥

दैवमानुषं हि कर्म लोकं पावाति[1]। अदृष्टकारितं दैवं, तस्मिन्निष्टेन फलेन योगोऽयः[2]।

दृष्टकारितं मानुषं, तस्मिन् योगक्षेमनिष्पत्तिर्नयः। विपत्तिरपनयः। तच्चिन्त्यम्। अचिन्त्यं दैवमिति।

राजा आत्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं विजिगीषुः। तस्य समन्ततो मण्डलीभूता भूम्यन्तरा[3] अरिप्रकृतिः। तथैव भूम्येकान्तरा मित्रप्रकृतिः।

अरिसम्पद्युक्तः सामन्तः शत्रुः।

व्यसनी यातव्य अनपाश्रयो दुर्बलाश्रयो वोच्छेदनीयः। विपर्यये पीडनीयः कर्शनीयो वा।

323·1 इत्यरिविशेषाः॥

तस्मान्मित्रमरिमित्रं मित्रमित्रं अरिमित्रमित्रं चानन्तर्येण भूमीनां प्रसज्यते पुरस्तात्।

पश्चात्पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासार आक्रन्दासार इति॥

भूम्यनन्तरं प्रकृत्यामित्रः तुल्याभिजनस्सहजः। विरुद्धो विरोधयिता वा कृत्रिमः।

भूम्येकान्तरं प्रकृतिमित्रं मातापितृसम्बन्धं[4] सहजं; धनजीवितहेतोराश्रितं कृत्रिममिति।

---

[1] लोकमवति; लोकं यापयति. [2] योगोऽयः। अनिष्टेनानयः।
[3] भूम्यनन्तरा. [4] सम्बद्धं.

अरिविजिगीष्वोर्भूम्यन्तरः[1] संहतासंहतयोरनुग्रहसमर्थो निग्रहे चासंहतयोर्मध्यमः । 323·6

अरिविजिगीषुमध्यानां बहिः प्रकृतिभ्यो बलवत्तरः संहतासंहतानामरिविजिगीषुमध्यमानामनुग्रहे समर्थो निग्रहे चासंहतानामुदासीनः ।

इति प्रकृतयः ।

विजिगीषुर्मित्रं मित्रमित्रं वाऽस्य प्रकृतयस्तिस्रः ताः पञ्चभिरमात्यजनपददुर्गकोशदण्डप्रकृतिभिरेकैकशः संयुक्ता मण्डलमष्टादशकं भवति ।

अनेन मण्डलपृथक्त्वं व्याख्यातं अरिमध्यमोदासीनानाम् ।
एवं चतुर्मण्डलसङ्क्षेपः; द्वादश राजप्रकृतयः; षष्टिर्द्रव्यप्रकृतयः; संक्षेपेण द्विसप्ततिः ।

तासां यथास्वं सम्पदः शक्तिः सिद्धिश्च ।

बलं शक्तिः; सुखं सिद्धिः ।

शक्तिस्त्रिविधा—ज्ञानबलं मन्त्रशक्तिः; कोशदण्डबलं प्रभुशक्तिः; विक्रमबलमुत्साहशक्तिः;

एवं सिद्धिस्त्रिविधैव मन्त्रशक्तिसाध्या मन्त्रसिद्धिः; प्रभुशक्तिसाध्या प्रभुसिद्धिः; उत्साहशक्तिसाध्या उत्साहसिद्धिरिति ।

ताभिरभ्युच्छ्रितो[2] ज्यायान् भवति । अपचितो हीनः । तुल्यशक्तिस्समः । तस्माच्छक्तिं सिद्धिं च घटेतात्मन्यावेश- 324·5

---

[1] म्यनन्तरः. [2] रभ्युचितो.

324·6 यितुम् । साधारणो वा द्रव्यप्रकृतिष्वानन्तर्येण शौचवशेन वा दूष्यामित्राभ्यां वाऽपकृष्टुं यतेत ।

यदि वा पश्येत्—"अमित्रो मे शक्तियुक्तो वाग्दण्डपारुष्यार्थदूषणैः प्रकृतीरुपहनिष्यति; सिद्धियुक्तो वा मृगयाद्यूतमद्यस्त्रीभिः प्रमादं गमिष्यति; स विरक्तप्रकृतिरुपक्षीणः प्रमत्तो वा साध्यो मे भविष्यति; विग्रहाभियुक्तो वा सर्वसन्दोहेनैकस्थो दुर्गस्थो वा स्थास्यति; स संहितसैन्यो मित्रदुर्गवियुक्तस्साध्यो मे भविष्यति; 'बलवान्वा राजा परतः शत्रुमुच्छेत्तुकामस्तमुच्छिद्यमानमुच्छिन्द्यादिति[1]' बलवता प्रार्थितस्य मे विपन्नकर्मारम्भस्य वा साहाय्यं दास्यति; मध्यमलिप्सायां चेति" एवमादिषु कारणेष्वमित्रस्यापि शक्तिं सिद्धिं चेच्छेत् ।

325·2 नेमिमेकान्तराद्राज्ञः कृत्वा चानन्तरानरान् ।
नाभिमात्मानमायच्छेत् नेता प्रकृतिमण्डले ॥
मध्येऽभ्युपहितः शत्रुः[2] नेतुं[3] मित्रस्य चोभयोः ।
उच्छेद्यः पीडनीयो वा बलवानिव[4] जायते ॥

इति मण्डलयोनौ षष्ठेऽधिकरणे शमव्यायामिकं
द्वितीयोऽध्यायः आदितोऽष्टनवतिः

एतावता कौटिलीयस्यार्थशास्त्रस्य मण्डलयोनिः
षष्ठमाधिकरणं समाप्तम्.

---

[1] मुच्छिद्य न मामुच्छिन्द्यादिति. [2] शत्रून्. [3] नेतुः. [4] वानपि.

# ७ अधि. षाड्गुण्यम्.

## ९८—९९ प्रक. षाड्गुण्यसमुद्देशः, क्षयस्थानवृद्धिनिश्चयश्च.

षाड्गुण्यस्य प्रकृतिमण्डलं योनिः ॥ 327·1

"सन्धिविग्रहासनयानसंश्रयद्वैधीभावाष्षाड्गुण्यम्" इत्याचार्याः ॥

"द्वैगुण्यम्" इति वातव्याधिः, "सन्धिविग्रहाभ्यां हि षाड्गुण्यं सम्पद्यते" इति ॥

"षाड्गुण्यमेवैतदवस्थाभेदात्" इति कौटि[1]ल्यः ॥

तत्र—पणबन्धः सन्धिः; अपकारो विग्रहः; उपेक्षणमासनं; अभ्युच्चयो यानं; परार्पणं संश्रयः; सन्धिविग्रहोपादानं द्वैधीभावः इति षड्गुणाः ॥

परस्माद्धीयमानः संदधीत ॥

अभ्युच्चीयमानो विगृह्णीयात् ॥

"न मां परो नाहं परमुपहन्तुं शक्तः" इत्यासीत ॥

गुणातिशययुक्तो यायात् ॥

शक्तिहीनस्संश्रयेत ॥

सहायसाध्य[2]कार्ये द्वैधीभावं गच्छेत् ॥

इति गुणावस्थापनम् ॥ 328·1

---

[1] ट. [2] साध्ये.

प्राज्ञशूरयोः प्राज्ञमशूरं मतिकर्मणां योगोनुवर्तते । शूर- 382·6
मप्राज्ञं विक्रमाधिकारः ।

विक्रमाधिकारेऽपि हस्तिनमिव लुब्धकः प्राज्ञश्शूरमतिसंन्धत्ते।
शूरकृतास्त्रयोश्शूरमकृतास्त्रं विक्रमव्यवसायोऽनुवर्तते ।

कृतास्त्रमशूरं लक्षलम्भाधिकारः ।

लक्षलम्भाधिकारेऽपि स्थैर्यप्रतिपत्त्यसंमोषैः[1] शूरः कृतास्त्र-
मतिसंधत्ते ।

बह्वेकपुत्रयोर्बहुपुत्र एकं दत्वा शेषप्रवृत्तिस्तब्धः संधिमति-
क्रामति नेतरः ।

पुत्रसर्वस्वदाने संधिश्चेत् पुत्रफलतो विशेषः। सफल[2]योश्श-
क्तप्रजननतो विशेषः । शक्तप्रजननयोरप्युपस्थिप्रजननतो
विशेषः ।

शक्तिमत्येकपुत्रे तु लुप्तपुत्रोत्पत्तिरात्मानमादध्यात्, न चैक-
पुत्रमिति ।

अभ्युच्चीयमानः समाधिमोक्षं कारयेत् । कुमारासन्नास्स-
त्रिणः कारुशिल्पिव्यञ्जनाः कर्माणि कुर्वाणाः सुरङ्गया रा-
त्रावुपखानयित्वा कुमारमपहरेयुः[3] । नटनर्तकगायकवादकवा-
ग्जीवनकुशीलवप्लवक[4]सौहिका वा पूर्वप्रणिहिताः परमुप-
तिष्ठेरन् । ते कुमारं परम्परयोपतिष्ठेरन् तेषामनियतकालप्र-
वेशस्थाननिर्गमनानि स्थापयेत् । ततस्तद्व्यञ्जनो वा रात्रौ
प्रतिष्ठेत ॥

383·7 तेन रूपाजीवा भार्याव्यञ्जनाश्च व्याख्याताः । तेषां वा तूर्यभाण्डफेलां गृहीत्वा निर्गच्छेत् ॥

सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारकैर्वा द्रव्यवस्त्रभाण्डफेला[1] शयनासनसम्भोगैर्निर्ह्रियेत । परिचारकात्मना[2] वा किञ्चिदरूपवेलायामादाय निर्गच्छेत् ॥

सुरङ्गामुखेन वा निशोपहारेण तोयाशये वा वारुणं योगमातिष्ठेत् । वैदेहकव्यञ्जना वा पक्वान्नफलव्यवहारेणारक्षिषु समवचारयेयुः ॥

384·3 दैवतोपहारश्राद्धप्रवहणनिमित्तमारक्षिषु मदनयोगयुक्तमन्नपानरसं[3] वा प्रयुज्यापगच्छेत् । आरक्षकप्रोत्साहनेन वा नागरककुशीलवचिकित्सकापूपिकव्यञ्जना वा रात्रौ समृद्धगृहाण्यादीपयेयुः । आरक्षिणां वैदेहकव्यञ्जना वा पण्यसंस्थामादीपयेयुः । अन्यद्वा शरीरं निक्षिप्य स्वगृहमादीपयेदनुपातभयात् ततः सन्धिच्छेदखात[4] सुरङ्गाभिरपगच्छेत् ॥

काचकुम्भभाण्डभारव्यञ्जनो वा रात्रौ प्रतिष्ठेत । मुण्डजटिलानां प्रवासनान्यनु[5] प्रविष्टो वा रात्रौ तद्व्यञ्जनः प्रतिष्ठेत । विरूपव्याधिकरणारण्यचरच्छद्मनामन्यतमेन वा प्रेतव्यञ्जनो वा गूढैर्निर्ह्रियेत ॥

प्रेतं वा स्त्रीवेषेणानुगच्छेत् ॥

वनचरव्यञ्जनाश्चैनमन्यतो[6]ऽपदिशेयुः । ततोन्यतो गच्छेत् ॥

[1] फेल. [2] परिचारकात्मच्छद्मना. [3] पानं. [4] भयखात. [5] जटिलप्रवासनानु.
[6] तो यान्तमन्ततो.

चक्रचराणां वा शकटवाटैरपगच्छेत् । आसन्ने चानुपाते 384·4 सत्रं वा गृह्णीयात् । सत्राभावे हिरण्यं रसविद्धं वा भक्ष्यजातमुभयतः पन्थानमुत्सृजेत् । ततोऽन्यतोऽपगच्छेत् ॥

गृहीतो वा सामादिभिरनुपातमतिसंदध्यात् । रसविद्धेन वा पथ्यदानेन वारुणयोगाग्निदाहेषु वा शरीरमन्यदाधाय शत्रुमभियुञ्जीत—"पुत्रो मे त्वया हतः" इति ॥

उपात्तच्छन्नशस्त्रो वा रात्रौ विक्रम्य रक्षिषु ।
शीघ्रपातैरपसरेत् गूढप्रणिहितैस्सह ॥

इति षाड्गुण्ये सप्तमेऽधिकरणे सन्धिकर्मसन्धिमोक्षः[1]
सप्तदशोऽध्यायः
आदितः पञ्चदशशतः.



# १२४–१२६ प्रक. मध्यमोदासीन-मण्डलचरितानि.

मध्यमस्यात्मतृतीया पञ्चमी च प्रकृती प्रकृतयः । द्वितीया च चतुर्थी षष्ठी च विकृतयः । तच्चेदुभयं मध्यमोऽनुगृह्णीयात्, विजिगीषुर्मध्यमानुलोमस्स्यात् । न चेदनुगृह्णीयात् प्रकृत्यनुलोमस्स्यात् ॥

मध्यमश्चेद्विजिगीषोः मित्रं मित्रभावि[2] लिप्सेत, मित्रस्यात्मनश्च मित्राण्युत्थाप्य मध्यमाच्च मित्राणि भेदयित्वा मित्रं त्रायेत । मण्डलं वा प्रोत्साहयेत—"अतिप्रवृद्धोऽयं मध्यम- 385

[1] समाधिमोक्षः. [2] भावी.

385·5 स्सर्वेषां नो विनाशय अभ्युत्थितः सम्भूयास्य यात्रां विहनाम" इति। तच्चेन्मण्डलमनुगृह्णीयान्मध्यमावग्रहेणात्मानमुपबृंहयेत्। न चेदनुगृह्णीयात्, कोशदण्डाभ्यां मित्रमनुगृह्य, ये मध्यमद्वेषिणो राजानः परस्परानुगृहीता वा बहवस्तिष्ठेयुः एकसिद्धौ वा बहवस्सिद्ध्येयुः परस्पराद्वा शङ्किता नोत्तिष्ठेरन् तेषां प्रधानमेकमासन्नं वा सामदानाभ्यां लभेत। द्विगुणो द्वितीयं त्रिगुणस्तृतीयम्। एवमभ्युच्चितो मध्यममप[1]गृह्णीयात्॥

देशकालातिपत्तौ वा सन्धाय मध्यमेतरमित्रस्य साचिव्यं कुर्यात्। दूष्येषु वा करसन्धिं[2] कर्शनीयं वाऽस्य मित्रं मध्यमो लिप्सेत, प्रतिस्तम्भयेदेनं "अहं त्वा त्रायेय" इत्याकर्शनात्। कर्शितमेतं त्रायेत उच्छेदनीयं वाऽस्य मित्रं मध्यमो लिप्सेत। कर्शितमेतं त्रायेत मध्यमवृद्धिभयात् उच्छिन्नं वा भूम्यनुग्रहेण हस्ते कुर्यादन्यत्रापसारभयात्॥

कर्शनीयोच्छेदनीययोश्चेन्मित्राणि मध्यमस्य साचिव्यकराणि स्युः पुरुषान्तरेण संधयेत। विजिगीष्वोस्तयोर्मित्राण्यवग्रहसमर्थानि स्युः, संधिमुपेयात् एवं[3] स्वार्थश्च कृतो भवति मध्यमस्य प्रियं च।

386·4 मध्यमश्चेत्स्वमित्रं मित्रभावि लिप्सेत, पुरुषान्तरेण संदध्यात् "सापेक्षं वा नार्हसि मित्रमुच्छेत्तुम्" इति वारयेदुपेक्षेत वा "मण्डलमस्य कुप्यतु स्वपक्षवधात्" इति। अमित्रमात्मनो वा मध्यमो लिप्सेत। कोशदण्डाभ्यामेनमदृश्यमानोऽनुगृह्णीयात्।

उदासीनं वा मध्यमो लिप्सेत—"उदासीनाद्भिद्यताम्" 387·2
इति ॥

मध्यमोदासीनयोर्यो मण्डलस्याभिप्रेतस्तमाश्रयेत। मध्यमचरितेनोदासीनचरितं व्याख्यातम् ।

उदासीनश्चेत् मध्यमं लिप्सेत, यतश्शत्रुमतिसंदध्यात् मित्रस्योपकारं कुर्यादुदासीनं वा दण्डोपकारिणं लभेत, ततः परिणमेत । एवमुपगृह्यात्मान[1]मरिप्रकृतिं कर्शयेत् मित्रप्रकृतिं चोपगृह्णीयात्सत्यप्यमित्रभावे ॥

तस्यानात्मवान्नित्यापकारी शत्रुः शत्रुसहितः पार्ष्णिग्राहो वा व्यसनो यातव्यो व्यसने वा नेतुरभि[2]योक्तेत्यरिभाविनः ।

एकार्थाभिप्रयातः पृथगर्थाभिप्रयातः संभूययात्रिकः संहितप्रयाणिकः स्वार्थाभिप्रयातः सामुत्थायिकः कोशदण्डयोरन्यतरस्य क्रेता विक्रेता द्वैधीभाविक इति मित्रभाविनः ॥

सामन्तो बलवतः प्रतिघातोन्तर्धि[3]प्रतिवेशो वा बलवतः पार्ष्णिग्राहो वा स्वयमुपनतः प्रतापोपनतो वा दण्डोपनत इति भृत्यभाविनस्सामन्ताः । तैर्भूम्येकान्तरा व्याख्याताः ॥

तेषां शत्रुविरोधे यन्मित्रमेकार्थतां व्रजेत् । 388·1
शक्त्या तदनुगृह्णीयाद्विषहेत तथा परम्[4] ॥
प्रसाध्य शत्रुं यन्मित्रं वृद्धं गच्छेदवश्यताम् ।
सामन्तैकान्तराभ्यां तत्प्रकृतिभ्यां विरोधयेत्[5] ॥

---

[1] एवमुपगृह्यात्मात्मान. [2] नेतुमभि. [3] न्तर्धिः. [4] परम्. [5] विशोधयेत्.

388·3 तत्कुलीनावरुद्धाभ्यां भूमिं वा तस्य हारयेत् ।
यथा वाऽनुग्रहापेक्षं वश्यं ति[1]ष्ठेत्तथा चरेत् ॥
नोपकुर्यादमित्रं वा गच्छेद्यदतिकर्शितम् ।
तदहीनमवृद्धं च स्थापयेन्मित्रमर्थवित् ॥
अर्थयुक्त्या चलं मित्रं सन्धिं यदुपगच्छति ।
तस्यापगमने हेतुं विहन्यान्न चलेद्यथा ॥
अरिसाधारणं यद्वा तिष्ठेत्तदरितश्शठम् ।
भेदयेद्भिन्नमुच्छिन्द्यात्ततश्शत्रुमनन्तरम् ॥
उदासीनं च यत्तिष्ठेत्सामन्तैस्तद्विरोधयेत्[2] ।
ततो विग्रहसंतप्तमुपकारे निवेशयेत् ॥
अमित्रं विजिगीषुं च यत्संचरति दुर्बलम् ।
तद्बलेनानुगृह्णीयाद्यथा स्यान्न पराङ्मुखम् ॥
अपनीय ततोऽन्यस्यां भूमौ वा संनिवेशयेत् ।
निवेश्य पूर्वं तत्रान्यद्दण्डानुग्रहहेतुना ॥
अपकुर्यात्समर्थं वा नोपकुर्याद्यदापदि ।
उच्छिन्द्यादेव तन्मित्रं विश्वस्याङ्कमुपस्थितम् ॥
अमित्रव्यसनो वाऽरि[3]स्तिष्ठेद्योऽनवग्रहः ।
मित्रेणैव भवेत्साध्यः छादितव्यसनेन सः ॥
3 ·3 अमित्रव्यसनान्मित्रमुत्थितं साद्वि[4]रज्यति ।
अरिव्यसनसिद्ध्या तच्छत्रुणैव प्रसिद्ध्यति ॥

[1] पर्यस्ति. [2] शोधयेत्. [3] मित्रव्यसनतो वाऽरि. [4] यद्वि.

वृद्धिं क्षयं च स्थानं च कर्शनोच्छेदनं तथा । 389·4
सर्वोपायान् समादध्यादेतान्यश्चार्थशास्त्रवित् ॥

एवमन्योन्यसञ्चारं षाड्गुण्यं योऽनुपश्यति ।
स बुद्धिनिगलैर्बद्धैरिष्टं क्रीडति पार्थिवैः ॥

इति षाड्गुण्ये मध्यमचरितमुदासीनचरितं
मण्डलचरितमष्टादशोऽध्यायः.
आदितः षोडशशतः.
एतावता कौटिल्यस्यार्थशास्त्रस्य षाड्गुण्यं
सप्तमाधिकरणं समाप्तम्.

---

## ८ अधि. व्यसनाधिकारिकम्.

## १२७ प्रक. प्रकृतिव्यसनवर्गः.

---

व्यसनयौगपद्ये सौकर्यतः "यातव्यं रक्षितव्यं च" इति व्यसनचिन्ता ॥

दैवं मानुषं वा प्रकृतिव्यसनमनयापनयाभ्यां संभवति । 391·1 गुणप्रातिलोम्यमभावः प्रदोषः प्रसङ्ग[1] पीडा वा व्यसनं "व्यस्यत्येनं श्रेयसः" इति व्यसनम् ॥

---

[1] प्रसङ्गः.

391·2 स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रव्यसनानां पूर्वपूर्वं गरीय इत्याचार्याः ॥

नेति भारद्वाजः–"स्वाम्यमात्यव्यसनयोरमात्यव्यसनं गरीयः" इति । मन्त्रो मन्त्रफलावाप्तिः कर्मानुष्ठानमायव्ययकर्म दण्डाप्रणयनममित्राटवीप्रतिषेधः राज्यरक्षणं व्यसनप्रतीकारः कुमाररक्षणमभिषेकश्च कुमाराणामायत्तममात्येषु। तेषां अभावे तदभाविच्छिन्नपक्षस्येव राज्ञश्चेष्टानाशो व्यसनेषु चासन्नाः परोपजापाः । वैगुण्ये च प्राणबाधः प्राणान्तिकचरत्वाद्राज्ञ इति ॥

"न" इति कौटि[1]ल्यः—मन्त्रिपुरोहितादिभृत्यवर्गमध्यक्षप्रचारं पुरुषद्रव्यप्रकृतिव्यसनप्रतीकारमेधनं च राजैव करोति । व्यसनिषु वाऽमात्येष्वन्यानव्यसनिनः करोति । पूज्यपूजने दूष्यावग्रहे च नित्ययुक्तास्तिष्ठति । स्वामी च सम्पन्नः स्वसम्पद्भिः प्रकृतीस्संपादयति । स्वयं यच्छीलस्तच्छीलाः प्रकृतयो भवन्ति; उत्थाने प्रमादे च तदायत्तत्वात् । तत्कूटस्थानीयो हि स्वामीति ॥

"अमात्यजनपदव्यसनयोर्जनपदव्यसनं गरीयः" इति विशालाक्षः । कोश[2]दण्डः कुप्यं विष्टिर्वाहनं निचयाश्च जनपदादुत्तिष्ठन्ते । तेषामभावो जनपदाभावे स्वाम्यमात्ययोश्चानन्तर इति ॥

392·4 नेति कौटि[3]ल्यः—अमात्यमूलास्सर्वारम्भाः । जनपदस्य

[1,3] ट. [2] कोशो.

कर्मसिद्धयः स्वतः परतश्च योगक्षेमसाधनं व्यसनप्रतीकारः 392·4
शून्यनिवेशोपचयौ दण्डकरानुग्रहश्चेति ॥

"जनपददुर्गव्यसनयोर्दुर्गव्यसनम्" इति पाराशराः। दुर्गे हि कोशदण्डोत्पत्तिरापदि स्थानं च जनपदस्य, शक्तिमत्तराश्च पौरजानपदेभ्यो नित्याश्चापादि सहाया राज्ञो जानपदास्त्वमित्रसाधारणाः" इति ॥

नेति कौटि[1]ल्यः—जनपदमूला दुर्गकोशदण्डाः सेतु[2]वार्तारम्भाः शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यं च; जानपदेषु पर्वतान्तर्द्वीपाश्च दुर्गा नाध्युष्यन्ते जनपदाभावात्। कर्षकप्राये तु दुर्गव्यसनमायुधीयप्राये तु जनपदे जनपदव्यसनमिति ॥

"दुर्गकोशव्यसनयोः कोशव्यसनम्" इति पिशुनः—"कोशमूलो हि दुर्गसंस्कारो दुर्गरक्षणं च; दुर्गः कोशादुपजाप्यः परेषां; जनपदमित्रामित्रनिग्रहो देशान्तरितानामुत्साहनं दण्डबलव्यवहारः। कोश[3]मादाय च व्यसने शक्यमपयातुं न दुर्गम्" इति ॥

नेति कौटि[4]ल्यः—दुर्गार्पणः कोशो दण्डस्तूष्णींयुद्धं स्वपक्षनिग्रहो दण्डबलव्यवहारः आसारप्रतिग्रहः परचक्राटवीप्रतिषेधश्च; दुर्गाभावे च कोशः परेषां; दृश्यते हि दुर्गवतामनुच्छित्तिरिति ॥

"कोशदण्डव्यसनयोर्दण्डव्यसनम्" इति कौणपदन्तः 393·4
"दण्डमूलो हि मित्रामित्रनिग्रहः परदण्डोत्साहनं स्वदण्डप्रतिग्र

1,4 ट. 2 दण्डसेतु. 3 आसारप्रतिग्रहः। परचक्राटवीप्रतिषेधश्च। कोश.

हश्च। दण्डाभावे च ध्रुवं[1] कोशविनाशः। कोशाभावे च शक्यः कुप्येन भूम्या परभूमिस्वयंग्रहेण वा दण्डः परं गच्छति[2]। स्वामिनं वा हन्ति। सर्वाभियोगकरश्च। कोशो धर्मकामहेतुः। देशकालकार्यवशेन तु कोशदण्डयोरन्यतरः प्रमाणीभवति। लम्भ[3]पालनो हि दण्डः कोशस्य। कोशः कोशदण्डस्य[4] च भवति सर्वद्रव्यप्रयोजनकत्वात् कोशव्यसनं गरीयः" इति॥

393·5

"दण्डमित्रव्यसनयोर्मित्रव्यसनम्" इति वातव्याधिः—"मित्रमभृतं व्यवहितं च कर्म करोति; पार्ष्णिग्राहमासारममित्रमाटविकं च प्रतिकरोति; कोशदण्डभूमिभिश्चोपकरोति व्यसनावस्थायोगमिति॥

नेति कौटि[5]ल्यः—दण्डवतो मित्रं मित्रभावे, तिष्ठत्यमित्रो वा मित्रभावे, दण्डमित्रयोस्तु साधारणे कार्ये सारतः स्वयुद्धदेशकाललाभाद्विशेषः। शीघ्राभियाने त्वमित्राटविकाभ्यन्तरकोपे च न मित्रं विद्यते। व्यसनयौगपद्ये परवृद्धौ च मित्रमर्थयुक्तौ तिष्ठति। प्रकृतिव्यसनसंप्रधारणमुक्तमिति॥

प्रकृत्यवयवानां तु व्यसनस्य विशेषतः।
बहुभावोऽनुरागो वा सारो वा कार्यसाधकः॥
द्वयोस्तु व्यसने तुल्ये विशेषो गुणतः क्षयात्।
शेषप्रकृतिसाद्गुण्यं यदि स्यान्नाभिधेयकम्[6]॥

[1] ध्रुवः. [2] परभूमिं स्वयंग्रहेण वा दण्डः पिण्डयितुं, दण्डवता च कोशः, स्वामिनश्चासन्नवृत्तित्वादमात्यसधर्मा दण्डः इति। नेति कौटिल्यः—कोशमूलो हि दण्डः कोशाभावे दण्डः परं गच्छति. [3] लब्ध. [4] कोशस्य दण्डस्य. [5] ट. [6] यिकम्.

शेषप्रकृतिनाशस्तु यत्रैकव्यसनाद्भवेत् । 394.6
व्यसनं तद्गरीयस्स्यात् प्रधानस्येतरस्य वा ॥

इति व्यसनाधिकारिकेऽष्टमेऽधिकरणे प्रकृतिव्यसनवर्गः
प्रथमोऽध्यायः.
आदितस्सप्तदशशतः

## १२८ प्रक. राजराज्ययोर्व्यसनचिन्ता.

राजा राज्यमिति प्रकृतिसंक्षेपः ॥

राज्ञोऽभ्यन्तरो बाह्यो वा कोप इति । अहिभयादभ्यन्तरः कोपो बाह्यकोपात्पापीयान् । अन्तरमात्यकोपश्चान्तःकोपात् । तस्मात्कोशदण्डशक्तिमात्मसंस्थां कुर्वीत ॥

द्वैराज्यवैराज्ययोः द्वैराज्यमन्योन्यपक्षद्वेषानुरागाभ्यां परस्परसङ्घर्षेण वा विनश्यति । वैराज्यं तु जीवतः[1] परस्याच्छिद्य "नैतन्मम" इति मन्यमानः कर्शयत्यपवाहयति; पण्यं वा करोति; विरक्तं वा परित्यज्य अपगच्छतीति ॥

अन्धश्चलितशास्त्रो वा राजेति?—"अशास्त्रचक्षुरन्धो यत्किञ्चनकारी दृढाभिनिवेशी परप्रणयो वा राज्यमन्यायेनो-[2]पहन्ति; चलितशास्त्रस्तु यत्र शास्त्राच्चलितमतिर्भवति, शक्यानुनयो भवतीत्याचार्याः ॥ 395.6

नेति कौ[3]टिल्यः—अन्धो राजा शक्यते सहायसम्पदा यत्र

[1] वैराज्यं तु प्रकृतिचित्तग्रहणापेक्षि यथास्थितमन्यैर्भुज्यते इत्याचार्याः । नेति कौटिल्यः—पितापुत्रयोर्भ्रात्रोर्वा द्वैराज्यं तुल्ययोगक्षेममत्यावग्रहं वर्तयतेति । वैराज्यं तु जीवतः.
[2] मन्यायेनो. [3] ट.

तत्र वा पर्यवस्थापयितुमिति । चलितशास्त्रस्तु शास्त्रादन्यथाभिनिविष्टबुद्धिरन्यायेन राज्यमात्मानं चोपहन्तीति॥

396·2 व्याधितो नवो वा राजेति?—"व्याधितो राजा राज्योपघातममात्यमूलं[1] प्राणाबाधं वा राज्यमूलमवाप्नोति। नवस्तु राजा स्वधर्मानुग्रहपरिहारदानमानकर्मभिः प्रकृतिरञ्जनोपकारैश्चरतीत्याचार्याः॥

नेति कौटि[2]ल्यः—व्याधितो राजा यथाप्रवृत्तं राजप्रणिधिमनुवर्तयति। नवस्तु राजा बलावर्जितं "ममेदं राज्यम्" इति यथेष्टमनवग्रहश्चरति। सामुत्थायिकैरवगृहीतो वा राज्योपघातं मर्षयति। प्रकृतिष्वगूढः[3] सुखमुच्छेत्तुं भवति[4]। व्याधिते विशेषः—पापरोग्यपरोगी च; नवेऽप्यभिजातोऽनभिजात इति॥

दुर्बलोऽभिजातो बलवाननभिजातो राजेति?—"दुर्बलस्याभिजातस्योपजापं दौर्बल्यापेक्षाः प्रकृतयः कृच्छ्रेणोपगच्छन्ति। बलवतश्चानभिजातस्य बलापेक्षास्सुखेन" इत्याचार्याः॥

नेति कौटि[5]ल्यः—दुर्बलमभिजातं प्रकृतयस्स्वयमुपनमन्ति। जात्यमैश्वर्यप्रकृतिरनुवर्तत[6] इति। बलवतश्चानभिजातस्योपजापं विसंवादयन्ति.... "अनुयोगे साद्गुण्यम्" इति॥

396·8 प्रयासवधात्स[7]स्यवधो मुष्टिवधात्पापीयान्निराजीवत्वादवृष्टिरतिवृष्टित इति॥

[1] मूलः [2,5] ट. [3] ष्वरूढः. [4] भवतीति. [6] वर्तेत. [7] सबाधात्स.

द्वयोर्द्वयोर्व्यसनयोः प्रकृतीनां बलाबलम् ।
पारम्पर्यक्रमेणोक्तं याने स्थाने च कारणम् ॥

इति व्यसनाधिकारिके
राजराज्ययोर्व्यसनचिन्ता द्वितीयोऽध्यायः.
आदितोऽष्टादशशतः

## १२९ प्रक. पुरुषव्यसनवर्गः.

अविद्याविनयः पुरुषव्यसनहेतुः । अविनीतो हि व्यसनदोषान् न पश्यति ॥

तानुपदेक्ष्यामः—"कोपजस्त्रिवर्गः ; कामजश्चतुर्वर्गः ; तयोः कोपो गरीयान् ; सर्वत्र हि कोपश्चरति ; प्रायशश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते । कामवशाः क्षयव्यसननिमित्तमति[1]व्याधिभिः" इति ॥

नेति भारद्वाजः—"सत्पुरुषाचारः कोपो वैरायतनमवज्ञातवधो भीतमनुष्यता च ; नित्यश्च कोप[2]सम्बन्धः पापप्रतिषेधार्थः कामास्सिद्धिलाभः सान्त्वं त्यागशीलता सम्प्रियभावश्च ; नित्यश्च कामेन सम्बन्धः कृतकर्मणः फलोपभोगार्थ इति ॥

नेति कौटि[3]ल्यः—द्वेष्यता शत्रुवेदनं दुःखसङ्गतश्च कोपः.[4] परिभवो द्रव्यनाशः पाटच्चरद्यूतकारलुब्धकगायकवादकैश्चानर्थ्यै-

[1] मरि. [2] कोपेन. [3] ट. [4] वेतनं अनर्थस्य संयोगः दुःखासङ्गश्च कोप.

स्संयोगः कामः। तयोः परिभवात् द्वेष्यता गरीयसी; परिभूतस्स्वैः[1] परैश्चापगृह्यते । द्वेष्यस्समुच्छिद्यत इति । द्रव्यनाशाच्छत्रुवेदनं गरीयः; द्रव्यनाशः कोशाबाधकः; शत्रुवेदनं प्राणबाधकमिति। अनर्थ्य[2]संयोगाद्दुःखसंयोगो गरीयान् । अनर्थ्यसंयोगो मुहूर्त-प्रतीकारो दीर्घक्लेशकरो दुःखानामासङ्ग इति । तस्मात्कोपो गरीयान् ॥

वाक्पारुष्यमर्थदूषणं दण्डपारुष्यमिति। "वाक्पारुष्यार्थ-दूषणयोर्वाक्पारुष्यं गरीयः" इति विशालाक्षः—"परुषमुक्तो हि तेजस्वी तेजसा प्रत्यारोहति । दुरुक्तशल्यं हृदि निखातं तेजस्संन्दीपनमिन्द्रियोपतापि च" इति ॥

नेति कौटिल्यः—अर्थपूजा वाक्छल्यमपहन्ति; वृत्तिवि-लोपस्त्वर्थदूषणं दानमादानं[4] विनाशः परित्यागो वा अर्थस्ये-त्यर्थदूषणम् ॥

"अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीयः" इति पाराश-राः—"अर्थमूलौ धर्मकामौ । अर्थप्रतिबन्धश्च लोको वर्तते ॥ तस्योपघातो गरीयान्" इति ॥

नेति कौटि[5]ल्यः—सुमहताऽप्यर्थेन न कश्चन शरीरविना-शमिच्छेत् । दण्डपारुष्याच्च तमेव दोषमन्येभ्यः प्राप्नोति ॥

इति कोपजस्त्रिवर्गः ॥

कामजस्तु—मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः ॥

---

[1] तस्तैः. [1] अनर्थं. [3], [5] ट. [4] अदानमादानं.

"तस्य मृगयाद्यूतयोः मृगया गरीयसी" इति पिशुनः— 398.9
"स्तेनामित्रव्याळदावप्रस्खलनभयादिङ्मोहाः क्षुत्पिपासे च प्राणाबाधस्तस्याम्। द्यूते तु जितमेवाक्षविदुषा यथा जयत्सेनदुर्योधनाभ्याम्" इति ॥

नेति कौटि[1]ल्यः—तयोरप्यन्यतरपराजयोऽस्तीति नलयुधिष्ठिराभ्यां व्याख्यातम्। तदेव विजितद्रव्यमामिषं वैरबन्धश्च। सतोऽर्थस्य विप्रतिपत्तिरसतश्चार्जनमप्रतिभुक्तनाशो मूत्रपुरीषधारणबुभुक्षादिभिश्च व्याधिलाभ इति द्यूतदोषः[2] मृगयायां तु व्यायामः श्लेष्मपित्तमेदस्स्वेदनाशश्चले स्थिरे[3] च काये लक्ष्यपरिचयः कोपस्थाने[4] हि तेषु च मृगाणां चित्तज्ञानमनित्ययानं चेति[5] ॥

"द्यूतस्त्रीव्यसनयोः कैतवव्यसनम्" इति कौणपदन्तः—
"सातत्येन हि निशि प्रदीपे मातरि च मृतायां दीव्यत्येव कितवः ; कृच्छ्रे च प्रतिपृष्टः कुप्यति ; स्त्रीव्यसनेषु तु स्नानप्रतिकर्मभोजनभूमिषु भवत्येव धर्मार्थपरिप्रश्नः ; शक्या च स्त्री राजहिते नियोक्तुमुपांशुदण्डेन ; व्याधिना वा व्यावर्तयितुमवस्रावयितुं वा" इति ॥

नेति कौटि[6]ल्यः—सप्रत्यादेयं द्यूतं निष्प्रत्यादेयं स्त्रीव्यसनमदर्शनं कार्यातिपातना[7]दनर्थधर्मलोपश्च तन्त्रदौर्बल्यं पानानुबन्धश्चेति[8] ॥ 399.4

---

[1,6] ट. [2] दोषाः. [3] स्थिते. [4] कोपभयस्थाने. [5] शाकुन्तलद्वितीयाङ्के २९-नम्बश्लोके ऽयमेवार्थो वर्णितः. [7] प्रदर्शनं कार्यनिर्वेदः कालातिपातना. [8] वासानुबन्धश्चेति.

399·5 "स्त्रीपानव्यसनयोः स्त्रीव्यसनम्" इति वातव्याधिः—"स्त्रीषु हि बालिश्यमनेकविधं निशान्तप्रणिधौ व्याख्यातम् । पाने तु शब्दादीनामिंद्रियार्थानामुपभोगः प्रीतिदानं परिजनपूजनं कर्मश्रमवधश्च" इति ॥

नेति कौटिल्यः स्त्रीव्यसने भवत्यपत्योत्पत्तिरात्मरक्षणं चान्तर्दारेषु विपर्ययो वा बाह्येषु अगम्येषु सर्वोच्छित्तिः; तदुभयं पानव्यसने ; पानसम्पत्—संज्ञानाशः अनुन्मत्तस्योन्मत्तत्वमप्रेतस्य प्रेतत्वं कौपीनदर्शनं श्रुतप्रज्ञाप्राणवित्तमित्रहानिस्सद्भिर्वियोगोऽनर्थ्यसंयोगस्तंत्रीगीतनैपुण्येषु चार्थघ्नेषु प्रसङ्ग इति ॥

द्यूतमद्ययोः द्यूतमेकेषां पणनिमित्तो जयः पराजयो वा ; प्राणिषु निश्चेतनेषु वा पक्षद्वैधेन प्रकृतिकोपं करोति ; विशेषतश्च सङ्घानां सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः ; तन्निमित्तो विनाश इत्यसत्प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यादिति ।

असतां प्रग्रहः कामः कोपश्चावग्रहस्सताम् ।
व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम् ॥

400·5 तस्मात्कोपं च कामं च व्यसनारम्भमात्मवान् ।
परित्यजेन्मूलहरं वृद्धसेवी जितेन्द्रियः ॥

इति व्यसनाधिकारिके पुरुषव्यसनवर्गस्तृतीयोऽध्यायः
आदित एकोनविंशशतोऽध्यायः.

# १३०—१३२ प्रक. पीडनवर्गः, स्तम्भवर्गः, कोशसङ्गवर्गश्च.

दैवपीडनमग्निरुदकं व्याधिर्दुर्भिक्षं मरक इति ॥

अग्न्युदकयोरग्निपीडनमप्रतिकार्यं; सर्वं हि च[1] शक्योपशमनं तार्यांबाधकमुक्तं उदकपीडनमित्याचार्याः ॥ 401·1

नेति कौटि[2]ल्यः—अग्निग्राममर्धग्रामं वा दहति; उदकवेगस्तु ग्रामशतप्रवाहीति ।

व्याधिदुर्भिक्षयोर्व्याधिः प्रेतव्याधितापसृष्टपरिचारकव्यायामोपरोधेन कर्माण्युपहन्ति ।

"दुर्भिक्षं पुनरकर्मोपघाति हिरण्यपशुकरदायि च" इत्याचार्याः

नेति कौटि[3]ल्यः—एकदेशपीडनो व्याधिः शक्यप्रतीकारश्च; सर्वदेशपीडनं दुर्भिक्षं प्राणिनामजीवनायेति ।

तेन मरको व्याख्यातः ।

"क्षुद्रकमुख्यक्षययोः क्षुद्रकक्षयः कर्मानु[4]ष्ठानोपरोधधर्मा" इत्याचार्याः ।

नेति कौटिल्यः—शक्यः क्षुद्रक्षयः प्रतिसंधातुं बाहुल्यात् क्षुद्रकारणान्न मुख्यक्षयः । सहस्रेषु हि मुख्यो भवत्येको न वा सत्त्वप्रज्ञाधिक्यादाश्र[6]यत्वात् क्षुद्रकाणामिति ॥

"स्वचक्रपरचक्रयोस्स्वचक्रमतिमात्राभ्यां अपकाराभ्यां[7]पीडयत्यशक्यं च वारयितुं; परचक्रं तु शक्यं प्रतियोद्धुमपसारेण सन्धिना वा मोक्षयितुम्" इत्याचार्याः । 401·9

---

[1] सर्वदाहि च. [2] [3] [5] ट. [4] कर्मणामयोगक्षेमं करोति । मुख्यक्षयः कर्मानु- [6] धिक्यात्तदाश्र. [7] दण्डकराभ्यां.

401·10 नेति कौटिल्यः[1]—स्वचक्रपीडनं प्रकृतिपुरुषमुख्योपग्रहाविघाताभ्यां शक्यते वारयितुमेकदेशं वा पीडयति; सर्वदेशपीडनं तु परचक्रं विलोपघातदाहविध्वंसनोपवाहनैः पीडयतीति ।

प्रकृतिराजविवादयोः प्रकृतिविवादः प्रकृतीनां भेदकः पराभियोगानावहति । राजविवादस्तु प्रकृतीनां द्विगुणभक्तवेतनपरिहारकरो भवतीत्याचार्याः ।

नेति कौटिल्यः[2]—शक्यः प्रकृतिविवादः प्रकृतिमुख्योपग्रहेण कलहस्थानापनयनेन वा वारयितुं; विवदमानास्तु प्रकृतयः परस्परसङ्घर्षेणोपकुर्वन्ति । राजविवादस्तु पीडनोच्छेदनाय प्रकृतीनां द्विगुणव्यायामसाध्य इति ॥

"देशराजविहारयोः देशविहारस्त्रैकाल्येन कर्मफलोपघातं करोति; राजविहारस्तु कारुशिल्पिकुशीलववाग्जीवनवैदेहकोपकारं करोति" इत्याचार्याः ।

नेति कौटिल्यः[3]—देशविहारः कर्मश्रमवधार्थमल्पं भक्षयति; भक्षयित्वा च भूयः कर्मसु योगं गच्छति; राजविहारस्तु स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयतीति ।

40 2·6 "सुभगाकुमारयोः कुमारस्स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयति । सुभगा विलासोपभोगेन" इत्याचार्याः ।

1,2,3 ट.

नेति कौटि[1]ल्यः—शक्यः कुमारो मन्त्रिपुरोहिताभ्यां वारयितुं 402·7
न सुभगा, बालिश्यादनर्थ्यजनसंयोगाच्चेति ।

"श्रेणीमुख्ययोः श्रेणी बाहुल्यादनवग्रहास्तेयसाहसाभ्यां पीडयति; मुख्यः कार्यावग्रह[2]विघाताभ्याम्" इत्याचार्याः ।

नेति कौटि[3]ल्यः—सुव्यावर्त्या[4]श्रेणी समानशीलव्यसनत्वात्।
श्रेणीमुख्यैकदेशोपग्रहेण वा । स्तम्भयुक्तो मुख्यः परप्राणद्रव्यापघाताभ्यां पीडयतीति ।

"सन्निधातृसमाहर्त्रोस्सन्निधाता कृतविदूषणात्ययाभ्यां पीडयति । समाहर्ता करणाधिष्ठितः प्रदिष्टफलोपभोगी भवति" इत्याचार्याः ।

नेति कौटि[5]ल्यः—सन्निधाता कृतावस्थमन्यैः कोशप्रवेश्यं प्रतिगृह्णाति । समाहर्ता पूर्वमर्थमात्मनः कृत्वा पश्चाद्राजार्थं करोति, प्रणाशयति वा परस्वादाने च स्वप्रत्ययश्चरतीति ।

"अन्तपालवैदेहकयोरन्तपालश्चोरप्रसर्गदेयात्यादानाभ्यां वणिक्पथं पीडयति वैदेहकस्तु[6]पण्यप्रतिपण्यानुग्रहैः प्रसाधयति[7]" इत्याचार्याः ।

नेति कौटि[8]ल्यः—अन्तपालः पण्यसम्पातानुग्रहेण वर्तयति । 403·6
वैदेहकास्तुसम्भूय पण्यानामुत्कर्षापकर्षं कुर्वाणाः "पणे पणशतं, कुम्भे कुम्भशतम्" इत्याजीवन्ति ।

---

1,3,5,8 ट. [2] कार्यानुग्रहः. [4] सुव्यावर्ता. [6] कास्तु. [7] यन्ति.

403·7 "अभिजातोपरुद्धा भूमिः पशुव्रजो[1]परुद्धा वेति—अभिजातोपरुद्धा भूमिः महाफलाऽप्यायुधीयोपकारिणी न क्षमा मोक्षयितुं व्यसनाबाधभयात्। पशुव्रजो[2]परुद्धा तु कृषियोग्या क्षमा मोक्षयितुं; विवीतं हि क्षेत्रेण बाध्यते" इत्याचार्याः।

नेति कौटि[3]ल्यः—अभिजातोपरुद्धा भूमिरत्यन्तमहोपकाराऽपि क्षमा मोक्षयितुं; व्यसनाबाधभयात्। पशुव्रजो[4]परुद्धा तु कोशवाहनोपकारिणी न क्षमा मोक्षयितुमन्यत्र सस्यवापोपरोधादिति।

"प्रतिरोधकाटविकयोः प्रतिरोधकाः रात्रिस्त्रीपरा[5]श्शरीराक्रमिणो नित्याश्शतसहस्रापहारिणः। प्रधानकोपकाव्य[6]वाहिताः प्रत्यन्तारण्यचराश्चाटविकाः प्रकाशादृश्याश्चरन्त्येकदेशघातकाश्च" इत्याचार्याः।

नेति कौटि[7]ल्यः—प्रतिरोधकाः प्रमत्तस्यापहरन्तिः; कल्पाः[8] कुण्ठाः सुखात् ज्ञातुं गृहीतुं च; स्वदेशस्थाः प्रभूता विक्रान्ताश्चाटविकाः प्रकाशयोधिनोऽपहर्तारो हन्तारश्च देशानां राजसधर्माण इति।

मृगहस्तिवनयोः मृगाः प्रभूताः प्रभूतमांसचर्मोपकारिणो मन्दग्रासावक्लेशिनस्सुनियम्याश्च। विपरीता हस्तिनो गृह्यमाणाः दुष्टाश्च देशविनाशायेति।

404·5 स्वपरस्थानीयोपकारयोः स्वस्थानीयोपकारो धान्यपशुहिरण्यकुप्योपकारो जानपदानामापद्यात्मधारणः। विपरीतः परस्थानीयोपकार इति पीडनानि।

---

1,2,4 शप्रजो 3,7 ट. 5 रात्रिसत्रपरा. 6 कोपकाश्च व्य 8 अल्पाः.

आभ्यन्तरो मुख्यस्तम्भो बाह्यो मित्राटवीस्तम्भ इति स्तम्भ 404·7
वर्गाः। ताभ्यां पीडनैर्यथोक्तैश्च पीडितस्सक्तो मुख्येषु परिहारो
पहृतः प्रकीर्णो मिथ्यासम्भृतः सामन्ताटवीभृत इति कोशसङ्गाः।

पीडनानामनुत्पत्तौ उत्पन्नानां च वारणे ।
यतेत देशवृद्ध्यर्थं नाशे च स्तम्भसङ्गयोः ॥

इति व्यसनाधिकारिके पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गः
चतुर्थोऽध्यायः
आदितो विंशतिशतोऽध्यायः.

## १३३–१३४ प्रक. बलव्यसनवर्गः मित्रव्यसनवर्गश्च.

बलव्यसनानि अमानितं विमानितं अभृतं व्याधितं नवागतं 405·3
दूरयातं परिश्रान्तं परिक्षीणं प्रतिहतं हताग्रवेगं अनृतुप्राप्तं
अभूमिप्राप्तं आशानिर्वेदि परिसृप्तं कलत्रगर्हि अन्तश्शल्यं
कुपितमूलं भिन्नगर्भं अपसृतं अतिक्षिप्तं उपनिविष्टं समाप्तं
उपरुद्धं उपक्षिप्तं छिन्नधान्यपुरुषवीवधं स्वविक्षिप्तं मित्रविक्षिप्तं
दूष्ययुक्तं दुष्टपार्ष्णिग्राहं शून्यमूलं अस्वामिसंहतं भिन्नकूटं
अन्धमिति ।

तेषाममानितविमानितयोरमानितं कृतार्थमानं युध्येत न
विमानितमन्तःकोपम् ।

अभृतव्याधितयोरभृतं तदात्वकृतवेतनं युध्येत, न व्याधित- 406·2
मकर्मण्यम् ।

406·3 नवागतदूरयातयोर्नवागतमन्यत उपलब्धदेशमनवमिश्रं युध्येत न दूरयातमायतगतपरिक्लेशम् ।

परिश्रान्तपरिक्षीणयोः परिश्रान्तं स्नानभोजनस्वप्नलब्धविश्रमं युध्येत न परिक्षीणयुग्य[1]पुरुषम् ।

प्रतिहतहताग्रवेगयोः प्रतिहतमग्रपातभग्नं प्रवीरपुरुषसंहतं युध्येत, न हताग्रवेगमग्रपातहतप्रवीरम् ।

अनृत्वभूमिप्राप्तयोरनृतुप्राप्तं यथर्तुयोग्यशस्त्रावरणं युध्येत, नाभूमिप्राप्तमवरुद्धप्रसारव्यायामम् ॥

आशानिर्वेदपरिसृप्तयोराशानिर्वेदि लब्धाभिप्रायं युध्येत, न परिसृप्तमपसृतम् ।

कळत्रगर्ह्यन्तश्शल्ययोः कळत्रगर्ह्युन्मुच्य कळत्रं युध्येत, नान्तश्शल्यमन्तरमित्रम् ।

कुपितमूलभिन्नगर्भयोः कुपितमूलं प्रशमितकोपं सामादिभिर्युध्येत न भिन्नगर्भमन्योन्यस्माद्भिन्नम् ।

अपसृतातिक्षिप्तयोरपसृतमेकराज्यातिक्रान्तमन्त्र[2]व्यायामाभ्यां सत्रिमित्राश्रयं युध्येत, नातिक्षिप्तमनेकराज्यातिक्रान्तं बह्वाबाधत्वात् ।

407·2 उपनिविष्टसमाप्तयोरुपनिविष्टं पृथक्ज्ञानस्थानमतिस्कन्धावारं[3] युध्येत, न समाप्तं परिणतैकस्थान[4]यानम् ।

---

[1] परिक्षिणमन्यत्रावहे क्षीणयुग्य. [2] क्रान्तं मन्त्र. [3] पृथग्यानमतिसन्धाकार
[4] अरिणैकस्थान.

उपरुद्धपरिक्षिप्तयोरुपरुद्धमन्यतो निष्क्रम्योपरोद्धारं प्रतियुध्येत, न परिक्षिप्तं सर्वतः प्रतिरुद्धम् । 407·3

छिन्नधान्यपुरुषवीवधयोः छिन्नधान्यमन्यतो धान्यमानीय सङ्गमस्थावराहारं वा युध्येत, न छिन्नपुरुषवीवधमनभिसारम् ।

स्वविक्षिप्तमित्रविक्षिप्तयोः स्वविक्षिप्तं स्वभूमौ विक्षिप्तं सैन्यमापदि शक्यमपस्रावयितुं, न मित्रविक्षिप्तं विप्रकृष्टदेशकालत्वात् ।

दूष्ययुक्तदुष्टपार्ष्णिग्राहयोर्दूष्ययुक्तमाप्तपुरुषाधिष्ठितमसंहतं युध्येत, न दुष्टपार्ष्णिग्राहं पृष्ठाभिघातत्रस्तम् ।

शून्यमूलास्वामिसंहतयोः शून्यमूलं कृतपौरजानपदारक्षं सर्वसन्दोहेन युध्येत, नास्वामिसंहतं राजसेनापतिहीनम् ।

भिन्नकूटान्धयोर्भिन्नकूटमन्याधिष्ठितं युध्येत, नान्धमदेशिकमिति ॥

दोषशुद्धिर्बलावापः सत्रस्थानातिसन्धानम् ।
सन्धिश्चोत्तरपक्षस्य बलव्यसनसाधनम् ॥
रक्षेत्स्वदण्डं व्यसने शत्रुभ्यो नित्यमुत्थितः ।
प्रहरेद्दण्डरन्ध्रेषु शत्रूणां नित्यमुत्थितः ॥
यतोनिमित्तं व्यसनं प्रकृतीनामवाप्नुयात् ।
प्रागेव प्रतिकुर्वीत तन्निमित्तमतन्द्रितः ॥
अभियातं स्वयं मित्रं संभूयान्यवशेन वा ।
परित्यक्तमशक्त्या वा लोभेन प्रणयेन वा ॥
विक्रीतमभियुञ्जाने सङ्ग्रामे वाऽपवर्तिना । 408·5

408·6 द्वैधीभावेन वा मित्रं यास्यतो वाऽन्यमन्यतः ॥
पृथग्वा सहयाने वा विश्वासेनातिसंहितम् ।
भयावमानालस्यैर्वा व्यसनान्न प्रमोक्षितम् ॥
अवरुद्धं स्वभूमिभ्यः समीपाद्वा भयाद्गतम् ।
आच्छेदनाददानाद्वा दत्वा वाऽप्यवमानितम् ॥
अत्याहारितमर्थं वा स्वयं परमुखेन वा ।
अतिभारे हि युक्तं[1] वा भक्त्वा[2] परमवस्थितम् ॥
उपेक्षितमशक्त्या वा प्रार्थयित्वा विरोधितम् ।
कृच्छ्रेण साध्यते मित्रं सिद्धं चाशु विरज्यति ॥
कृतप्रयासं मान्यं वा मोहान्मित्रममानितम् ।
मानितं वा न सदृशं शक्तितो वा निवारितम् ॥
मित्रोपघातत्रस्तं वा शङ्कितं वाऽरिसंहितात् ।
दूष्यैर्वा भेदितं मित्रं साध्यं सिद्धं च तिष्ठति ॥
409·3 तस्मान्नोत्पादयेदेनान् दोषान् मित्रोपघातकान् ।
उत्पन्नान्वा प्रशमयेत् गुणैर्दोषोपघातिभिः ॥

इति व्यसनाधिकारिके अष्टमाधिकरणे बलव्यसनवर्गः
मित्रव्यसनवर्गः पञ्चमोऽध्यायः
आदित एकविंशतिशतोऽध्यायः

एतावता कौटिलीयस्यार्थशास्त्रस्य व्यसनाधिकारिकं
अष्टमाधिकरणं समाप्तम्.

---

[1] नियुक्तम्. [2] भङ्क्त्वा भक्त्या.

# ९ अधि. अभियास्यत्कर्म.

## १३५-१३६ प्रक. शक्तिदेशकालबलाबलज्ञानं यात्राकालाश्च.

विजिगीषुरात्मनः परस्य च बलाबलं शक्तिदेशकालयात्राकालबलसमुत्थानकालपश्चात्कोपक्षयव्ययलाभापदां ज्ञात्वा विशिष्टबलो यायात् । अन्यथाऽऽसीत ॥ 411·1

उत्साहप्रभावयोरुत्साहः श्रेयान् । स्वयं हि राजा शूरो बलवानरोगः कृतास्त्रो दण्डद्वितीयोऽपि शक्तः प्रभाववन्तं राजानं जेतुम्। अल्पोऽपि चास्य दण्डस्तेजसा कृत्यकरो भवति "निरुत्साहस्तु प्रभाववान् राजा विक्रमाभिपन्नो नश्यति" इत्याचार्याः ॥

नेति कौटिल्यः[1]—प्रभाववानुत्साहवन्तं राजानं प्रभावेनातिसंधत्ते । तद्विशिष्टमन्यं राजानं आवाह्य हृत्वा क्रीत्वा प्रवीरपुरुषान् प्रभूतप्रभावहयहस्तिरथोपकरणसम्पन्नश्चास्य दण्डस्सर्वत्राप्रतिहतश्चरति । उत्साहवन्तश्च प्रभाववन्तो जित्वा क्रीत्वा च "स्त्रियो बालाः पङ्गवोऽन्धाश्च पृथिवीं जिग्युः" इति ॥

"प्रभावमन्त्रयोः प्रभावः श्रेयान् । मन्त्रशक्तिसम्पन्नो हि वन्ध्यबुद्धिरप्रभावो भवति; मन्त्रकर्म चास्य निश्चितमप्रभावो गर्भधान्यमवृष्टिरिवोद्वमति[2]" इत्याचार्याः ॥ 411·4

[1] ट. रिवोपहन्ति.

412·2 नेति कौटिल्यः—मन्त्रशक्तिश्श्रेयसी ; प्रज्ञाशास्त्रचक्षुर्हि राजा अल्पेनापि प्रयत्नेन मन्त्रमाधातुं शक्तः; परानुत्साहप्रभाववतश्च सामादिभिर्योगोपनिषद्भ्यां चातिसंधातुं ; एवमुत्साहप्रभावमन्त्रशक्तीनामुत्तरोत्तराधिकोऽतिसंधत्ते ॥

देशः पृथिवी ; तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणमतिर्यक्चक्रवर्तिक्षेत्रं तत्रारण्यो ग्राम्यः पात[2]औदको भौमस्समो विषम इति विशेषाः । तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत । यत्रात्मनस्सैन्यव्यायामानां भूमिः अभूमिः परस्य, स उत्तमो देशः विपरीतोऽधमः साधारणो मध्यमः ॥

कालः शीतोष्णवर्षात्मा ; तस्य रात्रिरहः पक्षो मास ऋतुरयनं संवत्सरो युगमिति विशेषाः । तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत । यत्रात्मनस्सैन्यव्यायामानामृतुः अनृतः परस्य स उत्तमः कालः विपरीतोऽधमः । साधारणो मध्यमः ॥

"शक्तिदेशकालानां तु शक्तिः श्रेयसी" इत्याचार्याः—शक्तिमान् हि निम्नस्थलवतो देशस्य शीतोष्णवर्षवतश्च कालस्य शक्तः प्रतीकारे भवति ॥

413·1 "देशः श्रेयान्" इत्येके—स्थलगतो हि श्वा नक्रं विकर्षति निम्नगतो नक्रः श्वानमिति ॥

---

[1] ट.

"कालश्श्रेयान्" इत्येके—"दिवा काकः कौशिकं हन्ति । 413·2
रात्रौ कौशिकः काकम्" इति ॥

नेति कौटि[1]ल्यः—परस्परसाधका हि शक्तिदेशकालाः ; तैरभ्युच्छ्रितः[2] तृतीयं चतुर्थं वा दण्डस्यांशमूले पार्ष्ण्यां प्रत्यन्ताटवीषु च रक्षां विधाय कार्यसाधनसहं कोशदण्डं चादाय क्षीणपुराणभक्तमगृहीतनवभक्तमसंस्कृतदुर्गममित्रं, वार्षिकं चास्य सस्यं, हैमनं च मुष्टिमुपहन्तुं मार्गशीर्षीं यात्रां यायात् । हैमनं चास्य सस्यं वासन्तिकं च मुष्टिमुपहन्तुं चैत्रीं यात्रां यायात् । क्षीणतृणकाष्ठोदकमसंस्कृतदुर्गममित्रं, वासन्तिकं च अस्य सस्यं वार्षिकीं वा मुष्टिमुपहन्तुं ज्येष्ठामूलीयां यात्रां यायात् । अत्युष्णमल्पयवसेन्धनोदकं वा देशं हेमन्ते यायात् ॥

तुषारदुर्दिनमगाधनिम्नप्रायं गहनतृणवृक्षं वा देशं ग्रीष्मे यायात् ॥

स्वसैन्यव्यायामयोग्यं परस्यायोग्यं वर्षति यायात् ।

मार्गशीर्षीं तैषीं चान्तरेण दीर्घकालां यात्रां यायात् । चैत्रीं वैशाखीं चान्तरेण मध्यमकालां ज्येष्ठामूलीयामाषाढीं चान्तरेण ह्रस्वकालमुपोषिष्यन् व्यसने चतुर्थीं ॥

व्यसनाभियानं विगृह्ययाने व्याख्यातम् ॥

"प्रायशश्च" इत्याचार्याः—"परव्यसने यातव्यम्" इत्युपदिशन्ति ॥ 414·1

[1] ट. [2] भ्युच्चितः.

414·2 "शक्त्युदये यातव्यमनैकान्तिकत्वात् व्यसनानाम्" इति कौटि[1]ल्यः ॥

यदा वा प्रयातः कर्शयितुमुच्छेत्तुं वा शक्नुयादमित्रं, तदा यायात् ॥

अत्युष्णोपक्षीणे काले हस्तिबलप्रायो यायात् हस्तिनो ह्यन्तस्स्वेदाः कुष्ठिनो भवन्ति ;—अनवगाहमानास्तोयमपिबन्तश्चान्तरपक्षाराः चण्डीभवन्ति[2] । तस्मात् प्रभूतोदके देशे, वर्षति च हस्तिबलप्रायो यायात् । विपर्यये खरोष्ट्राश्वबलप्रायः देशमल्पवर्षपङ्कम् । वर्षति मरुप्रायं चतुरङ्गबलो यायात् । समविषमनिम्नस्थलह्रस्वदीर्घवशेन वाऽध्वनो यात्रां विभजेत् ।

सर्वा वा ह्रस्वकालास्स्युर्यातव्याः कार्यलाघवात् ।
दीर्घाः कार्यगुरुत्वाद्वा वर्षावासः परत्र च ॥

इत्यभियास्यत्कर्माणि नवमेऽधिकरणे शक्तिदेशकालबलाबलज्ञानं यात्राकालाः प्रथमोध्यायः
आदितो द्वाविंशशतोऽध्यायः

## १३७–१३९ प्रक. बलोपदानकालाः, सन्नाहगुणाः, प्रतिबलकर्म च

मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः ।

415·2 मूलरक्षणादतिरिक्तं मौलबलम् "अत्यावापयुक्ता वा मौला मूले विकुर्वीरन्" इति "बहुलानुरक्तमौलबलः सारबलो

वा प्रतियोद्धा व्यायामेन योद्धव्यम्" इति, "प्रकृष्टेऽध्वनि 415·2
काले वा क्षयव्ययसहत्वान्मौलानाम्" इति "बहुलानुरक्तस-
म्पादिते च यातव्यस्योपजापभयादन्यसैन्यानां भृतादीनामवि-
श्वासे, बलक्षये वा सर्वसैन्यानाम्" इति मौलबलकालः ॥

"प्रभूतं मे भृतबलमल्पं च मौलबलम्" इति; "परस्याल्पं
विरक्तं वा मौलबलं, फल्गुप्रायमसारं वा भृतसैन्यम्" इति;
"मन्त्रेण योद्धव्यमल्पव्यायामेन" इति "ह्रस्वो देशः कालो
वा तनुक्षयव्ययः" इति "अल्पावापं शान्तोपजापमविश्वस्तं[1] वा
मे सैन्यम्" इति "परस्याल्पः प्रसारो हन्तव्यः" इति
भृतबलकालः ॥

"प्रभूतं मे श्रेणीबलं शक्यं मूले यात्रायां चाधातुम्" इति,
"ह्रस्वः प्रवासः श्रेणीबलप्रायः प्रतियोद्धा मन्त्रव्यायामाभ्यां
प्रतियोद्धुकामो दण्डबलव्यवहारः" इति श्रेणीबलकालः ॥

प्रभूतं मे मित्रबलं शक्यं मूले यात्रायां चाधातुमल्पः
प्रवासो मन्त्रयुद्धाच्च भूयो व्यायामयुद्धम्" इति; "मित्रबलेन
वा पूर्वमटवीनगरीस्थानमासारं वा योधयित्वा पश्चात् स्वबलेन
योधयिष्यामि, मित्रसाधारणं वा मे कार्यं, मित्रायत्ता वा
मे कार्यसिद्धिः, आसन्नमनुग्राह्यं वा मे मित्रमत्यावापं वाऽस्य
साधयिष्यामि[2]" इति मित्रबलकालः ॥

"प्रभूतं मे शत्रुबलं शत्रुबलेन योधयिष्यामि, नगरस्थान- 416·2

[1] जापं विश्वस्तं. [2] सादयिष्यामि.

416·2 मटवीं वा ; तत्र मे श्ववराहयोः कलहे चण्डालस्येवान्यतरासिद्धिः भविष्यति, आसाराणामटवीनां वा कण्टकमर्दनमेतत् करिष्यामि, अत्युपचितं वा कोपभयान्नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्कायाश्शत्रुयुद्धावरयुद्धकालश्च" इत्यमित्रबलकालः ॥

तेनाटवीबलकालो व्याख्यातः ॥

"मार्गदेशिकं परभूमियोग्यमरियुद्धप्रतिलोममटवीबलमायश्शत्रुर्वा बिल्वं बिल्वेन हन्यतामल्पः प्रसारो हन्तव्यः" इत्यटवीबलकालः ॥

सैन्यमनेकमनेकजातीयस्थमुक्तमनुक्तं वा विलोपार्थं यदुत्तिष्ठति, तदौत्साहिकमभक्तवेतनं विलोपदृष्टिप्रतापकरं भेद्यं परेषामभेद्यं ।

तुल्यदेशजातिशिल्पप्रायं संहतं महदिति बलोपादानकालाः ।

तेषां कुप्यभृतममित्राटवीबलं विलोपभृतं वा कुर्यात् । अमित्रस्य वा बलकाले प्रत्युत्पन्ने शत्रुमप[1]गृह्णीयात् । अन्यत्र वा प्रेषयेत् । अफलं वा कुर्यात् । विक्षिप्तं वासयेत् । काले वाऽतिक्रान्ते विसृजेत् । परस्य चैतत् बलसमुद्दानं विघातयेत् आत्मनस्संपादयेत् ॥

पूर्वंपूर्वं चैषां श्रेयस्सन्नाहयितुम् । तद्भावभावित्वान्नित्यसंस्कारानुगमाच्च मौलबलं भृतबलाच्छ्रेयः ।

417·6 नित्यानन्तरं क्षिप्रोत्थायि वश्यं च भृतबलं श्रेणीबलाच्छ्रेयः ॥

जानपदमेकार्थोपगतं तुल्यसङ्घर्षामर्षसिद्धिलाभं च श्रेणीबलंमि- 417·7
त्रबलाच्छ्रेयः, अपरिमितदेशकालमेकार्थोपगमाच्च मित्रबलाच्छ्रेयः[1]॥

आर्याधिष्ठितममित्रबलमटवीबलाच्छ्रेयः। तदुभयं विलोपार्थम्। अविलोपे व्यसने च ताभ्यामहिभयं स्यात्॥

"ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानां तेजःप्राधान्यात् पूर्वंपूर्वं श्रेयस्संनाहयितुम्" इत्याचार्याः॥

नेति कौटि[2]ल्यः—प्रणिपातेन ब्राह्मबलं परोऽभिहारयेत्। प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः; बहुलसारं वा वैश्यशूद्रबलमिति॥

तस्मादेवंबलः परः "तस्यैतत्प्रतिबलम्" इति बलसमुद्दानं कुर्यात्—हस्तियन्त्रशकटगर्भकुन्तप्रासखर्वटकवेणुशल्यवद्धस्तिबलस्य प्रतिबलम्॥

तदेव पाषाणलगुडावरणाङ्कुशकचग्रहणीप्रायं रथबलस्य प्रतिबलम्॥

तदेवाश्वानां प्रतिबलं, वर्मिणो वा हस्तिनोऽश्वा वा वर्मिणः॥

कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गबलस्य प्रतिबलम्॥

एवं बलसमुद्दानं परसैन्यनिवारणम्। 418·7
विभवेन स्वसैन्यानां कुर्यादङ्गविकल्पशः॥

इत्यभियास्यत्कर्मणि नवमेऽधिकरणे बलोपदानकालास्सन्नाहगुणाः प्रतिबलकर्म द्वितीयोऽध्यायः.
आदितस्त्रयोविंशशतोऽध्यायः.

---

[1] मित्रबलममित्रबलाच्छ्रेयः। [2] ट.

## १४०–१४१ प्रक. पश्चात्कोपचिन्ता, बाह्या-भ्यन्तरप्रकृतिकोपप्रतीकारश्च.

418·9 "अल्पः पश्चात्कोपो महान् पुरस्ताल्लाभः" इति, अल्पः पश्चात्कोपो गरीयान्। अल्पं पश्चात्कोपं प्रयातस्य दूष्यामित्राटविका हि सर्वतः समेधयन्ति । प्रकृतिकोपो वा लब्धमपि च महान्तं पुरस्ताल्लाभम् ॥

एवंभूते भृते भृत्यामित्रक्षयव्ययान् प्रयुञ्जीत[1] पुरस्ताल्लाभे सेनापतिं कुमारं वा दण्डचारिणं कुर्वीत ॥

बलवान्वा राजा पश्चात्कोपावग्रहसमर्थः पुरस्ताल्लाभमादातुं यायात्। आभ्यन्तरकोपशङ्कायां शङ्कितानादाय यायात् बाह्यकोपशङ्कायां वा पुत्रदारमेषामभ्यन्तरावग्रहं कृत्वा शून्यपालमनेकबलवर्गमनेकमुख्यं च स्थापयित्वा यायात् न यायाद्वा। "अभ्यन्तरकोपो बाह्यकोपात् पापीयान्" इत्युक्तं पुरस्तात्॥

मन्त्रिपुरोहितसेनापतियुवराजानामन्यतरकोपोऽभ्यन्तरकोपः।तमात्मदोषत्यागेन परशक्त्यपराधवशेन वा साधयेत्। महापराधेऽपि पुरोहिते संरोधनमप[2]स्रावणं वा सिद्धिः; युवराज संरोधनं निग्रहो वा गुणवत्यन्यस्मिन् सति पुत्रे ॥

ताभ्यां मन्त्रिसेनापती व्याख्यातौ ॥

419·5 पुत्रं भ्रातरमन्यं वा कुल्यं राज्यग्राहिणमुत्साहेन साध-

---

[1] प्रयुञ्जीत । तस्म त्सहस्रैकीयः पुरस्ताल्लाभस्यायोगः शतैकीयो वा पश्चात्कोप इति न यायात् । सूचीमुखा ह्यनर्था इति लोकप्रवादः । पश्चात्कोपे सामदानभेददण्डान्प्रयुञ्जीत.

येत्। उत्साहाभावे गृहीतानुवर्तनसन्धिकर्मभ्यामारिसन्धानभया- 420·1
दन्येभ्यस्तद्विधेभ्यो वा भूमिदानैर्विश्वासयेदेनं तद्विशिष्टं स्वयं-
ग्राहं दण्डं वा प्रेषयेत् । सामन्ताटविकान्वा तैर्विगृहीतमतिसं-
दध्यात् । अवरुद्धादानं पारग्रामिकं वा योगमातिष्ठेत् ॥

एतेन मन्त्रिसेनापती व्याख्यातौ ॥

मन्त्र्यादिवर्जानामन्तरमात्यानामन्यतरकोपोऽन्तरमात्यकोपः
तत्रापि यथार्हमुपायान् प्रयुञ्जीत ॥

राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्य-
कोपः तमन्योन्येनावग्राहयेत् । अतिदुर्गप्रतिस्तब्धं वा सामन्ता-
टविकतत्कुलीनावरुद्धानामन्यतमेनावग्राहयेत् । मित्रेणोपग्राह-
येद्वा । यथा नामित्रं गच्छेत् ॥

अमित्रात्सत्री भेदयेदेनं "अयं त्वां योगपुरुषं मन्यमानो
भर्तर्येव विक्रमयिष्यति ; अवाप्तार्थो दण्डचारिणममित्राटविकेषु 420·3
कृच्छ्रे वा प्रवासे योक्ष्यति ; विपुत्रदारमन्ते वा वासयिष्यति ;
प्रतिहतविक्रमं त्वां भर्तरि पण्यं करिष्यति ; त्वया वा
सन्धिं कृत्वा भर्तारमेव प्रसादयिष्यति ; मित्रमुपकृष्टं वाऽस्य
गच्छेत्[1]" इति प्रतिपन्नमिष्टाभिप्रायैः पूजयेत् । अप्रतिपन्नस्य
संश्रयं "भेदोऽसौ ते योगपुरुषप्रणिहितः[2]" इति । सत्री चैनं
अभिव्यक्तशासनैर्घातयेत् ; गूढपुरुषैर्वा सहप्रस्थायिनो वाऽस्य
प्रवीरपुरुषान्यथाभिप्रायकरणेन वाहयेत् । तेन प्रणिहितान् सत्री

[1] गच्छ. [2] संश्रयं भेदयेत् "असौ ते योगं पुरुषः प्रणिहितः."

421·1 ब्रूयादिति सिद्धिः। परस्य चैनान् कोपानुत्थापयेत्। आत्मनश्च शमयेत् ॥

यः कोपं कर्तुं शमयितुं वा शक्तः, तत्रोपजापः कार्यः; यस्सत्यसन्धः शक्तः, कर्मणि फलावाप्तौ चानुगृहीतुं त्रिनिपाते च त्रातुं तत्र प्रतिजापः कार्यः, तर्कयितव्यश्च— "कल्याणबुद्धिरुताहो शठः" इति ॥

शठो हि बाह्योऽभ्यन्तरमेवमुपजपति— "भर्तारं चेद्धत्वा मां प्रतिपादयिष्यति, शत्रुवधो भूमिलाभश्च मे द्विविधो लाभो भविष्यति; अथवा शत्रुरेनमाहनिष्यतीति। हतबन्धुपक्षस्तुल्यदोषदण्डेन वा उद्विग्नश्च मे भूयात्। न कुलपक्षो भविष्यति; तद्विधे वाऽन्यस्मिन् अविशङ्कितो[1] भविष्यति; अन्यमन्यं चास्य मुख्यमभिव्यक्तशासनेन घातयिष्यामि" इति

अभ्यन्तरो वा शठो बाह्यमेवमुपजपति— "कोशमस्य हरिष्यामि; दण्डं वाऽस्य हनिष्यामि; दुष्टं वा भर्तारमनेन घातयिष्यामि; प्रतिपन्नं बाह्यममित्राटविकेषु विक्रमयिष्यामि; चक्रमस्य सज्यतां; वैरमस्य प्रसज्यतां; ततस्स्वाधीनो मे भवि-

421·5 ष्यति; ततो भर्तारमेव प्रसादयिष्यामि; स्वयं वा राज्यं ग्रहीष्यामि; बध्वा वा बाह्यभूमिं भर्तृभूमिं चोभयमवाप्स्यामि; विरुद्धं वा वाहयित्वा बाह्यं विश्वस्तं घातयिष्यामि; शून्यं वाऽस्य मूलं हरिष्यामि" इति ॥

[1] अपि शङ्कितो.

कल्याणबुद्धिस्तु सहजीव्यर्थमुपजपति । कल्याणबुद्धिना 422 1
संदधीत । शठं "तथा" इति प्रतिगृह्यातिसंदध्यात् ॥

इत्येवमुपलभ्यम् ॥

परे परेभ्यस्स्वे स्वेभ्यः स्वे परेभ्यस्स्वतः परे ।
रक्ष्याः स्वेभ्यः परेभ्यश्च नित्यमात्मा विपश्चिता ॥

इत्यभियास्यत्कर्मणि पश्चात्कोपचिन्ता, बाह्याभ्यन्तर-
प्रकृतिकोपप्रतीकारश्च तृतीयोऽध्यायः
आदितश्चतुर्विंशशतोऽध्यायः

## १४२ प्रक. क्षयव्ययलाभविपरिमर्शः.

युग्यपुरुषापचयः क्षयः ॥

हिरण्यधान्यापचयो व्ययः ॥

ताभ्यां बहुगुणविशिष्टे लाभे यायात् ॥

आदेयः, प्रत्यादेयः, प्रसादकः, कोपकः,[1] ह्रस्वकालः, तनु-
क्षयः, अल्पव्ययः, महान्वृद्ध्युदयः, कल्यः, धर्म्यः, पुरोगश्चेति
लाभसम्पत् ॥

सुप्राप्यानुपाल्यः परेषामप्रत्यादेय इति आदेयः, विपर्य-
ये प्रत्यादेयः, तमाददानस्तत्रस्थो वा विनाशं प्राप्नोति ॥

यदि वा पश्येत्—"प्रत्यादेयमादाय कोशदण्डनिचयरक्षा- 422 9
विधानान्यवस्रावयिष्यामि; खनिद्रव्यहस्तिवनसेतुबन्धवणिक्प-

---

[1] प्रकोपकः.

423·1 थानुद्धृतसारान् करिष्यामि; प्रकृतीरस्य कर्शयिष्यामि; अपवाहयिष्याम्यायोगे[1] नाराधयिष्यामि वा । ता: पर:[2] प्रयोगेण कोपयिष्यति; प्रतिपक्षे वाऽस्य पण्यमेनं करिष्यामि; तदामित्रं[3] विरक्तं तत्कुलीनं प्रतिपत्स्यते सत्कृत्य वाऽस्मै भूमिं दास्यामीति संहितासमुत्थितं मित्रं मे चिराय भविष्यति" इति प्रत्यादेयमपि लाभमाददीत ॥

इत्यादेयप्रत्यादेयौ व्याख्यातौ ॥

अधार्मिकाद्धार्मिकस्य लाभो लभ्यमानः स्वेषां परेषां च प्रसादको भवति । विपरीतः प्रकोप[4] इति ॥

मन्त्रिणामुपदेशाल्लाभो लभ्यमानः कोपको भवति, "अयमस्माभिः क्षयव्ययो ग्राहितः" इति । दूष्यमन्त्रिणामनादराल्लाभो लभ्यमानः कोपको भवति, "सिद्धार्थोऽयमस्मान् विनाशयिष्यति" इति विपरीतः प्रसादकः ॥

इति प्रासादकोपकौ व्याख्यातौ ॥

गमनमात्रसाध्यत्वाल्लघुरल्पकालः ॥

मन्त्रसाध्यत्वात्तनुक्षयः ॥

भक्तमात्रव्ययत्वादल्पव्ययः ॥

तदात्ववैपुल्यान्महान् ॥

अर्थानुबन्धकत्वाद्वृद्ध्युदयः ॥

423·8 निराबाधकत्वात्कल्यः ॥

---

[1] म्ययोगे. [2] परं. [3] मित्रमवरुद्धं वाऽस्य प्रतिपादयिष्यामि । मित्रस्य स्वस्य देशस्य पीडामत्रस्थस्तस्करेभ्यः परेभ्यश्च प्रतिकरिष्यामि । मित्रमाश्रयं वाऽस्य वैगुण्य वारयिष्यामि । तदामित्रं. [4] प्रकोपक.

प्रशस्तोपादानाद्धर्म्यः ॥ 423'9

सामवायिवाकामनिर्बन्धगामित्वात् पुरोग इति ॥

तुल्ये लाभे, देशकालौ शक्त्युपायौ प्रियाप्रियौ जपाजपौ[1] सामीप्यविप्रकर्षौ तदात्वानुबन्धौ सारत्वसारत्वासातत्ये बाहुल्यबाहुगुण्ये च विमृश्य बहुगुणयुक्तं लाभमाददीत ॥

लाभविघ्नः—कामः कोपः साध्वसं कारुण्यं ह्रीः अनार्यभावः मानः सानुक्रोशता परलोकापेक्षा धार्मिकत्वं अत्याहितत्वं[2] दैन्यं असूया हस्तगतावमानोदारात्मिकमविश्वासे[3] भयमन्नितिकारश्शीतोष्णवर्षाणामाक्षम्यं मङ्गळतिथिनक्षत्रेष्टित्वमिति[4] ॥

नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते ।
अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ॥
साधनाः प्राप्नुवन्त्यर्थान् नरा यत्नशतैरपि । 424'4
अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव ॥

इत्याभियास्यत्कर्माणि नवमेऽधिकरणे क्षयव्ययलाभविपरिमर्शः चतुर्थोऽध्यायः
आदितः पञ्चविंशशतः



1 जवाजवौ. 2 अत्यागित्वं. 3 त्मकमविश्वासो. 4 "कामोक्षमा दक्षिणताऽनुकम्पा ह्रीस्साध्वसं क्रौर्यमनार्यता च । दम्भोऽभिमानोप्यतिधार्मिकत्वं दैन्यं स्वयूथस्य विमाननं च॥ द्रोहो भयं शश्वदुपेक्षणं च शीतोष्णवर्षाप्रसहिष्णुता च । एतानि काले समुपाहितानि कुर्वन्त्यवश्यं खलु सिद्धिविघ्नम्" ॥ इति पञ्चदशसर्गे नीतिसारे कामन्दकः.

# १४३ प्रक. बाह्याभ्यन्तराश्चापदः.

424·6 सन्ध्यादीनामयतोद्देशावस्थापनमपनयः ॥

तस्मादापदस्संभवन्ति ॥

बाह्योत्पत्तिराभ्यन्तरप्रतिजापा, आभ्यन्तरोत्पत्तिर्बाह्यप्रतिजापा, बाह्योत्पत्तिर्बाह्यप्रतिजापा अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजापा इत्यापदः ॥

यत्र बाह्या अभ्यन्तरानुपजपन्ति, अभ्यन्तरा वा बाह्यान् तत्रोभययोग[1]प्रतिजपतः सिद्धिर्विशेषवती । सुव्याजा हि प्रतिजपितारो भवन्ति नोपजपितारः । तेषु प्रशान्तेषु नान्यांच्छक्नुयुरुपजपितुमुपजापितारः । कृच्छ्रोपजापा हि बाह्यानामभ्यन्तरास्तेषामितरे वा महतश्च प्रयत्नस्य वधः परेषां अर्थानुबन्धश्चात्मन इति ॥

अभ्यन्तरेषु प्रतिजपत्सु सामदाने प्रयुञ्जीत । स्थानमानकर्म सान्त्वम् । अनुग्रहपरिहारौ कर्मस्वायोगो वा दानम् ॥

बाह्येषु प्रतिजपत्सु भेददण्डौ प्रयुञ्जीत । सत्रिणो मित्रव्यञ्जना बाह्यानां चारमेषां ब्रूयुः "अयं वो राज[2]दूष्यव्यञ्जनैरतिसंधातुकामो बुध्यध्वम्" इति । दूष्येषु वा दूष्यव्यञ्जनाः प्रणिहिता दूष्यान् बाह्यैर्भेदयेयुः बाह्यान्वा दूष्यैः । दूष्याननुप्रविष्टा वा तीक्ष्णाश्शस्त्ररसाभ्यां हन्युः । आहूय वा बाह्यान् घातयेयुरिति ॥

425·5 यत्र बाह्या बाह्यानुपजपन्ति, अभ्यन्तरान् अभ्यन्तरा वा,

[1] योगे. [2] राजा.

तत्रैकान्तयोगमुपजापितुः सिद्धिर्विशेषवती । दोषशुद्धौ हि दूष्या न विद्यन्ते । दूष्यशुद्धौ हि दोषः पुनरन्यान् दूषयति ॥ 425·5

तस्माद्बाह्येषूपजपत्सु भेददण्डौ प्रयुञ्जीत । सत्रिणो मित्रव्यञ्जना वा ब्रूयुः "अयं वो राजा स्वयमादातुकामो विगृहीता स्थानेन राज्ञा बुध्यध्वम्" इति । प्रतिजापितुर्वा ततो दूतदण्डाननुप्रविष्टास्तीक्ष्णाः शस्त्ररसादिभिरेषां छिद्रेषु प्रहरेयुः ॥

ततः सत्रिणः प्रतिजापितारमभिशंसेयुः ॥

अभ्यन्तरानभ्यन्तरेषूपजपत्सु यथार्हमुपायं प्रयुञ्जीत । तुष्टलिङ्गमतुष्टं विपरीतं वा साम प्रयुञ्जीत ॥

शौचसामर्थ्यापदेशेन व्यसनाभ्युदयावेक्षणेन वा प्रतिपूजनमिति दानम् । मित्रव्यञ्जनो वा ब्रूयादेतान्–"चित्तज्ञानार्थमुपधास्यति वो राजा; तदस्याख्यातव्यम्" इति । परस्पराद्वा भेदयेदेनान्–"असौ च वो राजन्येवमुपजपति" भेदो दाण्डकार्मिकवच्च दण्डः ॥

एतासां चतसृणामापदामभ्यन्तरामेव पूर्वं साधयेत् । "अहिभयादभ्यन्तरकोपो बाह्यकोपात् पापीयान्" इत्युक्तं पुरस्तात् ॥

पूर्वां पूर्वां विजानीयाल्लघ्वीमापदमापदाम् । 426·3
उत्थितां बलवद्भ्यो वा शुद्धिं[1] लघ्वा विपर्यये ॥

इत्यभियास्यत्कर्माणि बाह्याभ्यन्तराश्च
आपदः पञ्चमोऽध्यायः
आदितः षड्विंशशतः

[1] गुर्वी.

## १४४ प्रक. दूष्यशत्रुसंयुक्ताः.

426·5 दूष्येभ्यः शत्रुभ्यश्च द्विविधाः शुद्धाः ॥

दूष्यशुद्धायां पौरेषु जानपदेषु वा दण्डवर्जानुपायान्प्रयुञ्जीत । दण्डो हि महाजने क्षेप्तुमशक्यः; क्षिप्तो वा तं चार्थं न कुर्यात् । अन्यं चानर्थमुत्पादयेत् । मुख्येषु त्वेषां दाण्डकार्मिकवच्चेष्टेतेति ॥

शत्रुशुद्धायां यतः शत्रु[1]प्रधानः कार्यो वा, ततस्सामादिभिः सिद्धिं लिप्सेत ॥

स्वामिन्यायत्ता प्रधानासिद्धिः; मन्त्रिष्वायत्ता यत्नासिद्धिः; उभयायत्ता प्रधानायत्ता सिद्धिः[2] ॥

दूष्यादूष्याणामामिश्रितत्वादामिश्रा । आमिश्रायामदूष्यतस्सिद्धिः । आलम्बनाभावे ह्यालम्बिता न विद्यते । मित्रामित्राणामेकीभावात् परमिश्रा, परमिश्रायां मित्रतस्सिद्धिः । सुकरो हि मित्रेण सिद्धिर्नामित्रेणेति ॥

427·5 मित्रं चेन्न सन्धिमिच्छेत्; अभीक्ष्णमुपजपेत् ततस्सत्रिभिरमित्रात् भेदयित्वा मित्रं लभेत । मित्रसङ्घस्य वा योऽन्तस्स्थायी तं लभेत । अन्तस्स्थायिनि लब्धे मध्यस्थायिनो भिद्यन्ते । मध्यस्थायिनं वा लभेत । मध्यस्थायिनि वा लब्धे नान्तस्स्थायिनः संहन्यन्ते । यथा चैषामाश्रयभेदः तानुपायान् प्रयुञ्जीत ॥

धार्मिकं जातिकुलश्रुतवृत्त[1]स्तवेन सम्बन्धेन पूर्वेषां त्रैकाल्योपकारानपकाराभ्यां वा सान्त्वयेत् ॥ 428·1

निवृत्तोत्साहं विग्रहश्रान्त[2]प्रतिहतोपायं क्षयव्ययाभ्यां प्रवासेन चोपतप्तं शौचेनान्यं लिप्समानमन्यस्माद्वा शङ्कमानं मैत्रीप्रधानं वा कल्याणबुद्धिं साम्ना साधयेत् ॥

लुब्धं क्षीणं वा तपस्विमुख्यावस्थापनापूर्वं दानेन साधयेत् ॥

तत्पञ्चविधं देयविसर्गः, गृहीतानुवर्तनं, आत्तप्रतिदानं, स्वद्रव्यदानं, अपूर्वं[3]परस्वेषु स्वयं ग्राहदानं चेति दानकर्म ॥

परस्परद्वेषवैरभूमिहरणशङ्कितं अतोऽन्यतमेन भेदयेत् । भीरुं वा प्रतिघातेन—"कृतसन्धिरेष त्वयि कर्म करिष्यति; मित्रमस्य निसृष्टं सन्धौ वा नाभ्यन्तरः" इति ॥

यस्य वा स्वदेशादन्यदेशाद्वा पण्यानि पण्यागारतया गच्छेयुः 428·6 तान्यस्य "यातव्याल्लब्धानि[4]" इति सत्रिणश्चारयेयुः बहुलीभूते शासनमभिव्यक्तेन प्रेषयेत्—"एतत्ते पण्यं पण्यागारं वा मया ते प्रेषितं; सामवायिकेषु विक्रमस्व, अपगच्छ वा ततः पणशेषमवाप्स्यसि" इति । ततस्सत्रिणः परेषु ग्राहयेयुः—"एतदरिप्रदत्तम्" इति ॥

शत्रुप्रख्यातं वा पण्यमविज्ञातं विजिगीषुं गच्छेत् । तदस्य

[1] जातिकुलवृत्त. [2] विग्रहश्रान्तं. [3] स्वद्रव्यदानपूर्वं. [4] यातव्यालुब्धानि

429·1 वैदेहकव्यञ्जनाश्शत्रुमुख्येषु विक्रीणीरन्. ततस्सत्रिणः परेषु ग्राहयेयुः—"एतत्पण्यमरिप्रदत्तम्" इति ॥

महापराधानर्थमानाभ्यामुपगृह्य वा शस्त्ररसाग्निभिरमित्रेण प्रणिदध्यात्। अथैकममात्यं निष्पातयेत्। तस्य पुत्रदारमुपगृह्य रात्रौ हतमिति ख्यापयेत्। अथामात्यः शत्रोस्तानेकैकशः प्ररूपयेत्। ते चेद्यथोक्तं कुर्युः न चैनान् ग्राहयेत्। अशक्तिमतो वा ग्राहयेत्। आप्तभावोपगतो मुख्यादस्यात्मानं रक्षणीयं कथयेत्; अथामित्रशासनममुख्यायोपघाताय प्रेषितमुभयवेतनो ग्राहयेत् ॥

उत्साहशक्तिमतो वा प्रेषयेत्—"अमुष्य राज्यं गृहाण यथास्थितो नस्सन्धिः" इति। ततस्सत्रिणः परेषु ग्राहयेयुः एकस्य स्कन्धावारं विविधमासारं वा घातयेयुः। इतरेषु मैत्रीं ब्रुवाणाः "त्वमेतेषां घातयितव्यः" इत्युपजपेयुः ॥

यस्य वा मत्रीरपुरुषो हस्ती हयो वा म्रियेत, गूढपुरुषैर्हन्येत ह्रीयेत वा, तं सत्रिणः परस्परोपहतं ब्रूयुः। ततः शासनमाभिशस्तस्य प्रेषयेत्—"भूयः कुरु ततः पणशेषमवाप्स्यसि" इति। तदुभयवेतना ग्राहयेयुः। भिन्नेष्वन्यतमं लभेत।

430·1 तेन सेनापतिकुमारदण्डचारिणो व्याख्याताः ॥

साङ्घिकं च भेदं प्रयुञ्जीतेति भेदकर्म ॥

तीक्ष्णं मुक्त्वा हीनं[1] व्यसनिनं स्थितशत्रुं वा गूढपुरुषाः शस्त्राग्निरसादिभिस्साधयेयुः सौकर्यतो वा तेषामन्यतमः[2]। तीक्ष्णो

ह्वकः शस्त्ररसाग्निभिस्साधयेत् । अयं सर्वसंदोहकर्मविशिष्टं वा 430·3
करोतीत्युपायचतुर्वर्गः ।

पूर्वः पूर्वश्चास्य लघिष्ठः । "सान्त्वमेकगुणम् । दानं द्विगुणं सान्त्वपूर्वम् । भेदस्त्रिगुणः सान्त्वदानपूर्वः । सान्त्वदण्डश्चतुर्गुणः सान्त्वदानभेदपूर्वः" इत्यभियुञ्जानेषूक्तम् ॥

स्वभूमिष्ठेषु तु त एवोपायाः। विशेषस्तु—स्वभूमिष्ठानामन्यतमस्य पण्यागारैरभिज्ञातान् दूतमुख्यानभीक्ष्णं प्रेषयेत्, त एनं सन्धौ पराहिंसायां वा योजयेयुः; अप्रतिपाद्यमानं "कृतो नस्सिद्धिः[1]" इत्यावेदयेयुः । तमितरेषामुभयवेतनास्संक्रामयेयुः—"अयं वो राजा दुष्टः" इति । यस्य वा यस्माद्भयं वैर[2]द्वेषो वा, तं तस्माद्भेदयेयुः "अयं ते शत्रुणा संधत्ते; पुरा त्वामतिसंधत्ते क्षिप्रतरं सन्धीयस्व; निग्रहे चास्य प्रयतस्व" इति । आवाहविवाहाभ्यां वा कृत्वा संयोगमसंयुक्तान् भेदयेत् । सामन्ताटविकतत्कुलीनावरुद्धैश्चैषां राज्यानि घातयेत् । सार्थप्रजाटवीभिर्वा दण्डं वाऽभिसृतं परस्परापाश्रयाश्चैषां जातिसङ्घाच्छिद्रेषु[3] प्रहरेयुः । गूढाश्चाग्निरसशस्त्रेण ॥

पीतं सगळवच्चारीन्योगैराचरितैश्शठम् । 431·2
घातयेत्परमिश्रायां विश्वासेनामिषेण च ॥

इत्यभियास्यत्कर्मणि दूष्यशत्रुसंयुक्ताष्षष्ठोऽध्यायः
आदितः सप्तविंशशतः

---

1 नस्सन्धिः. 2 वैरं, 3 जातिसङ्घाच्छिद्रेषु.

# १४५-१४६ प्रक. अर्थानर्थसंशययुक्ताः तासामुपायविकल्पजास्सिद्धयश्च.

431·4 कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति । अपनयो बाह्याः तदुभयमासुरी वृत्तिः । स्वजनविकारः कोपः । परवृद्धिहेतुषु— आपदर्थोऽनर्थस्संशय इति ।

योऽर्थः शत्रुवृद्धिमवाप्तः[1] प्राप्तः प्रत्यादेयः परेषां भवति; प्राप्यमाणो वा क्षयव्ययोदयो भवति, स भवत्यापदर्थः । यथा—सामन्तानामामिषभूतः सामन्तव्यसनजो लाभः, शत्रुप्रार्थ्यो वा स्वभावाधिगम्यो वा लाभः, पश्चात्कोपेन पार्ष्णिग्राहेण वा विगृहीतः पुरस्ताल्लाभः, मित्रोच्छेदेन[2] सन्धिव्यतिक्रमेण वा मण्डलविरुद्धो लाभ इत्यापदर्थः ।

स्वतः परतो वा भयोत्पत्तिरित्यनर्थः[3] ।

तयोः "अनर्थो न वा"? इति, "अर्थोऽनर्थः"? इति, "अनर्थः अर्थः"? इति संशयः ।

शत्रुं मित्र[4]मुत्साहयितुमर्थो न वेति संशयः ।

शत्रुबलमर्थमानाभ्यामावाहयितुमनर्थो न वेति संशयः ।

तेषामर्थसंशयमुपगच्छेत् ।

अर्थोऽर्थानुबन्धः, अर्थो निरनुबन्धः, अर्थोऽनर्थानुबन्धः, अनर्थोऽर्थानुबन्धः, अनर्थो निरनुबन्धः; अनर्थोऽनर्थानुबन्ध

432·5 इत्यनर्थषड्वर्गः शत्रुमुत्पाट्य पार्ष्णिग्राहादानमर्थोऽर्थानुबन्धः ।

---

[1] मप्राप्तः. [2] पुरस्ताल्लाभामित्रोच्छेदेन. [3] रित्यापदर्थः, [4] शत्रुमित्र.

उदासीनस्य दण्डानुग्रह[1] फलेन अर्थो निरनुबन्धः । 432·6
परस्यान्तरुच्छेदनमर्थोऽनर्थानुबन्धः ।

शत्रुप्रतिवेशस्यानुग्रहः कोशदण्डाभ्यामनर्थोऽर्थानुबन्धः
हीनशक्तिमुत्साह्य निवृत्तिरनर्थो निरनुबन्धः ।

ज्यायांसमुत्थाप्य निवृत्तिरनर्थोऽनर्थानुबन्धः ।

तेषां पूर्वःपूर्वः श्रेयानुपसंग्रहीतुम् ।

इति कार्यावस्थापनम् ।

समन्ततो युगपदर्थोत्पत्तिस्समन्ततोऽर्थाद्भवति ।
सैव पार्ष्णिग्राहविगृहीता समन्ततोऽर्थसंशयापद्भवति ।
तयोर्मित्राक्रन्दोपग्रहात्सिद्धिः ।

समन्ततः शत्रुभ्यो भयोत्पत्तिस्समन्ततोऽनर्थापद्भवति ।
सैव मित्रगृहीता[2] समन्ततोऽनर्थसंशयापद्भवति ।
तयोश्चलामित्राक्रन्दोपग्रहात्सिद्धिः ।

परमिश्राप्रतिकारो वा इतो लाभ इतरतो लाभ इत्युभयतोऽर्थापद्भवति ।

तस्यां समन्ततोऽर्थायां च लाभगुणयुक्तमर्थमादातुं यायात्। तुल्ये लाभगुणे प्रधानमासन्नमनतिपातन[3]मूनोपायेन भवेत्, तमादातुं यायात् ।

इतोऽनर्थ इतरतोऽनर्थ इत्युभयतोऽनर्थापत् ।

तस्यां समन्ततोऽनर्थायां च मित्रेभ्यस्सिद्धिं लिप्सेत । मित्राभावे प्रकृतीनां लघीयस्यैकतोऽनर्थान् साधयेत् । उभयतोनर्थान् 433·5

---

[1] दण्डानुग्रहः. [2] मित्राविगृहीता. [3] पातिन.

433·5 ज्यायस्या, समन्ततोऽनर्थान् मूलेन प्रतिकुर्यात् । अशक्ये समुत्सृज्यावगच्छेत् । दृष्टा हि जीवतः पुनरावृत्तिः यथा सुयात्रोदयनाभ्याम् ।

इतो लाभ इतरतो राज्याभिमर्श इत्युभयतोऽर्थानर्थापद्भवति तस्यामनर्थसाधको योऽर्थः, तमादातुं यायात् अन्यथा हि राज्याभिमर्शं वारयेत् ।

एतया समन्ततः अर्थानर्थापद्व्याख्याता ।

इतोऽनर्थ इतरतोऽर्थसंशयः इत्युभयतोऽनर्थार्थसंशयः । तस्यां पूर्वमनर्थं साधयेम् । तत्सिद्धावर्थसंशयम् ।

एतया समन्ततोऽनर्थार्थसंशयो व्याख्यातः ।

इतोर्थ इतरतोऽनर्थसंशय इत्युभयतोनर्थार्थसंशयो भवति । एतया समन्ततोऽर्थानर्थसंशया व्याख्याताः ।

तस्यां पूर्वांपूर्वां प्रकृतीनामनर्थसंशयान्मोक्षयितुं यतेत । श्रेयो हि मित्रमनर्थसंशये तिष्ठन्न दण्डः दण्डो वा न कोश इति ।

समग्रमोक्षणाभावे प्रकृतीनामवयवान्मोक्षयितुं यतेत । तत्र पुरुषप्रकृतीनां च बहुलमनुरक्तं वा तीक्ष्णलुब्धवर्जं द्रव्यप्रकृतीनां सारं महोपकारं वा सन्धिनाऽऽसनेन द्वैधीभावेन वा लघूनि, विपर्ययैः गुरूणि ।

443·5 क्षयस्थानवृद्धीनां चोत्तरोत्तरं लिप्सेत । प्रातिलोम्येन वा क्षयादीनामायत्यां विशेषं पश्येत् ।

इति देशावस्थापनम् ।

एतेन यात्रामध्यान्तेष्वर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता।

निरन्तरयोगित्वाच्चार्थानर्थसंशयानां यात्रादावर्थः श्रेयानुपसंप्राप्तुं पार्ष्णिग्राहासारप्रतिघातक्षयव्ययप्रवासप्रत्यादेय[1]मूलरक्षणेषु च भवति । तथाऽनर्थस्संशयो वा स्वभूमिषु ह्यविषह्यो[2] भवति ।

एतेन यात्रामध्येऽनर्थसंशयाना[3]मुपसंप्राप्तिर्व्याख्याता ।

यात्रायात्रान्ते तु[4] कर्शनीयमुच्छेदनीयं वा कर्शयित्वोच्छिद्य वाऽर्थः श्रेयानुपसंप्राप्तुं नानर्थस्संशयो वा, पराबाधभयात् ।

सामवायिकानामपुरोगस्य तु यात्रामध्यान्तगोऽनर्थस्संशयो वा श्रेयानुपसंप्राप्तुमनिबन्ध[5]गामित्वात् ।

अर्थो धर्मः काम इत्यर्थत्रिवर्गः ।

तस्य पूर्वः पूर्वश्श्रेयानुपसंप्राप्तुम् ।

अनर्थोऽधर्मश्शोक इत्यनर्थत्रिवर्गः ।

तस्य पूर्वः पूर्वः श्रेयान् प्रतिकर्तुम् ।

अर्थोऽनर्थ इति, धर्मोऽधर्म इति, कामः शोक इति संशयत्रिवर्गः ।

तस्योत्तरपक्षसिद्धौ पूर्वपक्षश्श्रेयानुपसंप्राप्तुम् ।

इति कालावस्थापनम् ।

इत्यापदः । 435·4

[1] देयं. [2] स्वभूमिष्ठस्य विषह्यो. [3] मध्येऽर्थानर्थसंशयाना.
[4] यात्रान्ते तु. [5] मनुबन्ध.

435·5 तासां सिद्धिः—पुत्रभ्रातृबन्धुषु सामदानाभ्यां सिद्धिरनुरूपा, पौरजानपददण्डमुख्येषु दानभेदाभ्यां, सामन्ताटविकेषु भेददण्डाभ्याम् ।

एषाऽनुलोमा विपर्यये प्रतिलोमा ।

मित्रामित्रेषु व्यामिश्रा सिद्धिः परस्परसाधका ह्युपायाः

शत्रोः शङ्कितामात्येषु सान्त्वं प्रयुक्तं शेषप्रयोगं निवर्तयति दूष्यामात्येषु दानं ; सङ्घातेषु भेदः ; शक्तिमत्सु दण्ड इति ।

गुरुलाघवयोगाच्चापदां नियोगविकल्पसमुच्चया भवन्ति ।

"अनेनैवोपायेन नान्येन" इति नियोगः ।

"अनेन वाऽन्येन वा" इति विकल्पः ।

"अनेनान्येन च" इति समुच्चयः ।

तेषामेकयोगाश्चत्वारस्त्रियोगाश्च ; द्वियोगाष्षट् एकश्चतुर्योग इति पञ्चदशोपायाः । तावन्तः प्रतिलोमाः ।

तेषामेकेनोपायेन सिद्धिरेकसिद्धिः द्वाभ्यां द्विसिद्धिः त्रिभिस्त्रिसिद्धिः । चतुर्भिश्चतुस्सिद्धिरिति ।

धर्ममूलत्वात् कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धायार्थस्य सिद्धिस्सा सर्वार्थसिद्धिः ।

इति सिद्धयः ।

436·8 दैवादग्निरुदकं व्याधिः प्रमारो[1] विद्रवो दुर्भिक्षमासुरी सृष्टिः इत्यापदः ॥

[1] प्रमादो.

490·3 एवं विजिगीषुरमित्रभूमिं लब्ध्वा मध्यमं लिप्सेत । तत्सिद्धावुदासीनम् । एष प्रथमो मार्गः पृथिवीं जेतुम् ।

मध्यमोदासीनयोरभावे गुणातिशयेनारिप्रकृतीस्साधयेत् । तत उत्तराः प्रकृतीः । एष द्वितीयो मार्गः ।

मण्डलस्याभावे शत्रुणा मित्रं मित्रेण वा शत्रुमुभयतः संपीडनेन साधयेत् । एष तृतीयो मार्गः ।

अशक्यमेकं वा सामन्तं साधयेत्; तेन द्विगुणो द्वितीयं त्रिगुणस्तृतीयम् । एष चतुर्थो मार्गः पृथिवीं जेतुम् ।

जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत ।

उपजापापसर्पौ च वामनं पर्युपासनम् ।
अवमर्दश्च पञ्चैते दुर्गलम्भस्य हेतवः ॥

इति दुर्गलम्भोपाये पर्युपासनकर्म, अवमर्दश्च चतुर्थोऽध्यायः
आदितश्चतुश्चत्वारिंशच्छतः.

## १७६ प्रक. लब्धप्रशमनम्.

द्विविधं विजिगीषोः समुत्थानम्—अटव्यादिकमेकग्रामादिकं च

491·5 त्रिविधश्चास्य लम्भः—नवो, भूतपूर्वः, पित्र्य इति, नवमवाप्य लम्भं[1] परदोषान् स्वगुणैश्छादयेत् । गुणान् गुणद्वैगुण्येन स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिश्च प्रकृतिप्रियहितान्यनुवर्तेत । यथासंभाषितं च कृत्यपक्षमुपग्राहयेत् । भूयश्च कृतप्र-

[1] लाभं.

यासम् । अविश्वास्यो हि विसंवादकस्स्वेषां परेषां च भवति; 491·7
प्रकृतिविरुद्धाचारश्च । तस्मात्समानशीलवेषभाषाचारतामुपगच्छेत् । देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत । देश 492
ग्रामजातिसङ्घमुख्येषु चाभीक्ष्णं सत्रिणः परस्यापचारं दर्शयेयुः।
महाभाग्यं भक्तिं च तेषु स्वामिनः स्वामिसत्कारं च विद्यमानम्।
उचितैश्चैनान् भोगपरिहाररक्षावेक्षणैः भुञ्जीत सर्वत्राश्रम[1] पूजनं
च विद्यावाक्यधर्मशूरपुरुषाणां च भूमिद्रव्यदानपरिहारान् कारयेत् । सर्वबन्धनमोक्षणमनुग्रहं दीनानाथव्याधितानां च । चातुर्मास्येष्वर्धमासिकमघातं; पौर्णमासीषु च चातूरात्रिकं; राजदेशनक्षत्रेष्वैकरात्रिकं; योनिबालवधं पुंस्त्वोपघातं च प्रतिषेधयेत् । यच्च कोशदण्डोपघातिकमधर्मिष्ठं वा चरित्रं[2] मन्येत, तदपनीय धर्मव्यवहारं स्थापयेत् । चोरप्रकृतीनां म्लेच्छजातीनां
च स्थानविपर्यासमनेकस्थं कारयेत् । दुर्गराष्ट्रदण्डमुख्यानां च
परोपगृहीतानां च मन्त्रिपुरोहितादीनां परस्य प्रत्यन्तेष्वनेकस्थं
वासं कारयेत् । अपकारसमर्थाननुक्षीयतो वा भर्तृविनाशमुपांशुदण्डेन प्रशमयेत् । स्वदेशीयान्वा परेण वाऽवरुद्धानपवाहितस्थानेषु स्थापयेत् । यश्च तत्कुलीनः प्रत्यादेयमादातुं शक्तः
प्रत्यन्ताटवीस्थो वा प्रबाधितुमभिजातः, तस्मै विगुणां भूमिं
प्रयच्छेत्; गुणवत्याश्चतुर्भागं वा । कोशदण्डदानमवस्थाप्य
यदुपकुर्वाणः पौरजानपदान् कोपयेत्, कुपितैस्तैरेनं घातयेत् । 493·1
प्रकृतिभिरुपकृष्टमपनयेत् । औपघातिके वा देशे निवेशयेदिति ।

---

[1] सर्वदेवताश्रम. [2] चारित्रं.

493·2 भूतपूर्वे—येन दोषेणापवृत्तः, तं प्रकृतिदोषं छादयेत्। येन च गुणेनोपावृत्तः, तं तीव्रीकुर्यादिति।

पित्र्ये—पितृदोषांश्छादयेत्। गुणांश्च प्रकाशयेदिति।

चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत्॥

प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत्॥

इति दुर्गलम्भोपाये त्रयोदशेऽधिकरणे लब्धप्रशमनं पञ्चमोऽध्यायः। आदितः पञ्चचत्वारिंशच्छतः। एतावता कौटिलीयस्यार्थशास्त्रस्य दुर्गलम्भोपायस्त्रयोदशाधिकरणं समाप्तम्.

—•—

# १४ अधि. औपनिषदिकम्.

## १७७ प्रक. परघातप्रयोगः.

495·1 चातुर्वर्ण्यरक्षार्थमौपनिषदिकमधर्मिष्ठेषु प्रयुञ्जीत।

कालकूटादिः विषवर्गः श्रद्धेयदेशवेषशिल्पभाजनापदेशैः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मभिः म्लेच्छजातीयैरभिप्रेतैः स्त्रीभिः पुंभिश्च परशरीरोपभोगेष्वाधातव्यः[1]।

राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु गूढाश्शस्त्रनिधानं कुर्युः; सत्राजीविनश्च रात्रिचारिणोऽग्निजीविनश्चाग्निनिधानम्।

चित्रभेककौण्डिन्यककृकणपञ्चकुष्ठशतपदीचूर्णमुच्चिदिङ्गकं बलीशतकन्देध्मकृकलासचूर्णं गृहगौळिकान्धाहिकक्रकण्ठकपूतिकीट

गोमारिकाचूर्णं भल्लातकावल्गुकारमयुक्तं सद्यःप्राणहरमेतेषां वा धूमः । 495·9

कीटो वाऽन्यतमस्तप्तः कृष्णसर्पप्रियङ्गुभिः । 496·2

शोषयेदेष संयोगस्सद्यः प्राणहरो मतः ॥

धामार्गवयातुधानमूलं भल्लातकपुष्पचूर्णयुक्तमार्धमासिकः ।

व्याघातकमूलं भल्लातकपुष्पचूर्णयुक्तं कीटयोगो मासिकः ।

कलामात्रं पुरुषाणां द्विगुणं खराश्वानां चतुर्गुणं हस्त्युष्ट्राणाम् ।

शतकर्दमोच्चिदिङ्गकरवीरकटुतुम्बीमत्स्यधूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रवातानुवाते प्रणीतो यावच्चरति तावन्मारयति ।

पूतिकीटमत्स्यकटुतुम्बीशतकर्दमेध्मेन्द्रगोपचूर्णं पूतिकीटक्षुद्रारालाहेमविदारीचूर्णं वा बस्तशृङ्गखुरचूर्णयुक्तमन्धीकरो धूमः। पूतिकरञ्जपत्रहरितालमनःशिलागुञ्जारक्तकार्पासपललान्यास्फाटे[1]काचगोशकृद्रसपिष्टमन्धीकरो धूमः । सर्पनिर्मोकं गोश्वपुरीषमन्धाहिकशिरश्चान्धीकरो धूमः ।

पारावतप्लवकक्रव्यादानां हस्तिनरवराहाणां च मूत्रपुरीषं कासीसहिङ्गुयततुषकणतण्डुलाः कार्पासकुटजकोशातकीनां च बीजानिगोमूत्रिकाभाण्डीमूलं निम्बशिग्रुफण[2]र्जकाक्षीवपीलुकभाङ्गः सर्पशफरीचर्महस्तिनखशृङ्गचूर्णमित्येष धूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रणीतः प्रत्येकशो यावच्चरति ताव 492·1

[1] स्फोटि. [2] फणि.

497.2 न्मारयति । काळीकुष्ठनडशतावरीमूलं सर्पप्रचलाककृकणपञ्चकुष्ठचूर्णं वा धूमः पूर्वकल्केनार्द्रशुष्कपलालेन वा प्रणीतस्सङ्ग्रामावतरणावस्कन्दनकालेषु[1] कृतेनाञ्जनोदकाक्षिप्रतीकारैः प्रणीतस्सर्वप्राणिनां नेत्रघ्नः ।

शारिकाकपोतबकबलाकालण्डमर्क्काक्षीपीलुक[2]स्नुहिक्षीरापिष्टमंधीकरणमञ्जनमुदकदूषणं च ।

यवकशाल[3]मूलमदनफलजातीपत्रनरमूत्रयोगः प्लक्षविदारीमूलयुक्तो मूकोदुम्बरमदनकोद्रवक्काथयुक्तो हस्तिकर्णपलाशक्काथयुक्तो वा मदनयोगः । शृङ्गिगौमेवृक्ष[4]कण्टकारमयूरपदीयोगो गुञ्जालाङ्गलीविषमूलिकेङ्गुदीयोगः । करवीराक्षिपीलुकार्कमृगमारणीयोगो मदनकोद्रवक्काथयुक्तो हस्तिकर्णपलाशक्काथयुक्तो वा मदनयोगः समस्ता वा यवसेन्धनोदकदूषणाः ।

कृतषण्ड[5]कृकलासगृहगोलिकान्धाहिकधूमो नेत्रवधमुन्मादं च करोति ।

कृकलासगृहगोलि[6]कायोगः कुष्ठकरः ।

स एव चित्रभेकान्त्रमधुयुक्तः प्रमेहमापादयति । मनुष्यलोहितयुक्तः शोषम् ।

दूषीविषं मदनकोद्रवचूर्णमपजिह्विकायोगः ।

498.8 मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपीलकयोगो विषूचिकाकरः ।

1 स्कन्दनसंकुलेषु. 2 मर्काक्षिपीलक. 3 शालि. 4 गौनमवृक्ष. 5 कृतकण्ड. 6 गौलि.

पञ्चकुष्ठककौण्डिन्यकराजवृक्षमधुपुष्पमधुयोगो ज्वरकरः । 498·9

भाज[1]नकुलजिह्वाग्रन्थिकायोगः खरीक्षीरपिष्टो मूकबाधिरकरः।

मासार्धमासिकः कलामात्रं पुरुषाणामिति—समानं पूर्वेण ।

भङ्गकाथोपनयनमौषधानां चूर्णं प्राणभृतां सर्वेषां वा काथोपनयनमेवं वीर्यवत्तरं भवतीति योगसम्पत् ।

शाल्मलीविदारीधान्यसिद्धो मूलवत्सनाभसंयुक्तश्चुचुन्दरीशोणितप्रलेपेन सिद्धो बाणो यं विध्यति स विद्धोऽन्यान् दश पुरुषान् दशति; ते दष्टाश्चान्यान् दशन्ति पुरुषान् ।

भल्लातकयातुधानावानुधायामार्गव[2]बाणानां पुष्पैरेलकाक्षिगुग्गुलुहालाहलानां च कषायं बस्तनरशोणितयुक्तं दंशयोगः ।

ततोऽर्धधरणिको योगस्सक्तुपिण्याकाभ्यामुदक[3]प्रणीतो धनुश्शतायाममुदकाशयं दूषयति; मत्स्यपरम्परा ह्येतेन दष्टाऽभिमृष्टा वा विषीभवन्ति; यश्चैतदुदकं पिबति स्पृशति वा ।

रक्तश्वेतसर्षपैर्गोधात्री[4]पक्षमुष्टिकायां भूमौ निखातायां निहिता वधध्येनोद्धृता यावत्पश्यति, तावन्मारयति ।

कृष्णः सर्पो[5] वा विद्युत्प्रदग्धोद्गारोज्ज्वलो[6] वा विद्युत्प्रदग्धैः काष्ठैर्गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाऽभिहुतोऽ[7]ग्निः प्रणीतश्च निष्प्रतीकारो दहति ।

499·7

कर्मारादग्निमाहृत्य क्षौद्रेण जुहुयात्पृथक् ।

सुरया शौण्डिकादग्निं भागं योऽग्निं घृतेन च ॥

---

[1] भास [2] वानुधामार्ग [3] मुदके [4] धात्रि [5] कृष्णसर्पो [6] ज्ज्वाले [7] भिहुतो.

500·1 माल्येन चैकपत्न्याग्निं पुंश्चल्याग्निं च सर्षपैः ।
दध्ना च सूतिकास्वाग्निमाहिताग्निं च तण्डुलैः ॥
चण्डालाग्निं च मांसेन चिताग्निं मानुषेण च ।
समस्तान् बस्तवसया मानुषेण ध्रुवेण च ॥
जुहुयादाग्निमन्त्रेण राजवृक्षकदारुभिः ।
एष निष्प्रतिकारोऽग्निर्द्विषतां नेत्रमोहनः ॥

अदिते नमस्ते अनुमते नमस्ते सरस्वति नमस्ते सवितर्नम स्ते; अग्नये स्वाहा; सोमाय स्वाहा; भूस्स्वाहा; भुवस्स्वाहा ।

इत्यौपनिषदिके चतुर्दशेऽधिकरणे परघातप्रयोगः प्रथमोऽध्यायः आदितः षट्चत्वारिंशदुत्तरशतः

## १७८ प्रक. प्रलम्भने अद्भुतोत्पादनम्.

शिरीषोदुम्बरशमीचूर्णं सर्पिषा हृत्वा[1]र्धमासिकः क्षुद्योगः । कशेरुकोत्पलकन्देक्षुमूलबिसदूर्वाक्षीरघृतमण्डसिद्धो मासिकः ।

माषयवकुलुत्थदर्भमूलचूर्णं वा क्षीरघृताभ्यां; वल्लीक्षीरघृतं वा समसिद्धं सालपृश्नि[2]पर्णीमूलकल्कं पयसा पीत्वा; पयो वा तत्सिद्धं मधुघृताभ्यामशित्वा; मासमुपवसति ।

501·1 श्वेतबस्तमूत्रे सप्तरात्रोषितैः सिद्धार्थकैस्सिद्धं तैलं कटुकालाबौ मासार्धमासस्थितं चतुष्पदद्विपदानां विरूपकरणम् ।

[1] संहृत्या. [2] सालप्रश्नि.

तक्रयवभक्षस्य सप्तरात्रादूर्ध्वं श्वेतगर्दभस्य लण्डयवैस्सिद्धं गौरसर्षपतैलं विरूपकरणम् । 501·2

एतयोरन्यतरस्य मूत्रलण्डरससिद्धं सिद्धार्थतैलमर्कतूलपतङ्गपूर्ण[1]प्रतिवापं श्वेतीकरणम् ।

श्वेतकुक्कुटाजगरलण्डयोगः श्वेतीकरणम् । श्वेतबस्तमूत्रे श्वेतसर्षपाः सप्तरात्रोषितास्तक्रमर्कक्षीरलवणं धान्यं च पक्षस्थितो योगः श्वेतीकरणम् ।

कटुकालाबूवल्लीगते गतमर्धमासस्थितं गौरसर्षपपिष्टं रोम्णां श्वेतीकरणम् ।

अलाबुनेति यः कीटः[2] श्वेता च गृहगोळिका ।
एतेन पिष्टेनाभ्यक्ताः केशास्स्युः शङ्खपाण्डराः ॥

गोमयेन तिन्दुकारिष्टकल्केन वा मर्दिताङ्गस्य भल्लातकरसानुलिप्तस्य मासिकः कुष्ठयोगः ।

कृष्णसर्पमुखे गृहगौळिकामुखे वा सप्तरात्रोषिता गुञ्जाः कुष्ठयोगः ।

शुकपित्ताण्डरसाभ्यङ्गः कुष्ठयोगः ।

कुष्ठस्य प्रियाळकल्ककषायः प्रतीकारः ।

कुक्कुटकोशातकीशतावरीमूलयुक्तमाहारयमाणो मासेन गौरो भवति ।

वटकषायस्नातः सहचरकल्कदिग्धः कृष्णो भवति । 502·4

---

[1] चूर्ण.　　[2] अलोजुनेति यः कीटः.

502·5 शकुनकङ्कुतैलयुक्ता हरिताळमनश्शिलाः श्यामीकरणम्।

खद्योतचूर्णं सर्षपतैलयुक्तं रात्रौ ज्वलति। खद्योतगण्डूपदचूर्णं समुद्रजन्तूनां भृङ्गकपालानां खदिरकार्णिकाराणां पुष्पचूर्णं वा शकुनकङ्कुतैलयुक्तं तेजनचूर्णम्।

पारिभद्रकत्वङ्मषी मण्डूकवसया युक्ता गात्रप्रज्वालनमग्निना।

पारिभद्रकत्वक्तिलकल्कप्रदिग्धं शरीरमग्निना ज्वलति।

पीलुत्वङ्मषीमयः पिण्डो हस्ते ज्वलति।

मण्डूकवसादिग्धोऽग्निना ज्वलति।

तेन प्रदिग्धमङ्गं कुशाम्रफलतैलसिक्तं समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा ज्वलति।

मण्डूकवसाकुळीरादीनां वसया समभागं तैलं सिद्धमभ्यङ्गो गात्राणामग्निप्रज्वालनम्।

मण्डूकवसादिग्धोऽग्निना ज्वलति।

वेणुमूलशैवललिप्तमङ्गं मण्डूकवसादिग्धमग्निना ज्वलति।

पारिभद्रकप्रतिबलावञ्जुलवज्रकदळीमूलकल्केन मण्डूकवसादिग्धेन[1] तैलेनाभ्यक्तपादोऽङ्गारेषु गच्छति।

उपोदका प्रतिबला वञ्जुलः पारिभद्रकः।
एतेषां मूलकल्केन मण्डूकवसया सह॥
503·7 साधयेत्तैलमेतेन पादावभ्यज्य निर्मलौ।
अङ्गारराशौ विचरेद्यथा कुसुमसञ्चये॥

[1] वसासिद्धेन.

हंसक्रौञ्चमयूराणां अन्येषां वा महाशकुनीनां उदकप्लवानां 503.8
पुच्छेषु बद्धा नळदीपिका रात्रावुल्कादर्शनम् ।

वैद्युतं भस्माग्निशमनम् ।

स्त्रीपुष्पपायिता माषा व्रजकुलीमूलमण्डूकवसामिश्रं चुल्यां दीप्तायामपाचनम् ।

चुल्लीशोधनं प्रतीकारः ।

पीलुमयो मणिरग्निगर्भः सुवर्चलामूलग्रन्थिः सूत्रग्रन्थिर्वा विचु[1] परिवेष्टितो मुखादग्निधूमोत्सर्गः ।

कुशाम्रफलतैलासिक्तोऽग्निर्वर्षप्रवातेषु ज्वलति ।

समुद्रफेनकस्तैलयुक्तोऽम्भसि प्लवमानो ज्वलति ।

प्लव(ङ्ग)मानामस्थिषु कल्माषवेणुना निर्मथितोऽग्निर्नोदकेन शाम्यत्युदकेन ज्वलति ।

शस्त्रहतस्य शूलप्रोतस्य वा पुरुषस्य वामपार्श्वपशु[2]कास्थिषु कल्माषवेणुना निर्मथितोऽग्निः स्त्रियाः पुरुषस्य वाऽस्थिषु मनुष्यपशु[2]कया निर्मथितोऽग्निर्यत्र त्रिरपसव्यं गच्छति, न चात्रान्योऽग्निर्ज्वलति ।

चुचुंदरी खञ्जरीटः खारकीटश्च पिष्यते ।
अश्वमूत्रेण संसृष्टा निगळानां तु भञ्जनम् ॥

अयस्कान्तो वा पाषाणः कुलिन्द[3]दर्दुरखारकीटवसाप्रदेहेन 504.7
द्विगुणो नारकगर्भः कङ्कभासपार्श्वोत्पलोदकपिष्टश्चतुष्पदद्विपदा-

---

1 पिचु. 2 पर्शु. 3 कुलिण्ड.

505·1 नां पादलेपः उलूकगृध्रवसाभ्यामुष्ट्रचर्मोपनहावभ्यज्य वटपत्रैः प्रतिच्छाद्य पञ्चाशद्योजनान्यश्रान्तो गच्छति। श्येनकङ्ककाकगृध्रहंसक्रौञ्चविचि[1]रल्लानां मज्जानो रेतांसि वा योजनशताय । सिंहव्याघ्रद्वीपिकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि गर्भपातनान्युष्ट्रिकायामभिषूय[2] श्मशाने प्रेतशिशून्वा तत्समुत्थि[3]तमेदो योजनशताय ।

अनिष्टैरद्भुतोत्पातैः परस्योद्वेगमाचरेत् ।

आराज्यायेति निर्वादः समानः कोप उच्यते ॥

इत्यौपनिषदिके चतुर्दशेऽधिकरणे प्रलम्भने अद्भुतोत्पादनं द्वितीयोऽध्यायः । आदितस्सप्तचत्वारिंशदुत्तरशतः

---

## १७८ प्रक. प्रलम्भने भैषज्यमन्त्रयोगः.

मार्जारोष्ट्रवृकवराहश्वाविद्वागुलीनप्तृकाकोलूकानां अन्येषां वा निशाचराणां सत्वानामेकस्य द्वयोर्बहूनां वा दक्षिणानि वामानि वाऽक्षीणि गृहीत्वा द्विधा चूर्णं कारयेत् । ततो दक्षिणं वामेन वामं दक्षिणेन समभ्यज्य रात्रौ तमसि च पश्यति ।

एकाम्लकं वराहाक्षि खद्योतः कालशारिबा[4] ।

एतेनाभ्यक्तनयनो रात्रौ रूपाणि पश्यति ॥

505·6 त्रिरात्रोपोषितः पुष्ये शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां यवानां बस्ताविक्षीरेण सेचयेत्; ततो यवविरूढमालामाबद्ध्य नष्टच्छायारूपश्चरति ।

---

[1] वीची. [2] सिंहव्याघ्रद्वीपकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि

त्रिरात्रोपोषितः पुष्येण श्वमार्जारोलूकवागुलीनां दक्षिणानि वामानि चाक्षीणि द्विधा चूर्णं कारयेत्। ततो यथास्वमभ्यक्ताक्षो नष्टच्छायारूपश्चरति। 505.7

त्रिरात्रोपोषितः पुष्येण पुरुषघातिनः काण्डकस्य शलाकां[1] च कारयेत्। ततो[2] निशाचराणां सत्त्वानां अन्यतमस्य शिरःकपालमञ्जनेन पूरयित्वा मृतायास्स्त्रिया योनौ प्रवेश्य दाहयेत्; तदञ्जनं पुष्येणोद्धृत्य तस्यामञ्जन्यां निदध्यात्। तेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति।

यत्र ब्राह्मणमाहिताग्निं दग्धं दह्यमानं वा पश्येत्, तत्र त्रिरात्रोपोषितः पुष्येण स्वयंमृतस्य वाससा प्रसेवं कृत्वा चिताभस्मना पूरयित्वा तमाबध्य नष्टच्छायारूपश्चरति।

ब्राह्मणस्य प्रेतकार्ये यो गौः मार्यते, तस्य अस्थिमज्जाचूर्णपूर्णाहिभस्त्रा पशूनामन्तर्धानम्।

सर्पदष्टस्य भस्मना पूर्णा प्रचलाकभस्त्रा मृगाणामन्तर्धानम्।

उलूकवागुलीपुच्छपुरीषजान्वस्थिचूर्णपूर्णाहिभस्त्रा पक्षिणामन्तर्धानम्।

इत्यष्टावन्तर्धानयोगाः।

बलिं वैरोचनं वन्दे शतमायं च शम्बरम्। 506.8
भण्डीरपाकं नरकं निकुम्भं कुम्भमेव च॥
देवलं नारदं वन्दे वन्दे सावर्णिगालवम्।

---

[1] काण्वकस्य शलाकामञ्जनीं.  [2] ततोऽन्यतमनाक्षचूर्णेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति। त्रिरात्रोपोषितः पुष्येण कालायसीमञ्जनीं शलाकां च कारयेत्। ततो. 27*

506·9 एतेषामनुयोगेन कृतं ते स्वापनं महत् ॥

यथा स्वपन्त्यजगरास्स्वपन्त्यपि चमूखलाः ।

तथा स्वपन्तु पुरुषा ये च ग्रामे कुतूहलाः ॥

भण्डकानां सहस्रेण रथनेमिशतेन च ।

इमं गृहं प्रवेक्ष्यामि तूष्णीमासन्तु भाण्डकाः ॥

नमस्कृत्वा च मनवे बध्वा शुनकफेलकाः ।

ये देवा देवलोकेषु मानुषेषु च ब्राह्मणाः ॥

अध्ययनपारगास्सिद्धाः ये च कैलासतापसाः ।

एतेभ्यस्सर्वसिद्धेभ्यः कृतं ते स्वापनं महत् ॥

अतिगच्छति चमर्यपगच्छन्तु संहताः ।

अलिते पलिते मनवे स्वाहा ॥

एतस्य प्रयोगः—त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्यां श्वपाकीहस्ताद्विलिखावलेखनं क्रीणीयात् । तन्माषैस्सह कण्डोलिकायां कृत्वा असङ्कीर्ण आदहने निखानयेत् । द्वितीयस्यां चतुर्दश्यामुद्धृत्य कुमार्या पेषयित्वा गुळिकाः कारयेत् । तत एकां गुळिकामभिमन्त्रयित्वा यत्रैतेन मन्त्रेण क्षिपति, तत्सर्वं प्रस्वापयति । एतेनैव कल्पेन श्वाविधः शल्यकं त्रिकालं त्रिश्वेतमसङ्कीर्णे आदहने निखानयेत् । द्वितीयस्यां 507·7 चतुर्दश्यां उद्धृत्य दहनभस्मना सह यत्रैतेन मन्त्रेण क्षिपति, तत्सर्वं प्रस्वापयति ।

सुवर्णपुष्पीं ब्रह्माणीं ब्रह्माणं च कुशध्वजम् । 507·8

सर्वाश्च देवता वन्दे वन्दे सर्वांश्च तापसान् ॥

वशं मे ब्राह्मणा यान्तु भूमिपालाश्च क्षत्रियाः ।

वशं वैश्याश्च शूद्राश्च वशतां यान्तु मे सदा ॥

स्वाहा अमिले किमिले वयुजारे प्रयोगे फके कवयुश्वे विहाले दन्तकटके स्वाहा ।

सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ।

श्वाविधः शल्यकं चैतत्त्रिश्वेतं ब्रह्मनिर्मितम् ॥

प्रसुप्तास्सर्वसिद्धा हि एतत्ते स्वापनं कृतम् ।

यावद्ग्रामस्य सीमन्तः[1] सूर्यस्योद्गमनादिति ॥

स्वाहा ।

एतस्य प्रयोगः—श्वाविधः शल्यकानि त्रिश्वेतानि सप्तरात्रोषितः कृष्णचतुर्दश्यां खादिराभिस्सामिधाभि[2]रग्निमेतेन मन्त्रेणाष्टशतसंपातं कृत्वा मधुघृताभ्यां अभिजुहुयात् । तत एकमेतेन मन्त्रेण ग्रामद्वारि गृहद्वारि वा यत्र निखन्यते, तत्सर्वं प्रस्वापयति।

बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।

निकुम्भं नरकं कुम्भं तन्तुकच्छं महासुरम् ॥

अर्मालवं प्रमीलं च मण्डोलूकं घटोद्बलम् ।

कृष्णकंसोपचारं च पौलोमीं च यशस्विनीम् ॥ 508·7

अभिमन्त्र्य गृह्णामि सिद्धार्थं शवसारिकाम्[3] ।

---

[1] सीमान्तः. [2] स्सभिद्धाभि. [3] शारिकाम्.

508·8 जयन्तु जयति च नमः शलकभूतेभ्यः स्वाहा ।

सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहला ॥

सुखं स्वपन्तु सिद्धार्था यमर्थं मार्गयामहे ।

यावदस्तमयादुदयो यावदर्थं फलं मम ॥

इति स्वाहा ।

एतस्य प्रयोगः—चतुर्भक्तोपवासी कृष्णचतुर्दश्यामसङ्कीर्ण आदहने बलिं कृत्वा मन्त्रेण श्वशारिकां गृहीत्वा पौत्री-पौट्टालिकां[1] बध्नीयात् । तन्मध्ये श्वाविधः शल्यकेन विध्वा यत्रै-तेन मन्त्रेण निखन्यते, तत्सर्वं प्रस्वापयति ।

उपैमि शरणं चाग्निं दैवतानि दिशो दश ।

अपयान्तु च सर्वाणि वशतां यान्तु मे सदा ॥

स्वाहा ।

एतस्य प्रयोगः—त्रिरात्रोपोषितः पुष्येण शर्करा एकविंश-तिसंपातं कृत्वा मधुघृताभ्यां अभिजुहुयात् । ततो गन्धमाल्येन पूजयित्वा निखानयेत् । द्वितीयेन पुष्येणोद्धृत्यैकां शर्करामभि-मन्त्रय्य कवाटमाहन्यात् । अभ्यन्तरं चतसृणां शर्कराणां द्वार-मपाव्रियते ।

509·5 चतुर्भक्तोपवासी कृष्णचतुर्दश्यां पुरुषस्या[2]स्थ्ना ऋषभं का-रयेत् । अभिमन्त्रयेच्च । एतेन द्विगोयुक्तं गोयानमाहृतं भवति । ततः परमाकाशे विक्रामति; रविसन्धपारिख्याति[3] सर्वं भणाति

[1] पाट्टालिकं. [2] भग्नस्य पुरुषस्या. [3] गविरविः सगन्धपरिघाति.

चण्डालीकुम्बीतुम्भकटुकसाराघः सनीरभिगोऽसि स्वाहा ; 509·6
तालोद्धटनं प्रस्वापनं च ।

त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां वल्लरीर्वास्योदकेन सेचयेत् । जातानां पुष्येणैव गृहीत्वा रज्जुकां वर्तयेत् । ततस्सज्यानां धनुषां यन्त्राणां च पुरस्ताच्छेदनं ज्याच्छेदनं करोति । उदकाहिभस्त्रामुच्छ्वासमृत्तिकया स्त्रियाः पुरुषस्य वा पूरयेत्; नासिकाबन्धनम् ।
मुखग्रहश्च ।

वराहहस्तिभस्त्रामुच्छ्वासमृत्तिकया पूरयित्वा मर्कटस्नायुना बध्नीयात् ; अनाहकारणम् ।

कृष्णचतुर्दश्यां शस्त्रहताया गोः कपिलायाः पित्तेन राजवृक्षमयीममित्रप्रतिमां मज्जयात् । अन्धीकरणम् ।

चतुर्भक्तोपवासी कृष्णचतुर्दश्यां बलिं कृत्वा शूलप्रोतस्य पुरुषस्यास्थ्ना कीलकान् कारयेत् । एतेषामेकः पुरीषे मूत्रे वा निखात आनाहं करोति । पादेऽस्यासने वा निखातः शोषेण मारयति । आपणे क्षेत्रे गृहे वा वृत्तिच्छेदं करोति ।

एतेन लेपकल्केन विद्युद्दग्धस्य[1] वृक्षस्य कीलका व्याख्याताः।

पुनर्नवमवाचीनं निम्बः काममधुश्च यः ।
कपिरोममनुष्यास्थि बध्वा मृतकवाससा ॥
निखन्यते गृहे यस्य दृष्ट्वा वा यं पदा[2] नयेत् । 510·8
सपुत्रदारस्सधनस्त्रीन्पक्षान्नातिवर्तते ॥

---

[1] द्रग्धस्य. [2] पदं.

510·9 पुनर्नवमवाचीनं निम्बः काममधुश्च यः ।
स्वयं गुप्तामनुष्यास्थि पदे यस्य निखन्यते ॥
पारे गृहस्य सेनाया ग्रामस्य नगरस्य वा ।
सपुत्रदारस्सधनः त्रीन् पक्षान्नातिवर्तते ॥
अजमर्कटरोमाणि मार्जारनकुलस्य च ।
ब्राह्मणानां श्वपाकानां काकोलूकस्य चाहरेत् ॥
एतेन विष्ठा[1]ऽवक्षुण्णा सद्य उत्सादकारिका ।
प्रेतनिर्मालिकाकिण्वं रोमाणि नकुलस्य च ।
वृश्चिकाल्याहिकृत्तिश्च पदे यस्य निखन्यते ।
भवत्यपुरुषस्सद्यो यावत्तन्नापनीयते ॥

त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां गुञ्जा आवास्योदकेन च सेचयेत् । जातानाममावास्यायां पौर्णमास्यां वा पुष्ययोगिन्यां गुञ्जावल्लीर्ग्राहयित्वा मण्डलिकानि कारयेत् । तेष्वन्नपानभाजनानि न्यस्तानि न क्षीयन्ते ।

रात्रिप्रेक्षायां प्रवृत्तायां प्रदीपाग्निषु मृतधेनोस्स्तनानुत्कृत्य दाहयेत् । दग्धान् वृषमूत्रेण पेषयित्वा नवकुम्भमन्तर्लेपयेत् ; यं ग्राममपसव्यं परिणीय यत्तत्र न्यस्तं नवनीतमेषां तत्सर्वमागच्छतीति ।

511·7 कृष्णचतुर्दश्यां पुष्ययोगिन्यां शुनो लग्नकस्य योनौ कटला[2]-

[1] विष्ठा, [2] काला.

यसीं मुद्रिकां प्रेषयेत्; तां स्वयं पातितां गृह्णीयात्; तया 511·7
वृक्षफलान्याकारितान्यागच्छन्ति ।

मन्त्रभैषज्यसंयुक्ता योगमायाकृताश्च ये ।
उपहन्यादमित्रांस्तैस्स्वजनं चाभिपालयेत् ॥

इत्यौपानिषदिके चतुर्दशेऽधिकरणे प्रलम्भने भैषज्यमन्त्रयोगः
तृतीयोऽध्यायः आदितोऽष्टचत्वारिंशच्छतः.

## १७९ प्रक. स्वबलोपघातप्रतीकारः.

स्वपक्षे परप्रयुक्तानां दूषिविषगराणां प्रतीकारे[1]—श्लेष्मा- 512·3
तककपित्थदन्तिदन्तशठगोजिगीविष[2]पाटलीबलास्योनागपुनर्न-
वाश्वेतावरणक्वाथयुक्तं चन्दनसालावृकीलोहितयुक्तं तेजनोदकं;
राजोपभोग्यानां गुह्यप्रक्षालनं; स्त्रीणां सेनायाश्च विषप्रतीकारः।

पृषतनकुलनीलकण्ठगोधापित्तयुक्तमषीराजिपूर्णं[3] सिन्धु[4]वा-
रितवरणवारुणीतण्डुलीयकशतपर्वाग्रपिण्डीतकयोगो मदनदोष-
हरः ।

सृगालविन्नामदनसिन्दुवारितवरण[5]वल्लीमूलकषायाणाम-
न्यतमस्य समस्तानां वा क्षीरयुक्तं पानं मदनदोषहरम् ।

कैडर्यपूतितैल[6]मुन्मादहरम् ।

नस्तःकर्म—प्रियङ्गुनक्तमालयोगः कुष्ठहरः ।

कुष्ठलोध्रयोगः पाकशोषघ्नः ।

कटफलद्रवन्ति[7] विळङ्गपूर्णं नस्तःकर्म शिरोरोगहरः । 513·5

---

[1] कारः. [2] गोजाशरीष. [3] महीराजचूर्ण. [4] सिन्दु.
[5] वरण. [6] पूतितिलतैल. [7] द्रवन्ती.

513·6 प्रियङ्गुमञ्जिष्ठतगरलाक्षारसमधुकहरिद्राक्षौद्रयोगो रज्जूदकविषप्रहारपतननिस्संज्ञानां पुनः प्रत्यानयनाय । मनुष्याणामक्षमात्रं; गवाश्वानां द्विगुणं; चतुर्गुणं हस्त्युष्ट्राणां;

रुक्मगर्भश्चैषां मणिस्सर्वविषहरः ।

जीवन्तीश्वेतामुष्ककपुष्पवन्दाकानामक्षिपे जातस्य अश्वत्थस्य मणिः सर्वविषहरः ।

तूर्याणां तैः प्रलिप्तानां शब्दो विषविनाशनः ।
लिप्तध्वजं पातकं वा दृष्ट्वा भवति निर्विषः ॥
एतैः कृत्वा प्रतीकारं स्वसैन्यानामथात्मनः ।
514·1 अमित्रेषु प्रयुञ्जीत विषधूमाम्बुदूषणान् ॥

इत्यौपनिषदिके चतुर्दशेऽधिकरणे स्वबलोपघातप्रतीकारः चतुर्थोऽध्यायः । आदित एकोनपञ्चाशच्छतः । एतावता कौटिलीयस्यार्थशास्त्रस्यौपनिषदिकं चतुर्दशमधिकरणं समाप्तम्.

## १५ अधि. तन्त्रयुक्तिः.

## १८० प्रक. तन्त्रयुक्तयः.

515·1 मनुष्याणां वृत्तिरर्थः; मनुष्यवती भूमिरित्यर्थः; तस्याः पृथिव्या लाभपालनोपायः शास्त्रमर्थशास्त्रमिति ।

तत् द्वात्रिंशद्युक्तियुक्तं—अधिकरणं, विधानं, योगः, पदार्थः, हेत्वर्थः, उद्देशः, निर्देशः, उपदेशः, अपदेशः, अतिदेशः,

प्रदेशः, उपमानं, अर्थापत्तिः, संशयः, प्रसङ्गः, विपर्ययः, वा- 515·2
क्यशेषः, अनुमतं, व्याख्यानं, निर्वचनं, निदर्शनं, अपवर्गः,
स्वसंज्ञा, पूर्वपक्षः, उत्तरपक्षः, एकान्तः, अनागतावेक्षणं, अति-
क्रान्तावेक्षणं, नियोगः, विकल्पः, समुच्चयः, ऊह्यमिति ।

यमर्थमधिकृत्योच्यते तदधिकरणम्—"पृथिव्या लाभे पाल-
ने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि
संहृत्यैकमिदमर्थशास्त्रं कृतम्" इति[1] ।

शास्त्रस्य प्रकरणानुपूर्वी विधानम्—"विद्यासमुद्देशः, वृद्धसं-
योगः, इन्द्रियजयः, अमात्योत्पत्तिः"[2] इति ।

एवमादिकमिति वाक्ययोजना योगः—"चतुर्वर्णाश्रमो
लोकः"[3] इति ।

पदावधिकः पदार्थः—"मूलहरः" इति पदम् । "यः
पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः"[4] इत्यर्थः ।

हेतुरर्थसाधको हेत्वर्थः—"अर्थमूलौ हि धर्मकामौ"[5] इति ।

समासवाक्यमुद्देशः—"विद्याविनयहेतुरिन्द्रियजयः"[6] इति ।

व्यासवाक्यं निर्देशः—"कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां
शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः"[7] इति । 516·7

---

1 अधिकरणं I, अध्यायः 1
2 अधिकरणं I, अध्यायः 1
3 अधि. I, अध्या. 4
4 अधि. II, अध्या 9
5 अधि. I, अध्या. 7
6 अधि. I, अध्या 6
7 ,, ,,

516·8 एवं वर्तितव्यमित्युपदेशः—"धर्मार्थाविरोधेन कामं सेवेत न निस्सुखस्स्यात्"[1] इति ।

एवमसावाहेत्यपदेशः-"मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः; षोडशेति बार्हस्पत्याः; विंशतिमित्यौशनसाः; यथासामर्थ्यमिति कौटिल्यः"[2] इति ।

उक्तेन साधनमतिदेशः—"दत्तस्याप्रदानमृणादानेन व्याख्यातम्"[3] इति ।

वक्तव्येन साधनं प्रदेशः-"सामदानभेददण्डैर्वा यथापत्सु व्याख्यास्यामः"[4] इति ।

दृष्टेनादृष्टस्य साधनमुपमानम्-"निवृत्तपरिहारान् पितेवानुगृह्णीयात्"[5] इति ।

यदनुक्तमर्थादापद्यते साऽर्थापत्तिः-"लोकयात्राविद्राजानमात्मप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत नाप्रियहितद्वारेणाश्रयेतेत्यर्थादापन्नं भवति"[6] इति ।

517·7 उभयतोहेतुमानर्थस्संशयः—"क्षीणलुब्धप्रकृतिमपचरितप्रकृतिं वा"[7] इति ।

---

[1] अधि. I, अध्या. 7
[2] अधि. I, अध्या. 15
[3] अधि. III, अध्या. 16
[4] अधि. VII, अध्या. 14
[5] अधि. I, अध्या. 1
[6] अधि. V, अध्या. 4
[7] अधि. VII, अध्या. 5

प्रकरणान्तरेण समानोऽर्थः प्रसङ्गः—"कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण"[1] इति। 517·7

प्रतिलोमेन साधनं विपर्ययः—"विपरीतमतुष्टस्य"[2] इति।

येन वाक्यं समाप्यते, स वाक्यशेषः—"छिन्नपक्षस्येव राज्ञश्चेष्टानाशश्चेति"[3] तत्र शकुनेरिति वाक्यशेषः।

परवाक्यमप्रतिषिद्धमनुमतम्—"पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभागः"[4] इति।

अतिशयवर्णना व्याख्यानम्—"विशेषतश्च सङ्घानां सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः तन्निमित्तो विनाश इत्यसत्प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यात्"[5] इति।

गुणतः शब्दनिष्पत्तिर्निर्वचनम्—"व्यस्यत्येनं श्रेयस इति व्यसनम्"[6] इति।

दृष्टान्तो दृष्टान्तयुक्तो निदर्शनम्—"विगृहीतो हि ज्यायसा हस्तिनः पादयुद्धमिवाभ्युपैति"[7] इति।

अभिप्लुतव्यपकर्षणमपवर्गः—"नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्कायाः"[8] इति। 518·8

---

1 अधि. I, अध्या. 11
2 अधि. I, अध्या. 16
3 अधि. VIII, अध्या. 1
4 अधि. X, अध्या, 6 ?
5 अधि. VIII, अध्या. 3
6 अधि. VIII, अध्या. 1
7 अधि. VII, अध्या. 3
8 अधि. IX, अध्या. 2

.519'1 परैरसमित† शब्दः स्वसंज्ञा—"प्रथमा प्रकृतिस्तस्य भूम्यनन्तरा द्वितीया, भूम्येकान्तरा तृतीया "[1] इति ।

प्रतिषेद्धव्यं वाक्यं पूर्वपक्षः—"स्वाम्यमात्यव्यसनयोरमात्यव्यसनं गरीयः "[2] इति ।

तस्य निर्णयनवाक्यमुत्तरपक्षः—"[3] तदायत्तत्वात् ; कूटस्थानीयो हि स्वामी "[3] इति ।

सर्वत्रायत्तमेकान्तः—"तस्मादुत्थानमात्मनः कुर्वीत "[4] इति ।

पश्चादेवं विहितमित्यनागतावेक्षणम्—"तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः "[5] इति ।

पुरस्तादेवं विहितमित्यतिक्रान्तावेक्षणम्—"अमात्यसम्पदुक्ता पुरस्तात् "[6] इति ।

एवं नान्यथेति नियोगः—"तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च "[7] इति ।

19'8 अनेन वाऽनेन वेति विकल्पः—'दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः "[8] इति ।

---

† परैरनुमित.

[1] अधि. VI, अध्या. 2 ?
[2] अधि. VIII, अध्या. 1
[3] अधि. VIII, अध्या. 1
[4] अधि I, अध्या. 19
[5] अधि. II, अध्या. 10
[6] अधि, VI, अध्या. 1
[7] अधि I, अध्या. 17
[8] अधि. III, अध्या. 4

अनेन चानेन चेति समुच्चयः—"स्वसञ्जातः पितृबन्धूनां च दायादः"[1] इति । 519·9

अनुक्तकरणमूह्यम्—"यथावद्दाता प्रतिगृहीता च नोपहतौ स्यातां तथाऽनुशयं कुशलाः कल्पयेयुः"[2] इति ।

एवं शास्त्रमिदं युक्तं एताभिस्तन्त्रयुक्तिभिः ।
अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च ॥
धर्ममर्थं च कामं च प्रवर्तयति पाति च ।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च ॥
येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥

इति तन्त्रयुक्तौ पञ्चदशेऽधिकरणे तन्त्रयुक्तयः प्रथमोऽध्यायः ।
आदितः पञ्चाशच्छततमोऽध्यायः । एतावता
कौटिलीयस्यार्थशास्त्रस्य तन्त्रयुक्तिः
पञ्चदशमधिकरणं समाप्तम् .



दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् । 520·6
स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च ॥



[1] अधि. III, अध्या. 7.
[2] अधि. III, अध्या. 16.

श्री

# चाणक्यसूत्राणि.

1 सुखस्य मूलं धर्मः ।

2 धर्मस्य मूलमर्थः ।

3 अर्थस्य मूलं राज्यम् ।

4 राज्यमूलमिन्द्रियजयः[1] ।

5 इन्द्रियजयस्य मूलं विनयः[1] ।

6 विनयस्य मूलं वृद्धोपसेवा[2] ।

7 वृद्धसेवाया विज्ञानम् ।

8 विज्ञानेनात्मानं संपादयेत् ।

9 संपादितात्मा जितात्मा भवति ।

10 जितात्मा सर्वार्थैस्संयुज्येत ।

11 अर्थसंपत्प्रकृतिसंपदं करोति ।

12 प्रकृतिसंपदा ह्यनायकमपि राज्यं नीयते ।

13 प्रकृतिकोपस्सर्वकोपेभ्यो गरीयान् ।

14 अविनीतस्वामिलाभादस्वामिलाभः श्रेयान् ।

15 संपाद्यात्मानमन्विच्छेत्सहायवान् ।

16 नासहायस्य मन्त्रनिश्चयः ।

17 नैकं चक्रं परिभ्रमयति[3] ।

18 सहायस्समसुखदुःखः ।

19 मानी प्रतिमानिनमात्मनि द्वितीयं मन्त्रमुत्पादयेत् ।

---

[1] अर्थशास्त्रम् I–3. [2] अर्थशास्त्रम् I–4. [3] अर्थशा I–7. चक्रमेकं न वर्तते.

20 अविनीतं स्नेहमात्रेण न मन्त्रे कुर्वीत ।
21 श्रुतवन्तमुपधाशुद्धं मान्त्रिणं कुर्वीत [1] ।
22 मन्त्रमूलास्सर्वारम्भाः [2] ।
23 मन्त्ररक्षणे कार्यसिद्धिर्भवति ।
24 मन्त्रविस्रावी कार्यं [3] नाशयति ।
25 प्रमादात् द्विषतां वशमुपयास्यति ।
26 सर्वद्वारेभ्यो मन्त्रो रक्षितव्यः ।
27 मन्त्रसंपदा राज्यं वर्धते ।
28 श्रेष्ठतमां मान्त्रगुप्तिमाहुः ।
29 कार्यान्धस्य प्रदीपो मन्त्रः ।
30 मन्त्रचक्षुषा परच्छिद्राण्यवलोकयन्ति ।
31 मन्त्रकाले न मत्सरः कर्तव्यः ।
32 त्रयाणामेकवाक्ये संप्रत्ययः ।
33 कार्याकार्यतत्त्वार्थदर्शिनो मन्त्रिणः ।
34 षट्कर्णाद्भिद्यते मन्त्रः ।
35 आपत्सु स्नेहसंयुक्तं मित्रम् ।
36 मित्रसंग्रहेण बलं संपद्यते ।
37 बलवानलब्धलाभे प्रयतते ।
38 अलब्धलाभो नालसस्य ।
39 अलसस्य लब्धमपि रक्षितुं न शक्यते ।
40 स चालसस्य रक्षितं विवर्धते ।
41 न भृत्यान् प्रेषयति ।
42 अलब्धलाभादिचतुष्टयं राज्यतन्त्रम् ।

---

[1] I. 10 सर्वोपधाशुद्धान् मन्त्रिणः कुर्वीत. [2] I. 15 मन्त्रपूर्वास्सर्वारम्भाः.
[3] सर्वं.

43 राज्यतन्त्रायत्तं नीतिशास्त्रम् ।

44 राज्यतन्त्रेष्वायत्तौ तन्त्रावापौ ।

45 तन्त्रं स्वविषयकृत्येष्वायत्तम् ।

46 आवापो मण्डलनिविष्टः ।

47 सन्धिविग्रहयोनिर्मण्डलः ।

48 नीतिशास्त्रानुगो राजा ।

49 अनन्तरप्रकृतिश्शत्रुः ।

50 एकान्तरितं मित्रमिष्यते ।

51 हेतुतश्शत्रुमित्रे भविष्यतः ।

52 हीयमानस्सन्धिं कुर्वीत[1] ।

53 तेजो हि सन्धानहेतुस्तदर्थानाम्[2] ।

54 नातप्तलोहो लोहेन संधीयते[3] ।

55 बलवान् हीनेन विगृह्णीयात्[4] ।

56 न ज्यायसा समेन वा[4] ।

57 गजपादयुद्धमिव बलवद्विग्रहः[4] ।

58 आमपात्रमामेन सह विनश्यति[4] ।

59 अरिप्रयत्नमभिसमीक्षेत ।

60 संधायैकतो वा ।

61 अमित्रविरोधादात्मरक्षामावसेत् ।

62 शक्तिहीनो बलवन्तमाश्रयेत्[5] ।

63 दुर्बलाश्रयो दुःखमावहति ।

64 अग्निवद्राजानमाश्रयेत्[6] ।

---

[1] VII. 1 हीयमानस्संदधीत. [2] VII. 3 तेजो हि संधानकारणम्.
[3] VII. 3 नातप्तं लोहं लोहेन सन्धत्ते. [4] VII. 3 हीनेन विगृह्णीयात्.
[5] VII, 15. [6] V. 4.

65 राज्ञः प्रतिकूलं नाचरेत्[1]।

66 उद्धतवेषधरो न भवेत्।

67 न देवचरितं चरेत्।

68 द्वयोरपीर्ष्यतोः द्वैधीभावं कुर्वीत।

69 न व्यसनपरस्य कार्यावाप्तिः।

70 इन्द्रियवशवर्ती चतुरङ्गवानपि विनश्यति[2]।

71 नास्ति कार्यं द्यूतप्रवृत्तस्य।

72 मृगयापरस्य धर्मार्थौ विनश्यतः।

73 अर्थेषणा न व्यसनेषु गण्यते।

74 न कामासक्तस्य कार्यानुष्ठानम्।

75 अग्निदाहादपि विशिष्टं वाक्पारुष्यम्।

76 दण्डपारुष्यात्सर्वजनद्वेष्यो भवति।

77 अर्थतोषिणं श्रीः परित्यजति।

78 अमित्रो दण्डनीत्यामायत्तः।

79 दण्डनीतिमधितिष्ठन् प्रजास्संरक्षति।

80 दण्डस्संपदा योजयति।

81 दण्डाभावे मन्त्रिवर्गाभावः।

82 न दण्डादकार्याणि कुर्वन्ति।

83 दण्डनीत्यामायत्तमात्मरक्षणम्।

84 आत्मनि रक्षिते सर्वं रक्षितं भवति।

85 आत्मायत्तौ वृद्धिविनाशौ।

86 दण्डो हि विज्ञाने प्रणीयते।

87 दुर्बलोपि राजा नावमन्तव्यः।

88 नास्त्यग्नेर्दौर्बल्यम्।

---

[1] V. 4. [2] I. 6 अवश्यान्द्रियः.

89 दण्डे प्रतीयते वृत्तिः ।
90 वृत्तिमूलमर्थलाभः ।
91 अर्थमूलौ धर्मकामौ ।
92 अर्थमूलं कार्यम् ।
93 यदल्पप्रयत्नात्कार्यसिद्धिर्भवति ।
94 उपायपूर्वं न दुष्करं स्यात् ।
95 अनुपायपूर्वं कार्यं कृतमपि नश्यति ।
96 कार्यार्थिनामुपाय एव सहायः ।
97 कार्यं पुरुषकारेण लक्ष्यं संपद्यते ।
98 पुरुषकारमनुवर्तते दैवम् ।
99 दैवं विनाऽतिप्रयत्नं करोति यत्तद्विफलम् ।
100 असमाहितस्य वृत्तिर्न विद्यते ।
101 पूर्वं निश्चित्य पश्चात्कार्यमारभेत् ।
102 कार्यान्तरे दीर्घसूत्रता न कर्तव्या ।
103 न चलचित्तस्य कार्यावाप्तिः ।
104 हस्तगतावमाननात्कार्यव्यतिक्रमो भवति ।
105 दोषवर्जितानि कार्याणि दुर्लभानि ।
106 दुरनुबन्धं कार्यं नारभेत ।
107 कालवित् कार्यं साधयेत् ।
108 कालातिक्रमात्काल एव फलं पिबति ।
109 क्षणं प्रति कालविक्षेपं न कुर्यात्सर्वकृत्येषु ।
110 देशफलविभागौ ज्ञात्वा कार्यमारभेत ।
111 दैवहीनं कार्यं सुसाध्यमपि दुस्साध्यं भवति ।
112 नीतिज्ञो देशकालौ परीक्षेत ।
113 परीक्ष्यकारिणि श्रीश्चिरं तिष्ठति ।

114 सर्वाश्च संपदः सर्वोपायेन परिग्रहेत् ।
115 भाग्यवन्तमपरीक्ष्यकारिणं श्रीः परित्यजति ।
116 ज्ञानानुमानैश्च परीक्षा कर्तव्या ।
117 यो यस्मिन् कर्मणि कुशलस्तं तस्मिन्नेव योजयेत् ।
118 दुस्साधमपि सुसाधं करोत्युपायज्ञः ।
119 अज्ञानिना कृतमपि न बहुमन्तव्यम् ।
120 याहच्छिकत्वात् कृमिरपि रूपान्तराणि करोति ।
121 सिद्धस्यैव कार्यस्य प्रकाशनं कर्तव्यम् ।
122 ज्ञानवतामपि दैवमानुषदोषात्कार्याणि दुष्यन्ति ।
123 दैवं शान्तिकर्मणा प्रतिषेद्धव्यम् ।
124 मानुषीं कार्यविपत्तिं कौशलेन विनिवारयेत् ।
125 कार्यविपत्तौ दोषान् वर्णयन्ति बालिशाः ।
126 कार्यार्थिना दाक्षिण्यं न कर्तव्यम् ।
127 क्षीरार्थी वत्सो मातुरूधः प्रतिहन्ति ।
128 अप्रयत्नात्कार्यविपत्तिर्भवेत् ।
129 न दैवप्रमाणानां कार्यसिद्धिः ।
130 कार्यबाह्यो न पोषयत्याश्रितान् ।
131 यः कार्यं न पश्यति सोऽन्धः ।
132 प्रत्यक्षपरोक्षानुमानैः कार्याणि परीक्षेत ।
133 अपरीक्ष्यकारिणं श्रीः परित्यजति ।
134 परीक्ष्य तार्या विपत्तिः ।
135 स्वशक्तिं ज्ञात्वा कार्यमारभेत ।
136 स्वजनं तर्पयित्वा यश्शेषभोजी सोऽमृतभोजी ।
137 सर्वानुष्ठानादायमुखानि[1] वर्धन्ते ।

[1] II. 6.

138 नास्ति भीरोः कार्यचिन्ता ।

139 स्वामिनश्शील ज्ञात्वा कार्यार्थी कार्यं साधयेत् ।

140 धेनोश्शीलज्ञः क्षीरं भुङ्क्ते ।

141 क्षुद्रे गुह्यप्रकाशनमात्मवान्न कुर्यात् ।

142 आश्रितैरप्यवमन्यते मृदुस्वभावः[1] ।

143 तीक्ष्णदण्डस्सर्वैरुद्वेजनीयो भवति ।[1]

144 यथार्हदण्डकारी स्यात्[1] ।

145 अल्पसारं श्रुतवन्तमपि न बहुमन्यते लोकः ।

146 अतिभारः पुरुषमवसादयति ।

147 यस्संसदि परदोषं शंसति स स्वदोषबहुत्वं प्रख्यापयति ।

148 आत्मानमेव नाशयत्यनात्मवतां कोपः ।

149 नास्त्यप्राप्यं सत्यवताम् ।

150 साहसेन न कार्यसिद्धिर्भवति ।

151 व्यसनार्तो विस्मरत्यप्रवेशेन ।

152 नास्त्यनन्तरायः कालविक्षेपे ।

153 असंशयविनाशात्संशयविनाशश्श्रेयान् ।

154 अपरधनानि निक्षेप्तुः केवलं स्वार्थम् ।

155 दानं धर्मः ।

156 नार्यागतोऽर्थवद्विपरीतोऽनर्थभावः ।

157 यो धर्मार्थौ न विवर्धयति स कामः ।

158 तद्विपरीतोऽनर्थसेवी ।

159 ऋजुस्वभावपरो जनेषु दुर्लभः ।

160 अवमानेनागतमैश्वर्यमवमन्यते साधुः ।

161 बहूनपि गुणानेकदोषो ग्रसति ।

---

[1] I. 4.

162 महात्मना परेण साहसं न कर्तव्यम् ।

163 कदाचिदपि चारित्रं न लङ्घयेत् ।

164 क्षुधाऽऽर्तो न तृणं चरति सिंहः ।

165 प्राणादपि प्रत्ययो रक्षितव्यः ।

166 पिशुनश्श्रोता पुत्रदारैरपि त्यज्यते ।

167 बालादप्यर्थजातं शृणुयात् ।

168 सत्यमप्यश्रद्धेयं न वदेत् ।

169 नाल्पदोषाद्बहुगुणास्त्यज्यन्ते ।

170 विपश्चित्स्वपि सुलभा दोषाः ।

171 नास्ति रत्नमखण्डितम् ।

172 मर्यादातीतं न कदाचिदपि विश्वसेत् ।

173 अप्रिये कृतं प्रियमपि द्वेष्यं भवति ।

174 नमन्त्यपि तुलाकोटिः कूपोदकक्षयं करोति ।

175 सतां मतं नातिक्रमेत् ।

176 गुणवदाश्रयान्निर्गुणोपि गुणी भवति ।

177 क्षीराश्रितं जलं क्षीरमेव भवति ।

178 मृत्पिण्डोपि पाटलिगन्धमुत्पादयति ।

179 रजतं कनकसंगात्कनकं भवति ।

180 उपकर्तर्यपकर्तुमिच्छत्यबुधः ।

181 न पापकर्मणामाक्रोशभयम् ।

182 उत्साहवतां शत्रवोपि वशीभवन्ति ।

183 विक्रमधना राजानः ।

184 नास्त्यलसस्यैहिकामुष्मिकम् ।

185 निरुत्साहाद्दैवं पतति ।

186 मत्स्यार्थीव[1] जलमुपयुज्यार्थं गृह्णीयात् ।

187 अविश्वस्तेषु[1] विश्वासो न कर्तव्यः ।

188 विषं विषमेव सार्वकालम् ।

189 अर्थसमादाने वैरिणां सङ्ग एव न कर्तव्यः ।

190 अर्थसिद्धौ वैरिणं न विश्वसेत् ।

191 अर्थाधीन एव नियतसंबन्धः ।

192 शत्रोरपि सुतस्सखा रक्षितव्यः ।

193 यावच्छत्रोश्छिद्रं पश्यति तावद्धस्तेन वा स्कन्धेन वा वाह्यः।

194 शत्रुं छिद्रे परिहरेत्[2] ।

195 आत्मच्छिद्रं न प्रकाशयेत् ।

196 छिद्रप्रहारिणश्शत्रवः ।

197 हस्तगतमपि शत्रुं न विश्वसेत् ।

198 स्वजनस्य दुर्वृत्तं निवारयेत् ।

199 स्वजनावमानोपि मनस्विनां दुःखमावहति ।

200 एकाङ्गदोषः पुरुषमवसादयति ।

201 शत्रुं जयति सुवृत्तता ।

202 निकृतिप्रिया नीचाः ।

203 नीचस्य मतिर्न दातव्या ।

204 तेषु विश्वासो न कर्तव्यः ।

205 सुपूजितोपि दुर्जनः पीडयत्येव ।

206 चन्दनादीनपि दावोऽग्निर्दहत्येव ।

207 कदाऽपि पुरुषं नावमन्येत ।

208 क्षन्तव्यमिति पुरुषं न बाधेत ।

209 भर्त्राऽधिकं रहस्युक्तं वक्तुमिच्छन्त्यबुद्धयः ।

210 अनुरागस्तु फलेन[3] सूच्यते ।

---

[1] अविरूव्येषु, [2] प्रहरेत्, इति सुपाठः. [3] हितेन,

211 आज्ञाफलमैश्वर्यम् ।

212 दातव्यमपि बालिशः परिक्लेशेन दास्यति ।

213 महदैश्वर्यं प्राप्याप्यधृतिमान् विनश्यति ।

214 नास्त्यधृतेरैहिकामुष्मिकम् ।

215 न दुर्जनैस्सह संसर्गः कर्तव्यः ।

216 शौण्डहस्तगतं पयोऽप्यवमन्येत ।

217 कार्यसंकटेष्वर्थव्यवसायिनी बुद्धिः ।

218 मितभोजनं स्वास्थ्यम् ।

219 पथ्यमप्यपथ्याजीर्णे नाश्नीयात् ।

220 जीर्णभोजिनं व्याधिर्नोपसर्पति ।

221 जीर्णशरीरे वर्धमानं व्याधिं नोपेक्षेत ।

222 अजीर्णे भोजनं दुःखम् ।

223 शत्रोरपि विशिष्यते व्याधिः ।

224 दानं निधानमनुगामि ।

225 पटुतरे तृष्णापरे सुलभमतिसन्धानम् ।

226 तृष्णाया मतिश्छाद्यते ।

227 कार्यबहुत्वे बहुफलमायतिकं कुर्यात् ।

228 स्वयमेवावस्कन्नं कार्यं निरीक्षेत ।

229 मूर्खेषु साहसं नियतम् ।

230 मूर्खेषु विवादो न कर्तव्यः ।

231 मूर्खेषु मूर्खवत्कथयेत् ।

232 आयसैरायसं छेद्यम् ।

233 नास्त्यधीमतस्सखा ।

234 धर्मेण धार्यते लोकः ।

236 दया धर्मस्य जन्मभूमिः ।

237 धर्ममूले सत्यदाने ।

238 धर्मेण जयति लोकान् ।

239 मृत्युरपि धर्मिष्ठं रक्षति ।

240 धर्माद्विपरीतं पापं यत्रयत्र प्रसज्यते तत्र धर्मावमतिर्महती प्रसज्यते ।

241 उपस्थितविनाशानां प्रकृत्या [1] कार्येण लक्ष्यते ।

242 आत्मविनाशं सूचयत्यधर्मबुद्धिः ।

243 पिशुनवादिनो रहस्यम् [2] ।

244 पररहस्यं नैव श्रोतव्यम् ।

245 वल्लभस्य कारकत्वमधर्मयुक्तम् ।

246 स्वजनेष्वतिक्रमो न कर्तव्यः ।

247 माताऽपि दुष्टा त्याज्या ।

248 स्वहस्तोपि विषदिग्धश्छेद्यः ।

249 परोपि च हितो बन्धुः ।

250 कक्षादप्यौषधं गृह्यते ।

251 नास्ति चोरेषु विश्वासः ।

252 अप्रतीकारेष्वनादरो न कर्तव्यः ।

253 व्यसनं मनागपि बाधते ।

254 अमरवदर्थजातमार्जयेत् ।

255 अर्थवान् सर्वलोकस्य बहुमतः ।

256 महेन्द्रमप्यर्थहीनं न बहुमन्यते लोकः ।

257 दारिद्र्यं खलु पुरुषस्य जीवितं मरणम् ।

258 विरूपोऽर्थवान् सुरूपः ।

---

1 प्रकृतिराकारेण इति सुपाठः   2 न रहस्यम् इति सुगमः

259 अदातारमप्यर्थवन्तमर्थिनो न त्यजन्ति ।
260 अकुलीनोऽपि कुलीनाद्विशिष्टः ।
261 नास्त्यमानभयमनार्यस्य ।
262 न चेतनवतां वृत्तिभयम् ।
263 न जितेन्द्रियाणां विषयभयम् ।
264 न कृतार्थानां मरणभयम् ।
265 कस्यचिदर्थं स्वमिव मन्यते साधुः ।
266 परविभवेष्वादरो न कर्तव्यः ।
267 परविभवेष्वादरोऽपि नाशमूलम् ।
268 पलालमपि परद्रव्यं न हर्तव्यम् ।
269 परद्रव्यापहरणमात्मद्रव्यनाशहेतु ।
270 न चौर्यात्परं मृत्युपाशः ।
271 यवागूरपि प्राणधारणं करोति काले ।
272 न मृतस्यौषधं प्रयोजनम् ।
273 समकाले स्वयमपि प्रभुत्वस्य प्रयोजनं भवति ।
274 नीचस्य विद्याः पापकर्मणि योजयन्ति ।
275 पयःपानमपि विषवर्धनं भुजङ्गस्य नामृतं स्यात् ।
276 न हि धान्यसमो ह्यर्थः ।
277 न क्षुधासमश्शत्रुः ।
278 अकृतेर्नियता क्षुत् ।
279 नास्त्यभक्ष्यं क्षुधितस्य ।
280 इन्द्रियाणि जरावशं कुर्वन्ति ।
281 सानुक्रोशं भर्तारमाजीवेत् ।
282 लुब्धसेवी पावकेच्छया खद्योतं धमति ।

284 पुरुषस्य मैथुनं जरा ।

285 स्त्रीणाममैथुनं जरा ।

286 न नीचोत्तमयोर्विवाहः ।

287 अगम्यागमनादायुर्यशःपुण्यानि क्षीयन्ते ।

288 नास्त्यहङ्कारसमश्शत्रुः ।

289 संसदि शत्रुं न परिक्रोशेत् ।

290 शत्रुव्यसनं श्रवणसुखम् ।

291 अधनस्य बुद्धिर्न विद्यते ।

292 हितमप्यधनस्य वाक्यं न गृह्यते ।

293 अधनस्स्वभार्ययाऽप्यवमन्यते ।

294 पुष्पहीनं सहकारमपि नोपासते भ्रमराः ।

295 विद्या धनमधनानाम् ।

296 विद्या चोरैरपि न ग्राह्या ।

297 विद्यया ख्यापिता ख्यातिः ।

298 यशश्शरीरं न विनश्यति ।

299 यः परार्थमुपसर्पति स सत्पुरुषः ।

300 इन्द्रियाणां प्रशमं शास्त्रम् ।

301 अशास्त्रकार्यवृत्तौ शास्त्राङ्कुशं निवारयति ।

302 नीचस्य विद्या नोपेतव्या ।

303 म्लेच्छभाषणं न शिक्षेत ।

304 म्लेच्छानामपि सुवृत्तं ग्राह्यम् ।

305 गुणे न मत्सरः कर्तव्यः ।

306 शत्रोरपि सुगुणो ग्राह्यः ।

307 विषादप्यमृतं ग्राह्यम् ।

308 अवस्थया पुरुषस्संमान्यते ।

309 स्थान एव नराः पूज्यन्ते ।

310 आर्यवृत्तमनुतिष्ठेत् ।

311 कदाऽपि मर्यादां नातिक्रमेत् ।

312 नास्त्यर्घः पुरुषरत्नस्य ।

313 न स्त्रीरत्नसमं रत्नम् ।

314 सुदुर्लभं रत्नम् ।

315 अयशो भयं भयेषु ।

316 नास्त्यलसस्य शास्त्राधिगमः ।

317 न स्त्रैणस्य स्वर्गाप्तिर्धर्मकृत्यं च ।

318 स्त्रियोपि स्त्रैणमवमन्यन्ते ।

319 न पुष्पार्थी सिञ्चति शुष्कतरुम् ।

320 अद्रव्यप्रयत्नो वालुकाक्वाथनादनन्यः ।

321 न महाजनहासः कर्तव्यः ।

322 कार्यसंपदं निमित्तानि सूचयन्ति ।

323 नक्षत्रादपि निमित्तानि विशेषयन्ति ।

324 न त्वरितस्य नक्षत्रपरीक्षा ।

325 परिचये दोषा न छाद्यन्ते ।

326 स्वयमशुद्धः परानाशङ्कते ।

327 स्वभावो दुरतिक्रमः ।

328 अपराधानुरूपो दण्डः ।

329 कथानुरूपं प्रतिवचनम् ।

330 विभवानुरूपमाभरणम् ।

331 कुलानुरूपं वृत्तम् ।

332 कार्यानुरूपः प्रयत्नः ।

333 [illegible]

334 वयोऽनुरूपो वेषः ।

335 स्वाम्यनुकूलो भृत्यः ।

336 भर्तृवशवर्तिनी भार्या ।

337 गुरुवशानुवर्ती शिष्यः ।

338 पितृवशानुवर्ती पुत्रः ।

339 अत्युपचारश्शाङ्कितव्यः ।

340 स्वामिनि कुपिते स्वामिनमेवानुवर्तेत ।

341 मातृताडितो वत्सो मातरमेवानुरोदिति ।

342 स्नेहवतस्स्वल्पो हि रोषः ।

343 आत्मच्छिद्रं न पश्यति परच्छिद्रमेव पश्यति बालिशः ।

344 सोपचारः कैतवः ।

345 काम्यैर्विशेषैरुपचरणमुपचारः ।

346 चिरपरिचितानामत्युपचारश्शाङ्कितव्यः ।

347 गौर्दुष्करा श्वसहस्रादेकाकिनी श्रेयसी ।

348 श्वोमयूरादद्यकपोतो वरः ।

349 अतिसंगो दोषमुत्पादयति ।

350 सर्वं जयत्यक्रोधः ।

351 यद्यपकारिणि कोपः कोपे कोप एव कर्तव्यः ।

352 मतिमत्सु मूर्खमित्रगुरुवल्लभेषु विवादो न कर्तव्यः ।

353 नास्त्यपिशाचमैश्वर्यम् ।

354 नास्ति धनवतां सुकर्मसु श्रमः ।

355 नास्ति गतिश्रमो यानवताम् ।

356 अलोहमयं निगळं कळत्रम् ।

357 यो यस्मिन् कुशलस्स तस्मिन् योक्तव्यः ।

358 दुष्कळत्रं मनस्विनां शरीरकर्शनम् ।

359 अप्रमत्तो दारान् निरीक्षेत ।

360 स्त्रीषु किंचिदपि न विश्वसेत् ।

361 न समाधिः स्त्रीषु लोकज्ञता च ।

362 गुरूणां माता गरीयसी ।

363 सर्वावस्थासु माता भर्तव्या ।

364 वैदुष्य[1] मलङ्कारेणाच्छाद्यते ।

365 स्त्रीणां भूषणं लज्जा ।

366 विप्राणां भूषणं वेदः ।

367 सर्वेषां भूषणं धर्मः ।

368 भूषणानां भूषणं सविनया विद्या ।

369 अनुपद्रवं देशमावसेत् ।

370 साधुजनबहुलो देशः ।

371 राज्ञो भेतव्यं सार्वकालम् ।

372 न राज्ञः परं दैवतम् ।

373 सुदूरमपि दहति राजवह्निः ।

374 रिक्तहस्तो न राजानमभिगच्छेत् ।

375 गुरुं च दैवं च ।

376 कुटुम्बिनो भेतव्यम् ।

377 गन्तव्यं च सदा राजकुलम् ।

378 राजपुरुषैस्संबन्धं कुर्यात् ।

379 राजदासी न सेवितव्या ।

380 न चक्षुषाऽपि राजानं निरीक्षेत ।

381 पुत्रे गुणवति कुटुम्बिनः स्वर्गः ।

382 पुत्रा विद्यानां पारं गमयितव्याः ।

[1] वैरूप्य.

383 जनपदार्थं ग्रामं त्यजेत् ।

384 ग्रामार्थं कुटुम्बस्त्यज्यते ।

385 अतिलाभः पुत्रलाभः ।

386 दुर्गतेः पितरौ रक्षति स पुत्रः ।

387 कुलं प्रख्यापयति पुत्रः ।

388 नानपत्यस्य स्वर्गः ।

389 या प्रसूते भार्या [1] ।

390 तीर्थसमवाये पुत्रवतीमनुगच्छेत् [2] ।

391 सतीर्थाभिगमनाद्ब्रह्मचर्यं नश्यति ।

392 न परक्षेत्रे बीजं विनिक्षिपेत् ।

393 पुत्रार्था हि स्त्रियः ।

394 स्वदासीपरिग्रहो हि स्वदासभावः ।

395 उपस्थितविनाशः पथ्यवाक्यं न शृणोति ।

396 नास्ति देहिनां सुखदुःखाभावः ।

397 मातरमिव वत्साः सुखदुःखानि कर्तारमेवानुगच्छन्ति ।

398 तिलमात्रमप्युपकारं शैलमात्रं मन्यते साधुः ।

399 उपकारोऽनार्येष्वकर्तव्यः ।

400 प्रत्युपकारभयादनार्यश्शत्रुर्भवति ।

401 स्वल्पमप्युपकारकृते प्रत्युपकारं कर्तुमार्यो न स्वपिति ।

402 न कदाऽपि देवताऽवमन्तव्या ।

403 न चक्षुषः समं ज्योतिरस्ति ।

404 चक्षुर्हि शरीरिणां नेता ।

405 अपचक्षुषः किं शरीरेण ।

406 नाप्सु मूत्रं कुर्यात् ।

[1] सा भार्या. [2] अर्थशास्त्र. III. 2 तीर्थसमवाये........जीवत्पुत्रां गच्छेत् ।

407 न नग्नो जलं प्रविशेत् ।

408 यथा शरीरं तथा ज्ञानम् ।

409 यथा बुद्धिस्तथा विभवः ।

410 अग्नावग्निं न निक्षिपेत् ।

411 तपस्विनः पूजनीयाः ।

412 परदारान् न गच्छेत् ।

413 अन्नदानं भ्रूणहत्यामपि मार्ष्टि ।

414 न वेदबाह्यो धर्मः ।

415 कदाचिदपि[1] धर्मं निषेवेत ।

416 स्वर्गं नयति सूनृतम् ।

417 नास्ति सत्यात्परं तपः ।

418 सत्यं स्वर्गस्य साधनम् ।

419 सत्येन धार्यते लोकः ।

420 सत्याद्देवो वर्षति ।

421 नानृतात्पातकं परम् ।

422 न मीमांस्या गुरवः ।

423 खलत्वं नोपेयात् ।

424 नास्ति खलस्य मित्रं ।

425 लोकयात्रा दरिद्रं बाधते ।

426 अतिशूरो दानशूरः ।

427 गुरुदेवब्राह्मणेषु भक्तिर्भूषणम् ।

428 सर्वस्य भूषणं विनयः ।

429 अकुलीनोपि विनीतः कुलीनाद्विशिष्टः ।

430 आचारादायुर्वर्धते कीर्तिश्च ।

---

[1] कथंचिदपि.

431 प्रियमप्यहितं न वक्तव्यम् ।
432 बहुजनविरुद्धमेकं नानुवर्तेत ।
433 न दुर्जनेषु भागधेयः कर्तव्यः ।
434 न कृतार्थेषु नीचेषु संबन्धः ।
435 ऋणशत्रुव्याधिष्वशेषः कर्तव्यः ।
436 भूत्याऽनुवर्तनं पुरुषस्य रसायनम् ।
437 नार्थिष्ववज्ञा कार्या ।
438 दुष्करं कर्म कारयित्वा कर्तारमवमन्यते नीचः ।
439 नाकृतज्ञस्य नरकान्निवर्तनम् ।
440 जिह्वायत्तौ वृद्धिविनाशौ ।
441 विषामृतयोराकरी जिह्वा ।
442 प्रियवादिनो न शत्रुः ।
443 स्तुता अपि देवतास्तुष्यन्ति ।
444 अनृतमपि दुर्वचनं चिरं तिष्ठति ।
445 राजद्विष्टं न च वक्तव्यम् ।
446 श्रुतिसुखात् कोकिलालापात्तुष्यन्ति ।
447 स्वधर्महेतुस्सत्पुरुषः ।
448 नास्त्यर्थिनो गौरवम् ।
449 स्त्रीणां भूषणं सौभाग्यम् ।
450 शत्रोरपि न पतनीया वृत्तिः ।
451 अप्रयत्नोदकं क्षेत्रम् ।
452 एरण्डमवलम्ब्य कुञ्जरं न कोपयेत् ।
453 अतिप्रवृद्धा शाल्मली वारणस्तम्भो न भवति ।
454 अतिदीर्घोऽपि कर्णिकारो न मुसली ।
455 अतिदीप्तोऽपि खद्योतो न पावकः ।

456 न प्रवृद्धत्वं गुणहेतुः ।

457 सुजीर्णोऽपि पिचुमन्दो न शङ्कुलायते ।

458 यथा बीजं तथा निष्पत्तिः ।

459 यथा श्रुतं तथा बुद्धिः ।

460 यथा कुलं तथाऽऽचारः ।

461 संस्कृतः पिचुमन्दो न सहकारो भवति ।

462 न चागतं सुखं त्यजेत् ।

463 स्वयमेव दुःखमधिगच्छति ।

464 रात्रिचारणं न कुर्यात् ।

465 न चार्धरात्रं स्वपेत् ।

466 तद्विद्वद्भिः परीक्षेत ।

467 परगृहमकारणतो न प्रविशेत् ।

468 ज्ञात्वाऽपि दोषमेव करोति लोकः ।

469 शास्त्रप्रधाना लोकवृत्तिः ।

470 शास्त्राभावे शिष्टाचारमनुगच्छेत् ।

471 नाचरिताच्छास्त्रं गरीयः ।

472 दूरस्थमपि चारचक्षुः पश्यति राजा ।

473 गतानुगतिको लोकः ।

474 यमनुजीवेत् तं नापवदेत् ।

475 तपस्सार इन्द्रियनिग्रहः ।

476 दुर्लभस्स्त्रीबन्धनान्मोक्षः ।

477 स्त्री नाम सर्वाशुभानां क्षेत्रम् ।

478 न च स्त्रीणां पुरुषपरीक्षा ।

479 स्त्रीणां मनः क्षणिकम् ।

480 अशुभद्वेषिणः स्त्रीषु न प्रसक्ताः [1] ।

---

[1] प्रसक्तिः.

481 यज्ञफलज्ञास्त्रिवेदविदः ।

482 स्वर्गस्थानं न शाश्वतं यावत्पुण्यफलम् ।

483 न च स्वर्गपतनात्परं दुःखम् ।

484 देही देहं त्यक्त्वा ऐन्द्रपदं न वाञ्छति ।

485 दुःखानामौषधं निर्वाणम् ।

486 अनार्यसंबन्धाद्वरमार्यशत्रुता ।

487 निहन्ति दुर्वचनं कुलम् ।

488 न पुत्रसंस्पर्शात्परं सुखम् ।

489 विवादे धर्ममनुस्मरेत् ।

490 निशान्ते कार्यं चिन्तयेत् ।

491 प्रदोषे न संयोगः कर्तव्यः ।

492 उपस्थितविनाशः दुर्नयं मन्यते ।

493 क्षीरार्थिनः किं करिण्या ।

494 न दानसमं वश्यम् ।

495 परायत्तेषूत्कण्ठां न कुर्यात् ।

496 असत्समृद्धिरसद्भिरेव भुज्यते ।

497 निम्बफलं काकैर्भुज्यते ।

498 नाम्भोधिस्तृष्णामपोहति ।

499 वालुका अपि स्वगुणमाश्रयन्ते ।

500 सन्तोऽसत्सु न रमन्ते ।

501 हंसः प्रेतवने न रमते ।

502 अर्थार्थं प्रवर्तते लोकः ।

503 आशया बध्यते लोकः ।

504 न चाशापरैश्श्रीस्सह तिष्ठति ।

505 आशापरे न धैर्यम् ।

506 दैन्यान्मरणमुत्तमम् ।

507 आशा लज्जां व्यपोहति ।

508 न मात्रा सह वासः कर्तव्यः ।

509 आत्मा न स्तोतव्यः ।

510 न दिवा स्वप्नं कुर्यात् ।

511 न चासन्नमपि पश्यत्यैश्वर्यान्धः न शृणोतीष्टं वाक्यम् ।

512 स्त्रीणां न भर्तुः परं दैवतम् ।

513 तदनुवर्तनमुभयसौख्यम् ।

514 अतिथिमभ्यागतं पूजयेद्यथाविधि ।

515 नास्ति हव्यस्य व्याघातः ।

516 शत्रुर्मित्रवत्प्रतिभाति ।

517 मृगतृष्णा जलवद्भाति ।

518 दुर्मेधसामसच्छास्त्रं मोहयति ।

519 सत्संगः स्वर्गवासः ।

520 आर्यः स्वमिव परं मन्यते ।

521 रूपानुवर्ती गुणः ।

522 यत्र सुखेन वर्तते तदेव स्थानम् ।

523 विश्वासघातिनो न निष्कृतिः ।

524 दैवायत्तं न शोचेत् ।

525 आश्रितदुःखमात्मन इव मन्यते साधुः ।

526 हृद्गतमाच्छाद्यान्यद्वदत्यनार्यः ।

527 बुद्धिहीनः पिशाचतुल्यः ।

528 असहायः पथि न गच्छेत् ।

529 पुत्रो न स्तोतव्यः ।

530 स्वामी स्तोतव्योऽनुजीविभिः ।

531 धर्मकृत्येष्वपि स्वामिन एव घोषयेत् ।

532 राजाज्ञां नातिलङ्घयेत् ।

533 यथाऽऽज्ञप्तं तथा कुर्यात् ।

534 नास्ति बुद्धिमतां शत्रुः ।

535 आत्मच्छिद्रं न प्रकाशयेत् ।

536 क्षमावानेव सर्वं साधयति ।

537 आपदर्थं धनं रक्षेत् ।

538 साहसवतां प्रियं कर्तव्यम् ।

539 श्वः कार्यमद्य कुर्वीत ।

540 आपराह्णिकं पूर्वाह्ण एव कर्तव्यम् ।

541 व्यवहारानुलोमो धर्मः ।

542 सर्वज्ञता लोकज्ञता ।

543 शास्त्रज्ञोऽप्यलोकज्ञो मूर्खतुल्यः ।

544 शास्त्रप्रयोजनं तत्त्वदर्शनम् ।

545 तत्त्वज्ञानं कार्यमेव प्रकाशयति ।

546 व्यवहारे पक्षपातो न कार्यः ।

547 धर्मादपि व्यवहारो गरीयान् ।

548 आत्मा हि व्यवहारस्य साक्षी ।

549 सर्वसाक्षी ह्यात्मा ।

550 न स्यात्कूटसाक्षी ।

551 कूटसाक्षिणो नरके पतन्ति ।

552 प्रच्छन्नपापानां साक्षिणो महाभूतानि ।

553 आत्मनः पापमात्मैव प्रकाशयति ।

554 व्यवहारेऽन्तर्गतमाकारस्सूचयति ।

555 आकारसंवरणं देवानामशक्यम् ।

556 चोरराजपुरुषेभ्यो वित्तं रक्षेत् ।

557 दुर्दर्शना हि राजानः प्रजा नाशयन्ति ।

558 सुदर्शना हि राजानः प्रजा रञ्जयन्ति ।

559 न्याययुक्तं राजानं मातरं मन्यन्ते प्रजाः ।

560 तादृशस्स राजा इह सुखं ततस्स्वर्गमाप्नोति ।

561 अहिंसालक्षणो धर्मः ।

562 स्वशरीरमपि परशरीरं मन्यते साधुः ।

563 मांसभक्षणमयुक्तं सर्वेषाम् ।

564 न संसारभयं ज्ञानवताम् ।

565 विज्ञानदीपेन संसारभयं निवर्तते ।

566 सर्वमनित्यं भवति ।

567 कृमिशकृन्मूत्रभाजनं शरीरं पुण्यपापजन्महेतुः ।

568 जन्ममरणादिषु दुःखमेव ।

569 तपसा स्वर्गमाप्नोति ।

570 क्षमायुक्तस्य तपो विवर्धते ।

571 तस्मात्सर्वेषां कार्यसिद्धिर्भवति ।

॥ इति चाणक्यसूत्राणि ॥

